# मानसारम्

संग्रहः

उत्पत्तिरक्षणलयान् जगतां प्रकुर्वन् भूवारिवह्निमरुतो गगनं च सूते
नानासुरेश्वरकिरीटविलोलमालाभृङ्गावलीढचरणाम्बुरुहं नमामि १

गङ्गाशिरःकमलभूकमलेक्षणेन्द्रगीर्वाणनारदमुखैरखिलैर्मुनीन्द्रैः
प्रोक्तं समस्ततरवस्त्वपि वास्तुशास्त्रं तन्मानसारऋषिणापि हि लक्ष्यते स्म २

मानोपकरणं चादौ शिल्पलक्षणपूर्वकम्
अथ वास्तुप्रकरणं भूपरीक्षाविधिं तथा ३

भूसंग्रहस्ततः प्रोक्तं शङ्कुस्थापनलक्षणम्
देवादीनां स्थापनाय पदविन्यासलक्षणम् ४

बलिकर्मविधिं चैव ग्रामादीनां च लक्षणम्
नगरीलक्षणं चैव भूमिलम्बविधानकम् ५

गर्भन्यासविधिं चैव चोपपीठस्य लक्षणम्
अधिष्ठानविधिं चैव पादमानस्य लक्षणम् ६

प्रस्तरस्य विधिं चैव सन्धिकर्मस्य लक्षणम्
विमानलक्षणं चैवमेकभूम्याश्च लक्षणम् ७

द्वितलस्य विधिं चैव त्रितलस्य विधानकम्
चतुस्तलविधिं चैव पञ्चभूम्याश्च लक्षणम् ८

षट्सप्तलकं चैवमष्टभूनवभूमिकम्
दशभूमिविधानं च रुद्रभूमिविधानकम् ९

तलं द्वादशकं चैव प्राकाराणां च लक्षणम्
परिवारलक्षणं चैव गोपुराणां च लक्षणम् १०

मण्डपस्य विधानं च शालानां चैव लक्षणम्
विन्यासश्च गृहस्याथ गृहप्रवेशलक्षणम् ११

द्वारस्थानविधिं चैव द्वारमानस्य लक्षणम्
राजहर्म्यविधिं चैव राज्याङ्गस्य तु लक्षणम् १२

भूपतिलक्षणं चैव यानादिरथलक्षणम्
शयनस्य लक्षणं चैव सिंहासनस्य लक्षणम् १३

तोरणं मध्यरङ्गस्य कल्पवृक्षस्य लक्षणम्
अभिषेकलक्षणं चैव सर्वभूषणलक्षणम् १४

ब्रह्मादीनां त्रिमूर्तेश्च लक्षणं लिङ्गलक्षणम्
पीठस्य लक्षणं चैव शक्तीनां लक्षणं तथा १५

बौद्धस्य जैनिकानां च लक्षणं मुनिलक्षणम्
यक्षाविद्याधरादीनां लक्षणं भक्तलक्षणम् १६

ब्रह्मादीनां च देवानां तत्तद्वाहनलक्षणम्
नयनोन्मीलनं चैव लक्षणं वक्ष्यते क्रमात् १७

मानसार-ऋषि कृत शास्त्रं मानसारमुनिनामकमासीत्
तत्तु शिल्पिवरदेशिकमुख्यैः स्वीकृतं सकललक्षणपूर्वम् १८
इति मानसारे वास्तुशास्त्रे संग्रहो नाम प्रथमोऽध्यायः

## शिल्पिलक्षणपूर्वकं मानोपकरणविधानम्

शिल्पिनां लक्षणं वक्ष्ये मानोपकरण क्रमात्
परःशिवसकाशाद्धि ब्रह्मा इन्द्रोऽपि लोककृत् १

स महाविश्वकर्मेति ईश्वरेणैव कीर्तितः
स एवायं विश्वकर्मा ब्रह्माण्डं सृजते मुहुः २

विश्वकर्मा चतुर्वर्णं जाति ब्रह्मादिवर्णवत्
पूर्वोक्तवर्णं चत्वारि नामं वक्ष्ये पृथक् पृथक् ३

विश्वभूरिति नामैतत्पूर्ववक्त्रं प्रकीर्तितम्
दक्षिणे विश्वविद्वक्त्रं विश्वस्तश्च तथोत्तरे ४

पश्चिमे विश्वस्त्रष्ट्राख्यं वक्त्रमेवं चतुर्विधम्
एतेभ्यः प्रथमो जातो विश्वकर्मा चतुष्टयः ५

पूर्वानने विश्वकर्मा जायते दक्षिणे मयः
उत्तरस्य मुखे त्वष्टा पश्चिमे तु मनुः स्मृतः ६

उपयेमे विश्वकर्मा इन्द्रस्य तनयां तदा
मयः सुरेन्द्रतनयामुपयेमे क्रमात्ततः ७

त्वष्टा वैश्रवणसुतामुपयेमे त्वनन्तरम्
मनुर्नलस्य तनयामुपयेमे तु तुर्यकम् ८

विश्वकर्माख्यनाम्नोस्य पुत्रः स्थपतिरुच्यते
मयस्य तनयः सूत्रग्राहीति परिकीर्तितः ९

त्वष्टुर्देव-ऋषेः पुत्रो वर्धकीति प्रकथ्यते
मनोः पुत्रस्तक्षकः स्यात्स्थपत्यादि चतुष्टयम्ये १०

स्थपतिस्तु स्वतुर्येभ्यस्त्रिभ्यो गुरुरिति स्मृतः
सूत्रग्राही गुरुर्द्वाभ्यां तुर्येभ्योऽद्य इति स्मृतः ११

तक्षकस्य गुरुर्नाम वर्धकीति प्रकीर्तितः
स्थपतिः सर्वशास्त्रज्ञः सूत्रग्राहीति सूत्रधृत् १२

वर्धकी मानकर्मज्ञः तक्षणात्तक्षकः स्मृतः

स्थपतिः स्थापनायार्हः वेदविच्छास्त्रपारगः १३

स्थापनाधिपतिर्यस्मात्तस्मात्स्थपतिरुच्यते
स्थपतेश्चाज्ञया सर्वे सूत्रग्राह्यादयः सदा १४

कुर्वन्ति शास्त्रदृष्टेन वास्तुवस्तु प्रयत्नतः
स्थपत्यादिचतुर्वर्णः शिल्पिभिः परिकीर्तितः १५

आचार्यलक्षणैर्युक्तं स्थपतिर्नाम धीयते
श्रुतज्ञः सूत्रग्राही च रेखाज्ञः शास्त्रवित्तमः १६

विचारज्ञः श्रुतज्ञश्च चित्रकर्मज्ञ वर्धकी
तक्षकः कर्मवित्सभ्यो बलबन्धूदयापरः १७

श्रुतिशास्त्र प्रकर्तव्य सर्वलक्षणमुच्यते
इहैव लोके कृतं विना शिल्पि विना गुरुम् १८

न लभ्यते तु यत्तस्मादेभ्यः सह कारयेत्
विना कृते तु सफलं भुक्ति मुक्तिं न विन्दति १९

शिल्पीनां लक्षणं प्रोक्तं मानोपकरणोच्यते
मुनीनां नयनोद्वीक्ष्य तत्परमाणुरुदाहृतम् २०

ताभिरष्टाभिर्गुणितं रथधूलिरिति स्मृतम्
रथधूल्यष्टमिलितं वालाग्रमिति स्मृतम् २१

वालाग्रैरष्टधायुक्तं लिक्षे परिकीर्तितम्
लिक्षेश्चाष्टभिरायुक्तं यूकं तमिति कथ्यते २२

यूकैरष्टाभिः प्रोक्तं यवमेवं विधीयते
यवैरष्टसमायुक्तमङ्गुलं तत्प्रकीर्तितम् २३

मानमात्रं त्रिधा प्रोक्तं यववृद्धिविशेषतः
षट्सप्ताष्टयवैरेतत्कनिष्ठोमध्यमोत्तमम् २४

अङ्गुलैर्द्वादशैर्युक्तं वितस्तिः परिकीर्तितम्
वितस्तियुग्मं किष्कुः स्यात्प्राजापत्योऽङ्गुलाधिकम् २५

षड्विंशत्यङ्गुलो हस्तो धनुर्मुष्टिरिति स्मृतम्
सप्तविंशतिकाङ्गुल्यं हस्तमुक्तं धनुर्ग्रहम् २६

चतुर्हस्तं धनुर्दण्डं दण्डाष्टं रज्जुमेव च
याने च शयने चैव किष्कुहस्तेन मानयेत् २७

विमानस्य तु सर्वेषां प्राजापत्येन मानयेत्
मानयेद्वास्तु यन्मानं धनुर्मुष्टिकरेण च २८

ग्रामादीनां न मानानां मानयेत्तद्धनुर्ग्रहम्
किष्कुहस्तेन यन्मानं मानयेद्विश्वतस्तु वा २९

शमी शाकं च चापं च खदिरः कृतमालकः
क्षीरिणी तिन्त्रिणी चैव हस्तदारु प्रकीर्तितम् ३०

दारुसंग्रहणं पश्चात्त्रिमासान्तं जले क्षिपेत्
क्षालयित्वा परिग्राह्यं तक्षकेण विदारयेत् ३१

तद्दारितं निकरं दारु तक्षयेच्चतुरश्रतः
एकहस्तसमं दीर्घं तदेकाङ्गुलविस्तृतम् ३२

घनमध्याङ्गुलं प्रोक्तं हस्त निश्चित्य योजयेत्
न वक्रं न भिन्नं च न रन्ध्रं स्निग्धमेव च ३३

क्रमुकं वाऽपि वेणुं च दण्डदारु प्रकीर्तितम्

हस्तदराडोभयोः प्रोक्तं विष्णुमूर्त्यधिदेवता ३४

नालिकेरफलैः शाता दर्भैर्न्यग्रोधवल्कलैः
कार्पासं किंशुकैःसूत्रैस्तालकेतक्रवल्कलैः ३५

यल्लभेद्वल्कलैर्ग्राह्यं रज्जुं संकल्पवित्तमः
पार्श्वादेकाङ्गुलं चैव तत्समं रज्जुनाहकम् ३६

देवभूसुरभूपानां त्रिवर्ति ग्रन्थिवर्जितम्
वणिजां शूद्रजातीनां रज्जुरेकद्विवर्जिता ३७

वासुकी रज्जुदेवात्मा मानतद्ज्ञैः पितामहाः
तद्धार्य हस्तं रज्जुश्च मानदराडं तथैव च ३८

स्मृत्वा मानसितां देवां मानयेद्वर्धकी तथा
एवं मान कृते वास्तुवस्त्वादि च विवर्धयेत् ३९

अनुक्तं कुरुते यस्तु स स्थितो रेणुरं फलम्
तस्मात्परिहरेच्छिल्पी कारयेत्ततु विश्वतः ४०

इति मानसारे वास्तुशास्त्रे मानोपकरणविधानं नाम द्वितीयोऽध्यायः

वास्तुप्रकरणम्

तैतलाश्च नराश्चैव यस्मिन्यस्मिन् परिस्थिताः
तद्वस्तु सुरिभिः प्रोक्तां तथा वै वक्ष्यतेऽधुना १

धरा हर्म्यादि यानं च पर्यङ्कादि चतुर्विधम्
धरा प्रधानवस्तु स्यात्तत्तज्ञातिषु सर्वशः २

विमानादीनि वास्तूनि वस्तुतं वस्तुसंश्रयात्
तान्येव वस्तुरे वेति कथितं वस्तुविद्बुधैः ३

प्रासादमराडपं चैव सभाशालाप्रपां तथा
रङ्गमिति चैतानि हर्म्यमुक्तं पुरातनैः ४

स्रादिकं स्यन्दनं शिल्पि शिबिका च रथं तथा
सर्वैर्यानमिति ख्यातं शयनं वद्त्यते तथा ५

पञ्चरं मञ्चली मञ्चं काकाष्टं फलकासनम्
तथैव बालपर्यङ्कं पर्यङ्कमिति कथ्यते ६

प्रोक्तं चतुर्विधं चैवमधिकारं धरादिभिः
स्राधारमपि भूतानामादित्याश्च जायते मही ७

स्राकारवर्णगन्धैः च रूपशब्दरसास्पृशः
एतान् परीद्त्य क्रमशः सा भूमि माननिश्चया ८

यासौ भूमिरसौ ग्राह्या द्विजातीनां पृथक् पृथक्
तद्वस्तु चतुरश्रं च शुक्लवर्णेन संयुतम् ९

उदुम्बरतरोर्युक्तमुत्तरप्रवणं तथा
माधुर्यं च कषायं च ब्राह्मणानां शुभप्रदम् १०

विस्तारोष्टसमाधिक्यं रक्तवर्णेन संयुतम्
पूर्वप्रवणमातिक्तमश्वत्थद्रुमसंयुतम् ११

विस्तीर्णं भूभृतां योग्यं महि सम्पत्प्रदा भवेत्
विस्तारे तु षडंशेन माधिकायाम पीतयुत् १२

प्लद्त्द्रुमयुतं पूर्वं प्रवणमम्लरसान्वितम्
वर्णजानां मही प्रोक्ता सर्वसिधिकरं शुभम् १३

चतुरंश विशाले तु चांशमाशाधिकमायतम्

वटवृक्षयुतं कृष्णवर्णं च कटुकारसम्  १४

वस्तु तत्पूर्वके निम्नं शूद्राणां तु शुभप्रदम्
तदुक्तं चोभयं मुख्यं मध्यमं चेति कथ्यते  १५

मुख्यं भूमिरिति ख्यातं वस्त्वादीनि चतुःसमम्
वस्तुभेदमिति प्रोक्तं द्विजात्यादिषु वर्णयेत्  १६

सर्वं योग्यं द्विजातीनां सुराणां च विशेषतः
भूपानां तद्विशां शूद्रैः प्रागुक्तक्रमतो भवेत्  १७
इति मानसारे वास्तुशास्त्रे वास्तुप्रकरणं नाम तृतीयोऽध्यायः

भूमिसंग्रहविधानम्

भूपरीक्षाविधिं वक्ष्ये शास्त्रे संक्षिप्यतेऽधुना
दक्षिणे पश्चिमे चैव चोन्नतं चतुरश्रकम्  १

तद्वस्तु जायते वाऽपि देवानां मनुजः क्रमात्
तुरङ्गद्विरदं वेणुं वीणासाकरदुन्दुभिः  २

धेनुभिश्च समायुक्तं किं च पुंनागजातिभिः
सरसीरुहधान्यैश्च पाटलीपुष्पगन्धकैः  ३

संयुक्तं सर्वबीजानां वर्धनं चैकवर्णयुक्
निविडा स्निग्धसंयुक्ता सुखसंस्पर्शना भवेत्  ४

श्रीवृक्षनिम्बसे शोकैः संयुक्तं सप्तपर्णकैः
सूतैश्चापि वृषवृक्षैः संयुक्ता च समस्थले  ५

धवलं रक्तवर्णं च स्वर्णं कृष्णं कपोतकम्
षडश्रैश्च समायुक्ता सर्वसम्पत्प्रदा धरा  ६

दक्षिणावर्तसलिला दक्षिणाकारा वर्णनैः
मानवाञ्जलिमानेन दृष्टिनीला मनोहरा ७

कृमिवल्मीकरहिता निर्मूषी निष्कपालिनी
निरस्थि सूक्तिसिकतारन्ध्रवर्जा शुभावहा ८

पृथग्विधैश्च शूलैश्च स्थाणुभिश्च मही धृता
सकर्दमितवाराही विलेकं सरसंयुतम् ९

निस्तुषा निर्विभूतिश्च शर्करारहिता अपि
सा भूमिः ब्राह्मणादीनां वर्णानां संपदावहा १०

मधुतैलाज्यगन्धाश्च दग्धदुर्गन्धिनी च या
अण्डजमीनगन्धैश्च शवगन्धैश्च वर्जिता ११

नृपप्रासादसंयुक्ता सभाचैत्यसमीपगा
सकण्टकतरोर्युक्ता द्रुमशालसंकुला १२

कूर्मोन्नता वर्तुला च त्रिकोणं वज्रसन्निभा
अञ्जनानां गृहैश्छाया कर्मकारगृहैर्वृता १३

चतुष्पथा चैक पथा द्विपथा पत्तनौपथा
मृदङ्गसदृशं गर्तखगवन्मुखोपमम् १४

झषतोपमं चतुष्कोणा प्रभावृक्षकम्
सालैर्युक्तं चतुष्कोणैः चैत्यपादपसंकुलम् १५

महासर्पाश्रिता वाऽपि शालस्योद्यानमेव च
वराहमर्कटप्रायं रुद्रभूश्चाश्रमं तथा १६

उलूखलं काननानि पञ्चाकृतिशूर्पणम्

पाञ्चजन्यं खगप्रायविडाला खचरोपमा १७

वेश्म गौलिनिभिः चापि ज्ञुद्रजन्तूषरापि
वास्तुशास्त्रविदां विधानं तदेवं स्यादूर्जितम् १८

बहुद्वारप्रवेशं च वर्मविद्धं च वर्जयेत्
इत्थंभूतेऽपि वास्त्वादौ मोहात्कर्म करोति यः १९

तदुष्कृतस्य निधात्तस्याद्विजशकाहरा
स हि सोदरवस्तु स्याद्वर्णिनी बहुरसा बहु २०

बीजाभिवर्धिनी मधुव्रतैर्मृगनाभिसुगन्धिनी
सकलशिल्पिवरैरपि वशोश्रृत्वा २१
इति मानसारे वास्तुशास्त्रे भूपरीक्षाविधानं नाम चतुर्थोऽध्यायः

भूपरीक्षाविधानम्

भूमिसंग्रहणं सर्वं शास्त्रे संक्षिप्यतेऽधुना
तदुक्ताकारनादादिवर्णैर्युक्तं महीतलम् १

स्वीकृत्य शिल्पिकुशलो बलिं दत्वा यथाविधि
पुण्याहं वाचयेत्पश्चात्तूर्यमङ्गलनिस्वनैः २

गच्छन्तु सर्वभूतानि राक्षसा देवता अपि
अस्मात्स्थानान्तरं यायात्कुर्यात्पृथ्वीपरिग्रहम् ३

जप्त्वा मन्त्रमिमं पश्चाद्विहिते कुम्भपरिग्रहात्
स्थापयेत्सर्वबीजानि गोमयाक्तानि रूषिते ४

प्रेक्ष्य सस्यात्पल्लवानि निविडानि निरवग्रहात्
तत्र धेनुवृष नववत्सांश्चाऽपि निवेशयेत् ५

पश्चात्पादक्रमैर्वर्गैर्नासाघ्राणैः समन्वितम्
संघुष्ट वृषभध्वानै धवलेभूतलूषितम् ६

यवप्रस्थसमेतैश्च पततीवत्सक्रमतः
गोमयालेपितं पश्चाद्गोष्ठकैश्च निषेवितम् ७

रोमन्थोद्गारपुलकैः शोभितं गोष्पदैरपि
स्वच्छोदकसमाक्रान्त गोगन्धैश्च मनोहरम् ८

एवं शुभदिनोपेतं तारकाविषयैरपि
सुमुहूर्ते सुकरणे सुलग्ने सुपिद्विितिखितैः ९

विप्रैश्च पश्चात्पुण्याहं कारयेत्सर्वमङ्गलम्
भूतलं खननं कुर्याद्वस्तुमध्ये लयावधि १०

चतुरश्रं तूपहितो हस्तमात्रं तु निम्नकम्
हरिचत्वारि परितः समं संक्षिप्य चोच्छ्रयम् ११

पूजयित्वा यथाशास्त्रं प्रणम्य रूपाम्बिकाम्
सर्वरत्नजलैश्चैव गन्धपुष्पाक्षतैरपि १२

पूजयेत्पायसान्नेन प्रभाते तु ततः सुधीः
वापीसमीपे नियतं समाहितमनाः शुचिः १३

प्राचीत्वरिक्त शिरस्ये तद्दर्भास्तरणभूतले
महाक्षोणि विवर्धस्व धान्यैश्च साधनैरपि १४

उत्तमं शुष्कमास्थाय मङ्गलं भवते नमः
मन्त्रमेतज् जपन्पश्चादुपवासमुपक्रमेत् १५

प्रभाते तु परीक्ष्येमं रूपं स्थपतिभिः सुधीः

किंचिच्छेषं जलं प्रेक्ष्य गृह्येतं मङ्गलाय वै  १६

शोषितं धनधान्यानां क्षयं क्लिन्ने विनाशितम्
परितस्तु मृदा गर्ते पूरिते मध्यमा मही  १७

मही हीनं मृदा हीना चोत्तमा च चाधिका
प्रेक्ष्य कर्तु तन्मध्ये प्रदक्षिणचरोत्तरम्  १८

कामधेनुसमां क्षोणीं स्वीकुर्यात्तु विभूतये
कर्षणार्थं बलीवर्दलक्षणं वक्ष्यतेऽधुना  १९

श्वेतकं कपिलं चैव रक्तपीतं तथैव च
बलीवर्दस्य चैतेषामेकैकं तु शुभावहम्  २०

एकस्य वर्णसांकर्यं वर्जयेद्दण्डलाञ्छनम्
अधो शृङ्गमतिशृङ्ग विपरीतं तु वर्जयेत्  २१

अतिबालं च वृद्धं तु वर्जयेद्योननं मतम्
बलिवर्दं दष्टविन्दुं दुष्टदृष्टिं च वर्जयेत्  २२

ह्रस्वपुच्छं चक्रखुरं बलहीनं च वर्जयेत्
छिन्नश्रोत्रं भग्नदन्तं पङ्गुपादं च वर्जयेत्  २३

चतुष्पादाग्रयोः शृङ्गं मूल मध्यललाटके
स्वभावेन श्वेतवर्णमाबद्धतिलकं तथा  २४

पुष्पनेत्रं च रक्तं च बन्धं चायतेक्षणम्
अनस्पान्न त्यजेद्विद्वान्सूत्रं कुर्याद्विलक्षणम्  २५

शृङ्गाग्रे खुराग्रे च कुर्यात्स्वर्णेन गोलकम्
फालपट्टं तथा कर्णं कनकैश्चाप्यलङ्कृतम्  २६

कर्षणात्पूर्वदिवसे अनस्वाश्चैव लाङ्गलम्
कौतुके बन्धनं चादौ कर्षणार्थमधिवासितम्  २७

कुर्यात्तदुक्तवद्विद्वान्वक्ष्ये लाङ्गललक्षणम्
बन्धुरं खादिरं चैव निम्बं च सरलं तथा  २८

सरक्तक्षीरिणी चैव लाङ्गलं वृक्षमिष्यते
एकहस्तं तु दीर्घं स्यात्सपादाद्यर्धमेव च  २९

त्रिचतुष्पञ्चमात्रं वा लाङ्गलं मूलविस्तृतम्
तस्यायामार्ध तन्मध्ये किंचिद्वक्रं सकर्णकम्  ३०

मूलमष्टाश्रकं चार्धत्रिपट्टं वेणुपत्रवत्
तस्य मूले तदुपरि वेणुशृङ्गं प्रवेशयेत्  ३१

वेणुदण्डं त्रिहस्तं स्याद्दीर्घतारां यथाबलम्
पुच्छायामध्यर्धकरं मूलतारं शराङ्गुलम्  ३२

अथवा सपादहस्तं च हस्तं वा पुच्छदीर्घकम्
पुच्छाग्रं तु द्विमात्रं तु हलमूलावसानकम्  ३३

एकाद्यर्धाङ्गुलं वाऽपि युक्त्या पुच्छं घनं भवेत्
पुच्छमूल विशेषेण पद्मपत्रेण भूषितम्  ३४

त्रिचतुष्पञ्चषण्मात्रं पुच्छाग्रे पट्टदीर्घकम्
उत्सेधं द्वित्रिमात्रं वा सर्वालङ्कारसंयुतम्  ३५

अयष्कीलं तत्र कुक्षौ योजयेत्तक्षकेन तु
सार्धद्विहस्तमानेन युगायामं प्रकल्पयेत्  ३६

त्रिचतुष्पञ्चमात्रं वा मध्यपट्टविशालकम्

तद्द्वयोरग्रविस्तारं द्वित्रियङ्गुलमेव च ३७

एतद्युगमानं स्यान्मध्याग्रान्तक्षयं क्रमात्
तस्यार्धं च द्वयोश्छिद्रैरनड्वन् बन्धार्थकं भवेत् ३८

युगमध्ये द्वयोर्वाऽपि लाङ्गलं चापि बन्धयेत्
सुमुहूर्ते सुलग्ने च कर्षणं तु समारभेत् ३९

अनड्वाहौ स्थपतिश्चोभौ गन्धपुष्पैः स्वलङ्कृतौ
पञ्चाङ्गभूषण शिल्पी श्वेतवस्त्रोत्तरीयवान् ४०

आदित्यचन्द्रौ ध्यायेत्तद्बलीवर्दद्वयं बुधः
वाराहं लाङ्गलं ध्यायेच्छिल्पिनं तु पितामहम् ४१

ब्राह्मणैश्च यथाशक्ति वाचयेत्स्वस्तिवाचनम्
सर्वमङ्गलघोषैश्च स्थपतिः कर्षयेत्तदा ४२

त्रिधा प्रदक्षिणं कुर्यात्सर्वं शूद्रैश्च कर्षयेत्
शूद्रोऽपि कृषिकाले तु शुद्धो भूत्वा समाहितः ४३

अधिकर्षणशेषान्तात्स्थपतिभ्यां निवेदयेत्
सर्वेषामपि वास्तूनामाधारं भूतलं स्मृतम् ४४

तस्मात्प्रागुक्तवत्कुर्याद्भूमिसंग्रहणं बुधः
अज्ञानान्तादि संग्राह्य सर्वसम्पद्विनाशनम् ४५

तस्मात्कुर्याद्यथा वास्तुरेवं लक्षणपूर्वकम् ४६
इति मानसारे वास्तुशास्त्रे भूमिसंग्रहो नाम पञ्चमोऽध्यायः

## शङ्कुस्थापनलक्षणम्

अथातः संप्रवक्ष्यामि शङ्कुस्थापनलक्षणम्

आदित्योदयकाले तु शङ्कुस्थापनमारभेत् १

उत्तरायणमासे तु दक्षिणायनमेव वा
शुक्लपक्षे यथा कृष्णपक्षे शुभतमे दिने २

पौर्णमीं चाप्यमावास्यां वर्जयेत्सुमुहूर्तके
प्रभाते स्थापयेच्छङ्कुमपराह्णात् ततः स्थितम् ३

स्थापनात्पूर्वदिवसे स्थलशुद्धिं प्रकारयेत्
आप्तभूमध्यदेशे तु चतुरश्रं समन्ततः ४

चतुर्हस्तप्रमाणेन विश्वतः सलिलस्थलम्
कृतमाल शमीशाखा चन्दनं रक्तचन्दनम् ५

खदिरं तिन्तुकं चैव शङ्कुदारु प्रकीर्तिता
श्वेतक्षीरिणि वृक्षं वा शुभदन्तमथापि ६

शङ्कायामं तु हस्तं स्यान्मूलतारं रसाङ्गुलम्
अग्रतारं द्विमात्रं स्यान्मूलाग्रान्तं क्षयं क्रमात् ७

सुवृत्तं निर्व्रणं चैव छत्राकारं तदग्रकम्
एवं तु चोत्तमं शङ्कुं मध्यमं तत्प्रवक्ष्यते ८

अष्टादशाङ्गुलायामं मूलतारं शराङ्गुलम्
अग्रमेकाङ्गुलं तारं शेषं प्रागुक्तवन्नयेत् ९

कन्यसं द्वादशाङ्गुल्यं शङ्कायामं विशेषतः
चतुरङ्गुलविस्तारं मूलमग्रं त्रयाङ्गुलम् १०

अथवायामसंमूले नाहमग्रे नवाङ्गुलम्
शेषं पूर्ववदुद्दिष्टं स्वीकरीकृतभूतले ११

तन्मध्ये बिन्दुतत्त्वज्ञो शङ्कायामद्वयेन च
भ्रामयेन्मगडलं कुर्यात्तन्मध्ये शङ्कुमर्पयेत् १२

पूर्वाह्ले शङ्कुतश्छायां पश्चिमे मगडलान्तकम्
तत्रैव बिन्दुसंज्ञाश्च कुर्यात्तु शिल्पिवित्तमः १३

पराह्ले शङ्कुतश्छायां पूर्वदिङ्मगडलान्तके
पूर्ववद्बिन्दु संस्थाप्य पश्चाच्छङ्कुं त्यजेत्ततः १४

शङ्कायामषडाधिक्यनवत्यंशविभाजिते
तस्यांशेन ग्रपच्छायां त्यक्त्वा प्राचीं नयेत्ततः १५

कन्यावृषभमासौ च ग्रपच्छाया न विद्यते
मेषे च मिथुने चैव तुलासिंहचतुष्टये १६

एवं हि द्वयङ्गुलं न्यस्तं वृश्चिकाषाढमीनयोः
चतुरङ्गुलं प्रकर्तव्यं धनुःकुम्भौ षडङ्गुलम् १७

मकरेऽष्टाङ्गुलं प्रोक्तमवच्छायां विशेषतः
छायायां बिन्दुवामे दच्चिणे चोक्ताङ्गुलं न्यसेत् १८

ग्रङ्गुलान्ते तु यच्छुद्धं प्राचीसूत्रं प्रयोजयेत्
मकरादि च षगमासे छाया दच्चिणतो भवेत् १९

कुलीरादि च षगमासे छाया चोत्तरतो दिशि
छायाया ग्रभिमुखे प्रत्यग्वामे वामं न्यसेद्यते २०

पूर्वे च दच्चिणे नीत्वा प्रत्यग्वामाङ्गुलान्न्यसेत्
ग्रपच्छायां त्यजेच्छिल्पी प्राक् प्रत्यक् सूत्र विन्यसेत् २१

तत्सूत्रात्पूर्वदिग्देशे नीत्वा चोत्तरतो दिशि

एवं मीनविवृद्धिः स्यात्पुरतोऽङ्गुलमेव च  २२

तत्सूत्राद्दक्षिणे सौम्यं तस्य द्वारं प्रकल्पयेत्
मत्स्यपुच्छानने न्यस्तं सूत्रं स्याद्दक्षिणोत्तरम्  २३

मण्डलावधिदेशे तु नीत्वा सूत्राङ्गुलं न्यसेत्
मासानां पङ्क्तिपङ्क्तेश्च दिवसानां त्रिधा त्रिधा  २४

विद्यमानावच्छाया पच्छायां चोच्यते
मेषे च प्रथमे पङ्क्ते द्व्यङ्गुलं च विसर्जयेत्  २५

मध्ये दशदिने चैकं चान्त्ये पङ्क्त्याङ्गुलं विना
वृषभे प्रथमदशके दिवसे त्वङ्गुलं नहि  २६

मध्ये चैकाङ्गुलं प्रोक्तं पङ्क्त्यन्ते द्व्यङ्गुलं त्यजेत्
मिथुने प्रथमदशके दिवसे त्वङ्गुलं त्यजेत्  २७

मध्ये दशदिने वह्नि चान्त्यपङ्क्ति चतुस्त्यजेत्
कुलीरे प्रथमदशके वेदमात्रं विसर्जयेत्  २८

मध्ये दशदिने चापि त्र्यङ्गुलं तत्परित्यजेत्
द्व्यङ्गुलं चान्त्यदिवसे दशके समुदाहृतम्  २९

सिंहस्य चादिदशके द्व्यङ्गुलं च परित्यजेत्
मध्ये दशदिने चैकवान्त्यपङ्क्तौ विनाङ्गुलम्  ३०

युवत्यामादिदशके दिवसे नाङ्गुलं भवेत्
मध्ये चैकाङ्गुलं त्यक्त्वा चान्त्यपङ्क्तौ द्व्याङ्गुलम्  ३१

तुलारम्भे दशदिने द्व्यङ्गुलं च निषेधयेत्
विसृज्य द्व्यङ्गुलं मध्ये चान्त्ये वेदमिति स्मृतम्  ३२

वृश्चिके प्रथमे पङ्क्तिर्दिवसे चतुरङ्गुलम्
मध्ये दशदिने बाणं चान्त्यपङ्क्तौ षडङ्गुलम् ३३

धनूराशौ दशदिने प्रथमे तु षडङ्गुलम्
मध्ये दशदिने सप्तद्व्यङ्गुलं च विवर्जयेत् ३४

अन्त्यपङ्क्तिदिने त्याज्यं वसुमात्रमिति स्मृतम्
मकरादौ दशदिने त्यजेदष्टाङ्गुलं बुधः ३५

मध्ये सप्ताङ्गुलं त्यक्त्वा चान्त्ये त्यक्त्वा षडङ्गुलम्
कुम्भे चादौ दशदिने विसृजेत्तु षडङ्गुलम् ३६

मध्ये पञ्चाङ्गुलं त्यक्त्वा चान्त्ये च चतुरङ्गुलम्
मीनराशौ च दशके दिवसे चतुरङ्गुलम् ३७

मध्ये च पङ्क्तिदिवसे द्व्यङ्गुलं च विसर्जयेत्
अन्ते दशदिने चापि वर्जयेद्व्यहकाङ्गुलम् ३८

अपच्छायं तत्र नास्ति यदुक्तं तदिहोच्यते
प्रागुक्तरविराश्यां तु कन्यायां वृषभस्थितम् ३९

अपरे विंशतिदिने तत्तदृत्तं भवेद्यदि
उक्ताङ्गुलं तत्र नास्ति सूत्रं ज्ञात्वा प्रसारयेत् ४०

शुद्धप्राची भवेत्सम्यगैशान्या प्राच्यथोच्यते ४२

प्राच्याङ्गुलकृताद्बिन्दोरुत्तरे चाङ्गुलं न्यसेत्
प्रतीचीमात्रतद्बिन्दोरीशप्राची प्रसूत्रयेत् ४३

मुक्तिकामस्य करणे शुद्धप्राचीं प्रयोजयेत्
ऐशान्यप्राची सर्वस्य भोगकामस्य संमताम् ४४

आग्नेये प्राचीसंयुक्तं सर्वदोषकरं भवेत्
आग्नेयप्राचिकं वास्तु तस्मात्सर्वं विसर्जयेत् ४५

एवं कृते त्वलं वास्तौ सुगाढं सुसमृद्धये
दण्डमानसमं सूत्रदीर्घमानं प्रकल्पयेत् ४६

आदौ तन्तुं त्रिधा कृत्वा सूत्रग्राहीति योजयेत्
वातावर्तं तु सूत्रं स्यात्तृतीयावर्तदक्षिणम् ४७

कार्पासं सूत्रसंयुक्तं पट्टसूत्रमथापि वा
सूत्राल्लभ्यते वास्तौ प्रमाणं हीति निश्चितम् ४८

मध्यादिन्द्राच्च तद्दिक्षु न्यसेन्द्रादि शिखान्तकम्
इन्द्रादीशानपर्यन्तं चान्तकात्पवकान्तम् ४९

वरुणाद्वायुपर्यन्तं सौम्यादेर्वायुर्वान्तिकम्
सौम्यादीशानपर्यन्तं सूत्रमेवं परिव्रजेत् ५०

विमाने त्रिगृहे वाऽपि मण्डपादीनि वास्तुके
ग्रामादीनां च सर्वेषां मानयेन्मानसूत्रकम् ५१

तत्प्रमाणस्य परितो हस्तद्विहस्तमाधिकम्
तत्सूत्रावसाने च शङ्कुमेवं प्रतिष्ठितम् ५२

गर्भसूत्रस्य कर्णैश्च द्विद्विशङ्कु निखानयेत्
चतुर्दिक्षु चतुःशङ्कुं जन्मनिष्क्रमणार्थकम् ५३

चतुष्कर्णैश्च कर्णैश्च चतुःशङ्कु समायुतम्
एवं महार्थकं कुर्याच्छङ्कुदारु प्रवक्ष्यते ५४

खदिरं चादिमेदं च मधूकं क्षीरिणी तथा

अन्यैश्च सारवृक्षैर्वा खातं शङ्कुरिति स्मृतम् ५५

एकविंशाङ्गुलं वाऽपि चैकपञ्चत्यङ्गुलायतम्
खातं शङ्कुमिदं मुष्टिमानं तत्परिणाहकम् ५६

मूलं तु सूचिवत्कुर्यान्मूलाग्रक्षयक्रमात्
गृहीत्वा वामहस्तेन स्थपतिस्थापकावुभौ ५७

शङ्कुं दक्षिणहस्तेन लोष्ट संगृह्य ताडयेत्
प्रत्येकमष्टसंख्या च प्राङ्मुखो वाप्युदङ्मुखः ५८

शङ्कुस्थापनकाले तु ब्राह्मणैः स्वस्तिवाचकम्
कुर्यान्मङ्गलघोषैश्च समज्यां पूजयेत्ततः ५९

एवं नैर्ऋतिकोणे तु स्थपत्याज्ञश्च तक्षकम्
पश्चान्मङ्गलघोषैश्च सर्वशङ्कुः प्रहारयेत् ६०

इति मानसारे वास्तुशास्त्रे शङ्कुस्थापनविधानं नाम षष्ठोऽध्यायः

## पदविन्यासलक्षणम्

अधुना पदविन्यासलक्षणं वक्ष्यते क्रमात्
प्रथमं चैकपदं स्यात्सकलं नाममेव च १

द्वितीयं चतुष्पदं चैव नाम पैशाचमेव च
तृतीयं नवपदं चैव नाम पीठमिति स्मृतम् २

चतुर्थं षोडशपदं महापीठमिति स्मृतम्
पञ्चमं पञ्चपञ्चांशमुपपीठमिति स्मृतम् ३

षष्ठमं षष्ठषष्ठांशं चोग्रपीठं च कथ्यते
सप्तमं सप्तसप्तांशं स्थण्डिलं परिकीर्तितम् ४

अष्टमं तु चतुःषष्टिपदं चण्डितमीरितम्
कथितमेकाशीतिपदं नवमं परमशाधिकम्  ५

दशमं शतपदं स्यान्नाममासनमीरितम्
एकादशं तथा प्रोक्तं चैकविंशच्छतं पदम्  ६

स्थानीयं नाममेव तु चाथ द्वादशकं तथा
वेदाधिक्यं चत्वारिंशदेव शताधिकं पदम्  ७

त्रयोदशं तथा प्रोक्तं नवषष्ट्यधिकं शतम्
पदमेवं विधिं ज्ञात्वा नाम चोभयचण्डितम्  ८

चतुर्दशं तथा प्रोक्तं षण्णवत्यधिकं शतम्
नाम तद्भद्रमेवं तु अथ पञ्चदशं तथा  ९

पञ्चविंशपदाधिक्यं शतद्वयपदान्वितम्
नामं महासनं प्रोक्तमथ षोडशकं तथा  १०

सप्ताष्टाधिकं द्विशतं पद्मगर्भं पदं भवेत्
तथा वै सप्तदशकं नवाशीतिशतद्वयम्  ११

त्रियुतं पद्मेवोक्तं तथाष्टादशमं तथा
चतुर्विंशत्सत्रिशतं चैव कर्णाष्टकं भवेत्  १२

एकोनविंशति तथा चैव षष्टिशतत्रयम्
गणितं पदमित्येवं तथा विंशतिकं ततः  १३

चतुःशतपदं चैव प्रोक्तं कुर्याद्विशालकम्
तथा चैकविंशतिकं चैकपञ्चाष्टमाधिकम्  १४

चतुःशतपदं युक्तं सुसंहितमितीरितम्

तथाऽपि द्वाविंशतिकं वेदाशीतिचतुःशतम् १५

पदं सुप्रतिकान्तं स्यात्त्रयोविंशद्विधानके
नवविंशत्पञ्चशतं पदमेतद्विशालकम् १६

चतुर्विंशद्विधाने तु षडाधिक्यं ससप्तति
पञ्चशतपदयुतं विप्रगर्भमिति स्मृतम् १७

पञ्चविंशद्विधाने तु पञ्चविंशत्सषट्शतम्
पदं विवेश संज्ञात्वा नाममेवं प्रकीर्तितम् १८

षड्विंशतिविधाने तु षट्सप्ततिकसंयुतम्
षट्शतं पद संज्ञात्वा विपुलं भोगमिति स्मृतम् १९

सप्तविंशद्विधाने तु नवविंशतिसप्तशः
शतयुतं पदं चैव विप्रकान्तमिति स्मृतम् २०

तथाऽपि चाष्टाविंशत्ये वेदाशीतिं च माधिकम्
सप्तसंख्याशतयुतं विशालाद्यमिति स्मृतम् २१

नवविंशद्विधाने तु चत्वारिंशैकमाधिकम्
अष्टशतपदं युक्तं विप्रभक्तीति कीर्तितम् २२

तत्र त्रिंशद्विधाने तु पदं नवशतं तथा
एवं विश्वेशसारं च चैकत्रिंशद्विधानतः २३

एकषष्टिसमाधिक्यं पदं नवशतयुतम्
एवमीश्वरकान्तं स्याद्द्वात्रिंशद्विधानके २४

चतुर्विंशतिसंयुक्तं सहस्रपदसम्मितम्
एवं तु चन्द्रकान्तं स्यादेवमुक्तं पुरातनैः २५

चतुःसूत्रं तु संयुक्तं सकलमेकपदं भवेत्
तत्पूर्वसूत्रमादित्यं दक्षसूत्रं यमाख्यकम्  २६

प्रत्यक्सूत्रं जलेशं स्यात्सौम्यसूत्रं क्षपाहरम्
देवतागुरुपूजार्थं चाग्निकार्यार्थमेव वा  २७

यतीनामासनायापि भोजनार्थं सनातनम्
पैतृकार्थं तु संपूज्य एवं तु सकलं स्मृतम्  २८

पैशाचाष्टसूत्रेण संयुक्तं तु चतुष्पदम्
पैशाचेशपदे स्थाप्य वह्नेश्च वाऽग्निदेवतम्  २९

पवनं वायुकोणे तु गगनं चैव नैर्ऋते
एवं तद्ग्रहपूजार्थं स्नपनं स्याज्जनार्थकम्  ३०

महापीठपदे मध्ये ब्राह्मणस्य चतुष्पदम्
तद्बहिः सूत्रदेशेशादापवश्चार्यकं तथा  ३१

सावित्रं च विवस्वां च इन्द्रं चैव तु मित्रकम्
रुद्रं चैव भूधरं चैव एवं प्रदक्षिणं क्रमात्  ३२

तद्बहिः परितः सूत्रे चैशं चैव जलान्तकम्
आदित्यं विमृशं चैव कृशानुं विततं तथा  ३३

यमं च भृङ्गराजं च पितृसुग्रीवकौ तथा
शोषं मारुतं मुख्यसोमादितस्तथा  ३४

पञ्चपञ्चामरान् प्रोक्तं चैशात्तु पूर्ववत्क्रमात्
एवं सूत्रस्थितान्देवान्पदस्थांश्चोपपीठके  ३५

एतेषामुक्तसर्वेषु पदेषु द्वयमुच्यते

तन्मराडूकं पदं चैव यं तत्परमशायिकम्  ३६

युग्मं हि निष्कलं प्रोक्तमयुग्मं सकलं तथा
एतत्पदद्वयं सर्वं वास्तूनां हि सनातनम्  ३७

एतत्पदस्थितं सर्वदेवानां रूपमुच्यते
त्रिंशत् सूत्रसंयुक्तं चाष्टाविंशत्तु सन्धिभिः  ३८

चतुष्कैश्च षडाधिक्यं त्रिंशत्संयुक्तमेव च
षट्कद्वादशसंयुक्तं कर्णे शूलं चतुष्टयम्  ३९

मध्ये चाष्टकसंयुक्तं सूत्र मराडूकनामकम्
चतुर्दिन्नु चतुःसूत्रं षोडशान्यत्र सूत्रकम्  ४०

दन्निणाद्युत्तरान्तं स्यात्पूर्वादिपश्चिमान्तकम्
एते विंशतिसूत्रं स्यात्कर्णसूत्रं चतुष्टयम्  ४१

एतद्बहिस्ततश्चैशाच्चतुष्कर्णे प्रदन्निणे
ग्रपवत्सापवत्स्यश्च प्रत्यगर्धार्धभोग्यता  ४२

सवित्रं चैवं सावित्रं देवार्धार्धपदे स्थितम्
इन्द्रं चैवेन्द्रराजं च प्रत्येकार्धपदे पराः  ४३

रुद्रो रुद्रजयं चैव चार्धार्धपदभोगिनः
एवं चाष्टामराः प्रोक्तास्तद्बहिश्च समारभेत्  ४४

ईशानश्चैव पर्जन्यः ग्रग्निः पूषाग्निकोणके
मृषश्च दौवारिकश्चैव कोणे नैर्ऋृत्यदेशके  ४५

रोगं नाश द्वयो वायुकोणे चार्धार्धपदेश्वरे
बहिश्चतुष्षत्क तत्पार्श्वौ चतुष्कोणे समारभेत्  ४६

जयन्तस्तत्परे सौम्ये न्तरिक्षे कपूर्वकं
वितथश्चैकपदे पूर्वे दक्षिणे कपदे मृगः ४७

सुग्रीवो दक्षिणे चैव गोथैकपद पश्चिमे
प्रत्यक् चैव पदे मुख्यमुदितश्चोत्तरेऽपि च ४८

पूर्वाद्दिनकं मध्यस्थसूत्रस्य सौम्यदिक्द्विपदे
तथोत्तरे महेन्द्रस्य द्विपदं दक्षिणे तथा ४९

सत्यस्य द्विपद तस्य दक्षिणे द्वयं भृशम्
दक्षिणे मध्यसूत्रस्य पूर्वे च द्विपदे यमः ५०

तत्पूर्वे द्विपदे स्थित्वा राक्षसं चैव पश्चिमे
गन्धर्वे द्विपदे स्थाप्यं मृश द्विपदं भवेत् ५१

पश्चिमे मध्यसूत्रस्य दक्षिणे वरुण स्थितः
द्विपदं पुष्पदन्तस्य द्विपदं चोत्तरे तथा ५२

द्विपदे द्विपदे चैव चेश्वरः शोषरोगयोः
तत्तद्विपदं ज्ञात्वा चतुर्दिक्षु क्रमाद्बुधः ५३

चरकीशानबहिः स्थाप्या विदारी पावके विधिः
बहिर्नैर्ऋत्यसै बाह्ये पूतना च बहिस्तथा ५४

वयुकोणप्रदेशे तु बाह्ये वा पापराक्षसी
एवं तु चण्डितं प्रोक्तं परमशायिकमुच्यते ५५

एकाशीतिपदं कृत्वा मध्ये नवपदं विधिम्
पूर्वे रसपदं चैव तदेवमार्यमनः स्मृतम् ५६

दक्षिणे रसपदं चैव विवस्वान् एव कथ्यते

पश्चिमे षट्पदं चैव मित्रस्य मिति संस्मृतम्  ५७

सौम्ये रसपदं चैव भूधरस्य चतुष्टयम्
चतुर्दिक्त्वन्तराले च ई विशादीनि चतुष्टयम्  ५८

तत्तच्चतुष्पदे सर्वे कर्णे चाश्रयमीरितम्
भूधरस्य ततः पूर्वे द्विपदा चापवस्तथा  ५९

आर्यस्य पदे सौम्ये अपवत्स्या द्वयोस्तथा
पूर्वे रसपदाद्याद्ये द्विपदे च सवित्रकः  ६०

विवस्वती द्विपूर्वादिद्वंश साविन्द्रमेव च
दक्षे रसपदात्प्रत्यक् द्विपदे च तथैन्द्रकः  ६१

मित्रकस्य पदे याम्ये द्विपदे इन्द्रजयस्तथा
पश्चिमे रसपदात्सौम्ये द्विपदे रुद्रदेवता  ६२

सौम्ये रसपदात्प्रत्यक् द्व्यंशे रुद्रजयस्तथा
एवमन्तर्गते देवांस्तद्बाह्ये देशे राक्षसान्  ६३

इन्द्रे चैव पदे भानुश्चाग्निश्चैव पदाग्निके
यमे चैव पदे चक्रि नैर्ऋत्ये कपदेपितत्  ६४

जलेशैकपदे प्रत्यक् पवनैकपदे मरुत्
सौम्ये चैकपदे चैन्द्रश्चेशस्यैकपदैशके  ६५

पर्जन्येकपदं चैव चेशकस्य तु दक्षिणे
जयन्तस्य पदं चैकं पर्जन्यस्य तु दक्षिणे  ६६

महेन्द्रस्य पदं चैकं जयन्तस्य तु दक्षिणे
सत्यकस्य पदं चैकमादित्यस्य तु दक्षिणे  ६७

भृशस्यैकपदं प्रोक्तं सत्यकस्य तु दक्षिणे
अन्तरिक्षस्यैकपदं वह्निकोणस्य चोत्तरे ६८

पूषस्य पदमेकं स्याच्चाग्निकोणस्य पश्चिमे
विधातस्य पदं चैकं पूषकस्य तु पश्चिमे ६९

गृहक्षतस्यैकपदं विधातस्य पश्चिमे
गन्धर्वस्य पदं चैकं धर्मदेवस्य पश्चिमे ७०

भृङ्गराजस्यैकपदं गन्धर्वस्य तु पश्चिमे
वृषस्यैकपदं शरतं भृङ्गराजस्य पश्चिमे ७१

दौवारिकस्यैकपदं गगनस्य तु चोत्तरे
सुग्रीवस्य पदं चैकं दौवारिकस्य चोत्तरे ७२

पुष्पदन्तस्यैकपदं सुग्रीवस्य तु चोत्तरे
असुरस्यैकपदं शस्तं वरुणस्य तु चोत्तरे ७३

शोषकस्य पदं चैकं चासुरस्य तु चोत्तरे
रोगस्यैकपदं प्रोक्तं शोषकस्यैव चोत्तरे ७४

नगस्यैकपदं शस्तं पवनस्य तु पूर्वके
मुख्यस्यैकपदं ज्ञात्वा नागस्यैव च पूर्वके ७५

भल्लाटस्य पदं चैकं प्रोक्तं मुख्यस्य पूर्वके
मृगस्यैकपदं शस्तं सोमदेवस्य पूर्वकम् ७६

अदितेस्तु पदं चैकं शस्तं मृगात्तु पूर्वके
अदितीशानयोर्मध्ये चोदिते कपदं भवेत् ७७

हेमवर्णं चतुर्हस्तं चतुर्वक्त्राष्टलोचनम्

श्वेतवस्त्रजटामौलियज्ञसूत्रोत्तरीयकम्  ७८

कर्णकुण्डलसंयुक्तमष्टकर्णं चतुर्गलम्
कमण्डलुं चाक्षमाला च वामसव्यकरौ धृतौ  ७९

अभयं दक्षिणे पूर्वेऽन्तस्य वा वरदे तरे
सर्वाभरणसंयुक्तं गण्डेन तिलकान्वितम्  ८०

पदे सर्वेषु मध्ये तु सृष्ट्यर्थमिति रूपकम्
एवं पितामहं ध्यात्वा पद्मसिंहासनोपरि  ८१

रक्तवर्णं चतुर्हस्तमेकवक्त्रं द्विनेत्रकम्
करण्डमकुटोपेतं रक्तवस्त्रोत्तरीयकम्  ८२

सर्वाभरणसंयुक्तं परहस्तौ चाब्जधारिणौ
पूर्वे च त्वभयं सर्वे वरदं वामहस्तकौ  ८३

एवमार्यदेवस्य ध्यात्वा धेनुञ्च पूर्ववत्
श्वेतवर्णं चतुर्हस्तं परे पाशाङ्कुशौ धृतौ  ८४

शेषमार्यवत्प्रोक्तं ध्यात्वा देवं विवस्वतम्
श्यामवर्णं तु मित्रं स्याच्छेषं पूर्ववदाचरेत्  ८५

भूधरं हेमवर्णं तच्चाब्जपाशापरं करे
शेषं प्रागुक्तवद्ध्यात्वा वास्तुभूतोपरिस्थितम्  ८६

द्विभुजं च द्विनेत्रं च करण्डमकुटान्वितम्
श्वेतवर्णातिरिक्ताक्षं हेमवर्णांशुकाम्बरम्  ८७

सर्वाभरणसंयुक्तं वरदं चाङ्कुशोधृतम्
अपवत्समिति प्रोक्तं चापवत्साश्च रक्तकम्  ८८

शेषं प्रगुक्तवद्ध्यात्वा समिन्द्रं रक्तवर्णवत्
द्विभुजान्तं समुद्धृत्य शेषं तत्पूर्ववद्भवेत् ८९

साविन्द्र श्यामवर्णा वा रक्तवस्त्रोत्तरीयकम्
इन्द्रस्य रक्तवर्णं च चेन्द्रराजस्य हेमवत् ९०

सर्वाभरणसंयुक्त रौप्य दृष्टिसमन्वितम्
शेषं पूर्ववदुद्दिष्टं ध्यात्वा शेषं तु पूर्ववत् ९१

रुद्रौ च रक्तवर्णौ च द्विभुजौ च त्रिनेत्रकौ
त्रिशूलौ वरदौ चैव चर्माम्बरोत्तरीयकम् ९२

जटामकुटसंयुक्तौ सर्वाभरणभूषितौ
वृषारूढां सदेवीं च व्याघ्रचर्माम्बरां तथा ९३

श्वेतवर्णनिभं चैव सर्वाभरणशोभितम्
दक्षिणे च करे टङ्कं हरिणीं वामके करे ९४

अभयं पूर्वकेऽसव्ये वरदं वामहस्तके
ईशमूर्तिमिति ध्यात्वा रक्तवर्णं च शीष्पतम् ९५

द्विभुजं च द्विनेत्रं च रथैरावतवाहनम्
वराङ्कुशधरं देवं सर्वाभरणभूषितम् ९६

नीलाम्बरधरं चैव यज्ञसूत्रोत्तरीयधृत्
अग्निवर्णं चाग्निदेवं मेषवाहनसंयुतम् ९७

द्विभुजं च त्रिनेत्रं च ज्वालासदृशमूर्ध्वजम्
स्रुक्स्रुवं पाणियुगले स्वाहादेव्या च संयुतम् ९८

सर्वाभरणसंयुक्तं शेषं प्रागुक्तवद्भवेत्

महिषारूढं त्रिणेत्रं च ज्वालासदृशकुन्तलम्  ९९

त्रिशूलं दक्षिणे हस्ते पाशं वामकरेऽधरे
धूम्रवर्णं रक्तवस्त्रं देव्या यम्या च संयुतम्  १००

यमं ध्यात्वा यथोक्तवत् सर्वाभरणभूषितम्
नरारूढं निर्ऋतिं द्विभुजं च द्विनेत्रकम्  १०१

सव्यहस्ते गदां चैव वरदं वामहस्तके
श्यामवर्णेन्द्रदेव्यां च संयुक्तं रक्तवस्त्रकम्  १०२

करण्डमकुटोपेतं ध्यात्वा शेषं तु पूर्ववत्
वरुणं मकरारूढं भरण्या सह सेवितम्  १०३

द्विभुजं च द्विनेत्रं च करण्डमकुटान्वितम्
पाशाङ्कुशधरं चैव धवलं रक्तं वाससम्  १०४

यज्ञसूत्रोत्तरीयं च नानाभरणभूषितम्
वायुदेवं मृगारूढं मारुत्या सह सेवितम्  १०५

द्विभुजं च त्रिनेत्रं च पाशं च वरदं तथा
शेषं च पूर्ववद्ध्यात्वा शशिरूपमिहोच्यते  १०६

द्विभुजं च द्विनेत्रं च पङ्कजद्वयधारिणम्
अश्वारूढं चन्द्रिकया संयुक्तं श्वेतवर्णकम्  १०७

श्वेताम्बरधरं यज्ञसूत्रं च मकुटान्वितम्
सर्वाभरणसंयुक्तं सौम्यं ध्यात्वा यथोक्तवत्  १०८

पर्जन्यं रक्तवर्णं च महान्तं श्यामवर्णकम्
महेन्द्रं पीतवर्णं च द्विभुजं च द्विनेत्रकम्  १०९

करराडमकुटोपेतं सर्वाभरणशोभितम्
पाशपद्मावधारौ च रक्तवस्त्रोत्तरीयकौ  ११०

सत्यं च श्वेतवर्णं च भृङ्गेशं धूम्रवर्णकम्
नीलवर्णं चान्तरिच्चं च द्विभुजं च द्विनेत्रकम्  १११

दराडं पाशं च शूलं च वरदं च यथाक्रमम्
शेषं च पूर्ववद्ध्यात्वा सर्वाभरणभूषितम्  ११२

पूषं च रक्तवर्णं च वितथं पीतवर्णकम्
गृहच्चतं कृष्णवर्णं वस्त्रकं रक्तपीतकम्  ११३

गदा शूलश्च शक्तिश्च त्रयः पाशौ समुद्धृतौ
शेषं पूर्ववदुद्दिष्टं करराडमकुटान्वितम्  ११४

गन्धर्वं रक्तवर्णं च भृङ्गस्याञ्जनवर्णकम्
मृशस्य धूम्रवर्णं च शेषं प्रागुक्तवद्भवेत्  ११५

दौवारिकः श्यामवर्णं सुग्रीवं रक्तवर्णकम्
पुष्पदन्तं तथा कृष्णं गदापाशोद्धृतं तथा  ११६

शेषं पूर्ववदुद्दिष्टं वस्त्रं च मकुटद्वयम्
असुरं कृष्णवर्णं च शोषस्य धूम्रवर्णकम्  ११७

रोगं च कृशरूपं स्याद्रक्ताच्चौ श्वेतवर्णकौ
शूलं कपालं चोद्धृत्य शेषं प्रागुक्तवद्भवेत्  ११८

भुजङ्गाननं नागस्य पीतवर्णकरद्वयम्
मुसलं शूलमुद्धृत्य सर्वाभरणभूषितम्  ११९

मुख्यं गजमुखं चैव द्विभुजं मकुटान्वितम्

रक्तवर्णांशुकोपेतं श्यामवर्णांशशोभितम् १२०

पाशाङ्कुशोद्धृतौ हस्तौ सर्वाभरणभूषितम्
भल्लाटं मेषवक्त्रं च जयं तत्पूर्ववद्भवेत् १२१

मृगस्य मृगवक्त्रं च मृगवर्णानि मौलिका
शूलं च खेटकोद्धृत्य अदितिं नीलवर्णकम् १२२

खड्गं कपालमुद्धृत्य मकुटाभरणान्वितम्
उदितं रक्तवर्णं च सिंहवक्त्रं गदाधरम् १२३

शेषं प्रागुक्तवद्ध्यात्वा चैव प्रोक्तं पदेऽमरात्
चरकी श्वेतवर्णा च विदारी रक्तवर्णका १२४

पूतना श्यामवर्णा च नीला स्यात्पापराक्षसी
एवं चतुर्विधाः प्रोक्ताः शूलं कपालमुद्धृतौ १२५

रक्तवस्त्रधरास्तासां द्रंष्ट्रा ग्रविलोचनी
रक्तकेशैर्विकीर्णैश्च चैशादिक्कर्णयोर्बहिः १२६

स्थितवास्तुपुरुषोर्ध्वेतब्रह्मादिदेवतान्स्थितान्
तद्वास्तुपुरुषं ज्ञात्वा ब्रह्मांशे मध्यकायं च १२७

आर्यस्य च पदे मूर्ध्नि प्रागुदङ्मुखतो विदुः
ऐशाने कोणसूत्रे तु सव्यहस्तं प्रसारितम् १२८

नैरृत्ये कोणसूत्रे तु सव्यपादं प्रसारितम्
अग्निकोणे तु सूत्रे तु सव्यहस्तं प्रसारितम् १२९

वायुकोणे च सूत्रेत्वामपादं प्रसारितम्
विवस्वति पदे चैव दक्षिणं पार्श्वमीरितम् १३०

भूधरस्य पदे चैव वामपार्श्वं विधीयते
मित्रस्य च पदे चैव ज्ञात्वा मेढ्रमुदीरितम्  १३१

कर्णे मर्मशिरा प्रोक्ता षड्विंशद् हृदये कचम्
पश्चिमे दक्षिणे वंशो मूलं तत्प्रागुदग्रयोः  १३२

एवं वास्तुपुरुषं कुब्जं च कुटिलिकं कृशम्
वास्तुवस्तु प्रयत्नेन देवानां तु नृणां तथा  १३३

शुभाशुभविधातारं तस्याङ्गानां न पीडयेत्
अज्ञानादङ्गहीनं च कर्ता चैव विनश्यति  १३४

तस्मात्तु शिल्पिभिः प्राज्ञैः ऊहापोहान् न योजयेत्
देवानामपि सर्वेषां ब्रह्मणां पश्यते विदुः  १३५

तत्तत्पदेऽमरान् सर्वान् स्थितान्भक्तिं प्रदक्षिणम्  १३६
इति मानसारे वास्तुशास्त्रे पदविन्यासलक्षणं नाम सप्तमोऽध्यायः

## बलिकर्मविधानम्

बलिकर्मविधिं वक्ष्ये शास्त्रे संक्षिप्यतेऽधुना
ग्रामादीनां च सर्वेषां विन्यासार्थं बलिं क्षिपेत्  १

वास्तुशुद्धिं ततः कृत्वा देवतार्थं पदं न्यसेत्
मण्डूकपदमेवाऽपि परमशाधिकमेव वा  २

ब्रह्मादिदेवतानां च राक्षसानां बलिं क्षिपेत्
कृतोपवासः स्थपतिः शुद्धदेहः प्रसन्नधीः  ३

उत्कृष्टवेषो बल्यर्थं रात्रौ द्रव्यान् समाहरेत्
प्रभाते दिवसे द्रव्यानेकैकानेककन्यकः  ४

अथवा गणिकाहस्ते पात्रे स्वर्णादिकान्धृता
स्थपतिश्चैकपात्रेण धारयेद्वामके करे ५

द्रव्याणि क्षिप्य दद्यात्त्वसव्यहस्तेन मन्त्रवित्
सकलीकरणं कृत्वा पुण्याहं वाचयेत्ततः ६

सर्वमङ्गलघोषैश्च बलिं दत्वा यथाक्रमात्
तत्तन्नाम्नैश्च देवानामोङ्कारादिनमोन्तकम् ७

मन्त्रमेतत् समुच्चार्य ब्रह्मादिभ्यो बलिं हरेत्
देवालयार्थं सामान्यं ग्रामार्थं तु विशेषकम् ८

दध्योदनं च सर्वं तत्सामान्यं च बलिं विदुः
ब्रह्मादीनां च देवानां धूपदीपाक्षतैरपि ९

अथ वक्ष्ये विशेषाख्यं बलिं शास्त्रोक्तवत्क्रमात्
स्रग्गन्धधूपदुग्धं च मध्वाज्यं पायसमोदनम् १०

ब्रह्मणे च बलिं दद्याल्लाजेन सह तन्त्रवित्
आर्याय फलभक्ष्यं स्यात्तिलमोदनकं दधि ११

पश्चाद्विवस्वते दद्याद्दधिपूर्वा च मर्दके
महीधराय क्षीरं स्यादभ्यन्तरबलिं स्मृतम् १२

पर्जन्यस्य तु तत्प्रोक्तं पुष्पं च नवनीतकम्
दत्वा जयन्ताय बलिं पुष्पकोष्ठ महेन्द्रके १३

मधुगन्धो भास्करः स्यात्सत्याय मधुरेव च
नवतीतं भृशस्योक्तं गगने च ततो बलिम् १४

हारिद्रचूर्णमाषान्तं दुग्धाढ्यं सा गरस्य तु

शुद्धक्षीरं तथा चाग्नेः परमान्नं तु पुष्णिके   १५

वितथे स्यात्तु पक्वान्नं राक्षसस्यं तु मांसकम्
क्षामान्नं तु सरं प्रोक्तं बलिं चान्तकरस्य वै  १६

अगुरुं गन्धकं चैव गन्धर्वस्य बलिं क्षिपेत्
पारावारझष भृङ्गराजस्य बलिरिष्यते  १७

दध्योदनं मृशस्योक्तं नैर्ऋत्ये तु बलिं ततः
तिलपिण्डौदनं प्रोक्तं बीजं दौवारिके बलि  १८

सुग्रीवे मोदकं प्रोक्तं पुष्पदन्तमतःपरम्
पुष्पतोयं बलिं दत्वा पायसान्नं तु वारुणे  १९

असुरस्य बलिं रक्तं शोषे तिलतण्डुलम्
रोगस्य शुष्कमत्स्यं स्याद्धरिद्रौदनं मारुतः  २०

नागस्यैव बलिं लाजं धान्यचूर्णं हि मुख्यके
गुडौदनं च भल्लाटे क्षीरान्नं तु शलाधराः  २१

मृगे शुष्कमांसं तं मोदकं देवमन्तरे
तिलपुष्पं बलिं दत्वा उदितस्य फलं भवेत्  २२

दुग्धौदनमाज्यं चैव भवेन्मत्स्य बलिं ततः
सवित्रे वामथान्यं च सवित्रे कर्ततोयकम्  २३

बन्धमेतत् स बलिन्द्रै मुद्रफलेन्द्रराजके
माषं रुद्रबलिं दत्वा मांसं रुद्रजये तथा  २४

शुद्धान्नमापवत्स्याश च कुमुदं मुद्गौदनम्
अपवद्बलिमिति प्रोक्तं न पदा बलिं इहोच्यते  २५

अजशङ्खस्य मांसं च मृगमांसं तथैव च
रक्तमिश्रं बलिं दत्वा पापराक्षसस्ये ति स्मृतम्  २६

पूतनायै तिलं पिष्टं विदार्यै लवणाशनम्
चरकियै मुद्गसारं च एवं तु बलिरिष्यते  २७

एवं तु पूजयेद्देवान् ग्राम्ययेद्रक्षणार्थकम्
ब्रह्माद्यादावपवश्चेति चतुर्देवपदे स्थितम्  २८

अन्याश्च देवताः सर्वे पदबाह्ये स्थिताः सदा
इह ग्रामस्य रक्षार्थं सुप्रसन्ना भवन्तु ते  २९

इति मन्त्रं समुच्चार्य प्रार्थयेद्बलिदेवताः
बलिकर्मविधाने तु स्थपतिः स्वं शिवं स्मरेत्  ३०

किमर्थमेतत् सुराणां भूतप्रेतोपशान्तये
अकृत्वा बलिकर्मन्तु विन्यस्तं समचावयम्  ३१

विनश्यति तदा भूमिः राक्षसैरतिदारुणैः
तद्दोषापगमार्थं तु बलिकर्म समाचरेत्  ३२

उक्तमार्गं बलिं कर्म कुर्वतो ग्रामशम्भुनिलयादिभिः सदा
पुष्टि तुष्टिरपि शान्तिर्मङ्गलं सर्वदा भवति कर्तृभक्तिः  ३३

इति मानसारे वास्तुशास्त्रे बलिकर्मविधानं नाम अष्टमोऽध्यायः

ग्रामलक्षणम्

वक्ष्येऽहं ग्रामविन्यासं शास्त्रे संक्षेपतः क्रमात्
दण्डकं सर्वतोभद्रं नन्द्यावर्तं तु पद्मकम्  १

स्वस्तिकं प्रस्तरं चैव कार्मुकं च चतुर्मुखम्
एवं चाष्टविधं ग्रामं तत्तद्रूपेण संज्ञितम्  २

प्रथमं ग्राममानं च द्वितीयं पद विन्यसेत्
तृतीयं तद्बलिं दत्वा चतुर्थं ग्राम विन्यसेत् ३

पञ्चमं गृह विन्यस्य तत्र गर्भं विनिक्षिपेत्
षद्धं गृहप्रवेशं च तन्मानमधुनोच्यते ४

धनुर्ग्रहैश्च यद्दण्डं तद्दण्डेनार्पयेद्बुधः
पञ्चविंशतिदण्डाद्यैः द्विद्विदण्डविवर्धनात् ५

एकाधिकशतान्तं स्यान्नवत्रिंशद्विशालकम्
एवं तु दण्डकं प्रोक्तं तस्यायाममिहोच्यते ६

विस्तारात्त्रिवद्विदण्डेन वर्धयेद्द्विगुणान्तकम्
यः शुभायादिकर्मार्थं दण्डहीनाधिकं तु वा ७

वानप्रस्थमिदं योग्यं क्षुद्रदण्डकमीरितम्
एकत्रिंशतिदण्डाद्ये द्विद्विदण्डेन वर्धनम् ८

सप्ताधिकशतान्तं स्यात्सप्तषट्विशालकम्
दीर्घं प्रागुक्तवत्कुर्यादेतद्दण्डक मध्यमम् ९

सप्तत्रिंशतिदण्डादि द्विद्विदण्डविवर्धनात्
त्रयोवेददशाधिक्यशतदण्डावसानकम् १०

दण्डकं चोत्तमं पञ्चचत्वारिंशद्विशालकम्
एतत्तु दण्डकं प्रोक्तं भूसुराणां तु योग्यकम् ११

पञ्चाशद्दण्डमारभ्य द्विद्विदण्डविवर्धनात्
द्विशतं दण्डान्तकं स्यात् षट्सप्ततिविशालकम् १२

षष्टे तु दण्डमारभ्य द्विद्विदण्डविवर्धनात्

सैकार्कत्रिंशतं दराडात् त्रिसप्तदशविस्तृतम्  १३

युग्मायुग्मं तु दराडेन सर्वतोभद्रमेव च
भूसुरामरयोग्यं स्यात्तदायामविशालकम्  १४

नन्दावर्त ग्राम ग्राम द्विद्विदराडविवर्धनम्
पञ्चषष्ट्यधिकं पञ्चशतदराडावसानकम्  १५

एव पञ्चद्विशतं विशालं परिकीर्तितम्
विस्तारायामस्तत्तुल्यो  १६

रं द्विद्विदराडेन वर्धयेद्द्विगुणान्तकम्
नन्द्यवर्तमिदं प्रोक्तं वर्तव्यं देवभूसुरैः  १७

पद्मकनामग्रामलत्तरणमुच्यते
शतदराड समारभ्य द्विद्विदराडविवर्धनात्  १८

एकसहस्रदराडान्तं विस्तारं तत् समं मतम्
परमाधिकपञ्चाशच्चतुःशतविशालकम्  १९

विप्रयोग्यं तथा पद्ममेवमुक्तं पुरातनैः
ग्रामविस्तारप्रमाणलत्तरणम्  २०

स्वस्तिकविन्यासमानलत्तरणमुच्यते
एकद्विशतदराडादौ विंशदराडविवर्धनात्  २१

द्विसहस्रेकदराडान्तं विस्तारं परिकीर्तितम्
तस्माद्विंशतिदराडेन वर्धयेत्तत्समाधिकम्  २२

तस्यायाममिदं प्रोक्तं स्वस्तिकं भूपयोग्यकम्
प्रस्तरविन्यासलत्तरणमुच्यते  २३

त्रिशतदण्डमारभ्य शतदण्डविवर्धनात्
सहस्रद्वयदण्डान्तं प्रस्तरं विस्तृतं भवेत् २४

सपञ्चषष्टिदण्डादौ द्विद्विदण्डविवर्धनात्
युग्मायुग्मं तथा वाऽपि दण्डं पञ्चशतान्तकम् २५

एतत् कार्मुकविस्तारं तस्यायाममिहोच्यते
तस्मात्तु शतदण्डेन वर्धनाद्द्विगुणान्तकम् २६

एवं तु वैश्यकानां तु योग्यं तत्कार्मुकं भवेत्
त्रिंशद्दण्डं समारभ्य त्रित्रिदण्डविवर्धनात् २७

शतदण्डावसानं स्याद्विस्तारं परिकीर्तितम्
तत्तत्त्रित्रिद्द्विद्विदण्डेन वर्धयेद्द्विगुणान्तकम् २८

एवं चतुर्मुखं प्रोक्तं शूद्राणामेव योग्यकम्
मुख्यगेहप्रदेशान्तं विस्तारायाम कल्पयेत् २९

तद्बहिः परितः कुर्यात्तस्मात्तु तदनन्तरे
दशादिशतदण्डान्तं द्विद्विदण्डेन वर्धनात् ३०

एवं ग्रामं प्रसारं च तद्बहिर्वप्रसंयुतम्
परितः परिखा बाह्ये कुर्याद्ग्रामेषु सर्वशः ३१

एतेषां ग्रामरूपाणामायादिलक्षणं तथा
नन्दायामसमूहे वा चायते वाऽथ विस्तरे ३२

परिणाहे पदे वाऽपि आयादिशुद्धं च कारयेत्
केचित्त्वायतने चैवमायं च तद्दिने भवेत् ३३

परिणाहे तित्थिर्वारं व्ययोनिश्च विस्तरे

वसुभिर्गुणितं भानुर्हान्यायमष्टशिष्टकम्  ३४

अष्टाभिर्वर्धिते ऋक्षं हृत्वा शेषं क्षपिष्यते
नवभिर्वर्धयेत्पङ्क्तिः हृत्वा शेषं व्ययं भवेत्  ३५

गुणनागं च योनि स्याद्वृद्धिहान्या यथाक्रमम्
नन्दवृद्ध्या ऋषिं हृत्वा तच्छेषं वारमेव च  ३६

नवभिर्गुणिते त्रिंशत् क्षपेच्छेषं तिथिर्भवेत्
एवमायादिषड्वर्गं कुर्यात्तत्र विचक्षणैः  ३७

आयं सर्वहरं पूर्णं व्ययं सर्वगतेन हि
आयाधिक्यं व्ययं हीनं सर्वसम्पत्करं तथा  ३८

आयहीनं व्ययाधिक्यं सर्वदोषकरं भवेत्
शुभदं पूर्णनक्षत्रमशुभं कर्णऋक्षकम्  ३९

युग्मायुग्माद्यतुर्यं षडष्टनन्दशुभर्क्षयुक्
द्वितीयपर्यायस्यार्थे गणनैश्च शुभावहम्  ४०

सितगुरुशशिबुधवारमेवं शुभं भवेत्
शुभयोगं भवेद्यत्तु वारदोषो न विद्यते  ४१

सौरवारादिवारेषु वारयुक्तम् चतुर्द्दिने
गणैस्तु विशाखादिस्वातिकान्तं क्रमात्ततः  ४२

गण्डं च मृत्युयोगं च सिद्धियोगमिदं विदुः
अमावस्याष्टमीं चैव नवमीं च विवर्जयेत्  ४३

अन्यथा शुभदं सर्वं तिथिरेवं प्रशस्यते
अष्टमं राशिवर्जं च अन्ये शुभराशयः  ४४

गणे वासुरमानुष्यं विना अन्ये गणे शुभम्
सौरादियदि वारान्तं तत्सर्वं त्रिगुणसमम्  ४५

अश्विन्यादिदिनं हृत्वा तच्छेषं नयनं भवेत्
प्रथमं चैकनेत्रं च द्वितीयं च द्विनेत्रकम्  ४६

तृतीयं च इति प्रोक्तं नन्दात्षट्क्रमात् सुधी
अथ दण्डक विन्यासलक्षणं वक्ष्यतेऽधुना  ४७

चतुरश्रायतं कृत्वा समतारं न विद्यते
चतुरश्रायतं वप्रं तद्वप्रायतमेव च  ४८

एतत् त्रितयं वाऽपि पञ्चरथ्यामथापि च
तस्य मूलाग्रयोर्वीथीं न कुर्याद्वाऽथ कल्पयेत्  ४९

तदेव तिर्यङ्मध्ये कवीथीं कृत्वा विना तथा
एकद्वित्रिचतुष्पञ्चदण्डं रथ्याविशालकम्  ५०

मध्यरथ्यावृता वीथी सममेवं विधीयते
अन्येषां चान्तरथ्यानां वा तत्समं तु वा  ५१

मूलाग्रयोर्द्विरथ्या च पक्षमेकं तथाश्रयम्
मुख्य वीथी द्विपक्षं स्याद्गृहतारं त्रिदण्डकम्  ५२

तच्चतुष्पञ्चदण्डं वा युक्त्या तद्गृहविस्तृतम्
विस्तारद्विगुणं वाऽथ त्रिगुणं वा तदायतम्  ५३

परितः परिखा बाह्ये वप्रयुक्तं तु कारयेत्
चतुर्द्वारं च संकल्प्य पूर्वादि च चतुर्दिशि  ५४

उपद्वारोक्तवत्कुर्याद्विष्णुधिष्ण्यं तु पश्चिमे

तद्ग्रामस्य बहिर्वाऽपि वरुणे च पदे तथा  ५५

मित्रे चैव पदे चापि विष्णुमूर्तिं यथेष्टकम्
ईशे शङ्कर संस्थाप्य पर्जन्ये चोदिते तथा  ५६

अन्तर्वाऽपि बहिर्वाऽपि यथेष्टकं शिवहर्म्यकम्
एतद्दण्डकमित्युक्तं भूसुराणां तु योग्यकम्  ५७

द्वादशैर्विप्रसंघं वा चतुर्विंशतिभूसुरान्
पञ्चाशद्द्विजसंघैश्च अष्टोत्तरशतं तु वा  ५८

त्रिशतद्विजसंघैर्वा द्वादशं चेति मौनिनाम्
वनान्तरे पर्वते वा तथा चाश्रममीरितम्  ५९

चतुर्विंशतिसंघं चेद्यतीनां ग्रामयोग्यकम्
एतत्तु नदीतीरे वा पुरमेतत्प्रकथ्यते  ६०

पञ्चाशद्दीक्षितानां तु नग्रं तु प्रशस्यते
अष्टोत्तरं पञ्चाशद्गृहस्थानां तु मङ्गलम्  ६१

विकरिं शतसंघैश्च कोष्ठमेवं प्रकथ्यते
अन्येषाम् विप्रसंघैश्च यथेष्टं नाम कल्पयेत्  ६२

अन्यान्यनुक्तं सर्वेषां शास्त्रमार्गेण कारयेत्
सर्वतोभद्रविन्यासं लक्षणं वक्ष्यतेऽधुना  ६३

चतुरश्रसमाकारं मण्डूकं पद विन्यसेत्
अथवा स्थण्डिलं वाऽपि मध्ये तद्ब्रह्ममण्डपम्  ६४

अथवा देवताहर्म्यं विष्णोर्वाऽथ शिवस्य वा
तपस्विनां यतीनां च पाषण्डाश्रमिणां तथा  ६५

ब्रह्मचारी तथा योगिनां संघैर्यथेच्छया
एकद्वित्रिचतुष्पञ्चरथ्या वा परितस्तथा ६६

एकपक्षान्तरथ्या च बाह्यरथ्या द्विपक्षयुक्
पैशाचान्तपदैः सर्वैस्तेन वीथीं प्रकल्पयेत् ६७

पैशाचेशान्तराले महादिक्पाल बहिरिष्यते
तत्तद्वीथी द्विपक्षं स्यान्नन्द्यावर्ताकृतिस्तु वा ६८

अथवा कृतकृत्या च कर्णयुक्तमथापि च
ईशानादिचतुष्कर्णे मठं वा मण्डपं तु वा ६९

तत्रैव सत्रशाला वा आग्नेये पानीयमण्डपम्
अन्यधर्मालयं सर्वं यथेष्टं दिशितो भवेत् ७०

अन्तरथ्ये चतुष्कर्णे गुरोरेवं मठं भवेत्
रक्षार्थं वप्रसंयुक्तं परितः परिखान्वितम् ७१

चतुर्दिक्षु महाद्वारो पद्वारमुक्तवद्भवेत्
महारथ्यामालयं कुर्यात्सर्वकर्मोपजीविनाम् ७२

दक्षिणे वैश्यशूद्राणामालयं श्रेणिरेव च
इन्द्रे चाग्नि तयोर्मध्ये गोपालश्रेणिरेव च ७३

तद्बहिश्चैव गोशाला रक्षार्थं वप्रसंयुतम्
पितृवारुणयोर्मध्ये वस्त्रकर्मकरालयम् ७४

तद्बहिः सूचिकहर्म्यं तत्र चर्मकरालयम्
वायुवरुणयोर्मध्ये कर्मकरालयं भवेत् ७५

तद्बहिश्चालयं कुर्यान्मत्स्यमांसोपजीविनाम्

सौम्ये वायु तयोर्मध्ये श्रीकराणामालयं भवेत्  ७६

तत्र वैद्यालयं वाऽपि अम्बष्ठकालयमेव च
तस्य बाह्यप्रदेशे तु वल्कलैःकर्मणालयम्  ७७

तत्र तैलोपजीविनां गृहश्रेणिं प्रकल्पयेत्
ग्रामस्य वप्र तद्बाह्ये किञ्चिद्दूरोत्तरे दिशि  ७८

वैष्णव्याश्चाथ चामुण्डा आलयं कारयेद्बुधः
तस्माद्दूरे तु देशे च चण्डालकुटिकान्वितम्  ७६

जनावासमिदं प्रोक्तं ग्रामाद्बाह्यप्रदेशके
दक्षिणे पश्चिमे वाऽपि नैर्ऋत्ये वाऽपि देशके  ८०

स्नानपानादिकं योग्यं तडाकं कल्पयेत्ततः
शेषं तु शास्त्रमार्गेण कारयेच्छिल्पिवित्तमः  ८१

नन्द्यावर्तस्य विन्यासलक्षणं वक्ष्यतेऽधुना
पूर्वोक्तदण्डमानेन विस्तारायामकल्पनम्  ८२

समविस्तारमायाममायधिकमथापि वा
चण्डिताख्यपदं न्यासं मण्डूकं परिकल्पयेत्  ८३

ग्रामे चायतवितारौ समे चेत्कल्पयेत्सुधीः
आयाधिकं यथा ग्रामे नन्दनन्दपदं भवेत्  ८४

अथवा स्थण्डिलं न्यस्य समायाममित्यपि वा
पदं च चण्डित तन्मध्ये ब्रह्मणश्च चतुष्पदम्  ८५

तद्बहिः परितो भागे दैवकं च दशांशकम्
तद्बाह्ये विंशतिपदं परितो मानुषं भवेत्  ८६

तद्बहिश्चावृतांशेन पैशाचं चाष्टविंशति
एवं तु चण्डितं प्रोक्तं परमशायिकमुच्यते ८७

मध्ये नवपदं बाह्ये दैवकं षोडशांशकम्
तद्बहिर्मानुषं चैव चतुर्विंशपदं भवेत् ८८

पैशाचं बाह्यमावर्तं तद्द्वात्रिंशकं पदम्
स्थण्डिलं पदमध्ये च ब्रह्मणस्यैकमात्रकम् ८९

दैवकं चाष्टभागं स्यान्मानुषं षोडशांशकम्
तद्बहिश्च चतुर्विंशत्पदं पैशाचमेव च ९०

एषां पदैर्यथायोग्यं विन्यसेच्छिल्पिवित्तमः
तत्पैशाचपदं चोक्तं नन्द्यावर्ताकृतिर्भवेत् ९१

प्राचीरथ्योत्तराभ्य स्याद्दक्षिणायत निर्गमम्
दक्षिणावीथीपूर्वादिपश्चिमायतनिर्गमम् ९२

पश्चिमवीथी दक्षिण्यादुत्तरायत निर्गमम्
उदग्वीथी प्रतीच्यादितत्पूर्वायत निर्गमम् ९३

नन्द्यावर्तावृतावीथीमेवमूह्यं विचक्षणैः
दक्षिणोदग्द्वयोर्वाऽपि प्राक्प्रत्यग्द्वितयोपि ९४

अन्तर्वीथीनां मूलाग्रौ चैकपक्षं प्रयोजयेत्
पार्श्वयोश्च द्विविधं स्याद्द्विपक्षमुक्तं पुरातनैः ९५

एवं बाह्यवीथी स्यादन्तर्वीथिरिहोच्यते
आयते दीर्घरथ्या स्याद्विस्तारे दीर्घमेव च ९६

एकत्रिपञ्चसप्तयो वीथी पूर्वाद्द्विपक्षयुक्

एकद्वित्रिचतुष्पञ्चमार्गं वा परिकल्पयेत् ९७

एवं बहिर्गतं मार्गं तत्र पक्षं न कारयेत्
पक्षयुक्ता तु वीथी स्यात्पक्षहीनं तु मार्गकम् ९८

महामार्गं तु सर्वेषां वीथीनां कर्करीकृतम्
मध्येषां तु यथारज्जुः क्षुद्रमार्गं प्रयोजयेत् ९९

त्रिचतुःपञ्चदण्डं वा वीथीनां विस्तृतिर्भवेत्
षट्सप्ताष्टदण्डं वा नन्दपङ्क्तीशभानुषु १००

केचिद्रथ्या विशालाश्च सर्वेषां तत्समं तु वा
महामार्गविशालं यद्वीथीनन्दसमं तु वा १०१

महारथ्यासमं मध्ये वीथीविस्तारमिष्यते
मध्ये समं तु मध्ये मार्गमेवं विशालकम् १०२

तदष्टांशोनमेवं वा त्रिपादं चार्धमेव वा
अन्यासां सर्ववीथीनां यथातत्सममेव वा १०३

तत्समं वा त्रिपादं वा महामार्गं विशालकम्
तत्त्रिपादार्धं तु विस्तारं क्षुद्रमार्गविशालकम् १०४

एवं विन्यासमुद्दिष्टं भूसुराणां तु योग्यकम्
अथाष्टाधिकं पञ्चाशदष्टोत्तरशतं तु वा १०५

त्रिंशतैर्वप्रसंख्या च अष्टोत्तरसहस्रकम्
सहस्रत्रयवप्रं वा सहस्रैश्च चतुष्टयम् १०६

देवमनु तु पैशाचे भूसुरान् परिपूर्णकम्
एवं मङ्गलमाख्यातं यस्तु वास्तुर्विनिर्दिशेत् १०७

नृपवैश्यादिजातीनामेवं चेत् पुरमुच्यते
वैश्यशूद्रादीनां योग्यमग्रहारं प्रशस्यते १०८

एवं मर्त्यपदेनान्तः भूसुराणां गृहान्वितम्
देवमानुषपैशाचे यद्राजगृहमेव च १०९

तत्पैशाचपदे वैश्यशूद्रजात्यादिकालयम्
पैशाचे द्विरथ्या वा त्रिचतुष्पञ्चषदेव वा ११०

सप्तकं वा तथा रथ्या वा विशालं तथा न्यसेत्
दक्षिणे प्रथमारथ्ये वैश्यकानां तु वेश्मानि १११

वारुणे चक्रवर्ती स्यादेवमालयस्य विधिः
अथ मित्रपदे चैव जयन्ते रुद्रजये तथा ११२

एवं राजगृहं प्रोक्तं तत्रैवं योधकालयम्
नैर्ऋत्ये च पदे देशे श्रीकराणां तु हर्म्यकम् ११३

सामन्तप्रमुखादीनामसुरे सोष्टकेऽपि च
तत्रैवामात्यहर्म्यं स्यात्स्वाम्कालयमेव च ११४

पुरोहितालयं सुग्रीवे पुष्पदन्तपदेऽपि च
दौवारिकश्च सुग्रीवे रक्षकालयं भवेत् ११५

गन्धर्वं रोगशोषे वा वाद्यकाद्यादेरालयम्
तत्रैव गणिकादीनां नृत्तयोग्यादिरालयम् ११६

वायव्ये वा नरे वाऽपि स्थपतीनां तथालयम्
नागे चाथवा मुख्ये वा नेत्ररत्नकरालयम् ११७

उत्तरे शल्यशालाश्च कञ्चयासकालयम्

अदितिश्चोदितश्चैव वैद्यकादितथालयम् ११८

ईशे वाऽथ जयन्ते वा ग्रामरक्षिकालयम्
महेन्द्रे वाऽथ सत्ये वा कीर्णकारालयं भवेत् ११९

मृशे वा चान्तरिक्षे वा आहूयक्रमहर्म्यकम्
एवं प्रथमावरणे द्वितीयावरणमुच्यते १२०

तैलोपजीविनां वासश्रेणितोत्तरवीथिके
तत्रैव नानाहर्म्यं स्यात्कुलालालयमेव च १२१

मत्स्योपजीविनां वास मांसव्यापारिकादीनां च
पश्चिमे वाऽऽलयंश्रेणिः किरातानां तु दक्षिणे १२२

आग्नेये वायवे वाऽपि रजकस्यालयं भवेत्
दक्षिणे पूर्वदेशे वा नृत्तकारालयं भवेत् १२३

उत्तरे वा नैर्ऋते वाऽपि सूतिकारालयं भवेत्
एवं द्वितीयावरणे तृतीयावरणोच्यते १२४

दक्षिणे कर्मकारस्य तत्र श्रेण्यालयं भवेत्
उत्तरे चाग्निदेशे वा पेटिकारालयं भवेत् १२५

पश्चिमे पूर्वके वाऽपि शस्त्रकर्मकरालयम्
उत्तरे चर्मकारस्य तच्छ्रेण्यालयमेव वा १२६

अन्यथावरणाः सर्वमन्यकर्मोपजीविनाम्
एवं नरालयं प्रोक्तं देवानामधुनोच्यते १२७

आर्यादिषु चतुर्दिक्षु ग्रामस्यापि चतुर्दिशि
एवं यथेष्टदिग्देशे विष्णुधिष्ण्यं प्रकल्पयेत् १२८

अथवा बहिरङ्गे तु चेष्टदिग्विष्णुरालयम्
इन्द्रादिषु चतुर्दिक्षु विष्णुस्थानं तु राक्षसे १२९

पूर्वके श्रीधरं प्रोक्तं दक्षिणे वामनं तथा
पश्चिमे वासुदेवं वा चादिविष्णुं जनार्दनम् १३०

उत्तरे केशवं प्रोक्तं नारायणमथापि वा
अन्तः प्रागुत्तरे देशे विष्णुमूर्तिर्यथेष्टकम् १३१

पितृदेवेशकोणे वा यथा नृसिंहालयं भवेत्
अग्निकोणे यथा रामं गोपालालयमेव वा १३२

मित्रे च त्रितलं कुर्यात्स्थानकं चादिभूमिके
द्वितीयं चासनं प्रोक्तं तृतीये शयनं भवेत् १३३

अथवा स्थानकं चोर्ध्वे शयनं मूलकस्थले
इष्टदिग्विष्णुहर्म्याणां द्वारं कुर्याद्विचक्षणः १३४

ग्रामस्याभिमुखं विष्णुं नरसिंहं पराङ्मुखम्
लक्ष्मी नृसिंहश्चैवाऽपि ग्रामस्याभिमुखो भवेत् १३५

रुद्रं रुद्रजये वाऽपि इन्द्रश्चेन्द्रजयेषु च
आपवत्स्यापवत्स्यश्च साविन्द्रश्चा सान्द्रके १३६

ईशे वाऽथ जयन्ते वा पर्जन्यस्य पदेऽपि वा
एवमीशालयं कुर्याद्ग्रामस्य तु पराङ्मुखम् १३७

पूर्वके पश्चिमे वाऽपि तत्रैवाभिमुखं भवेत्
अन्यसकलरूपाणां हर्म्यद्वारं यथेष्टतः १३८

स्वकर्णे वाऽपि दौवारि सुब्रह्मण्यालयं भवेत्

अथवा जिनालयं स्यात्सुगतालयमेव च १३९

चतुर्दिक्षु विदिक्ष्वापि मध्ये वैनायकालयम्
गन्धर्व भृङ्गराजे वा भार्गकारालयं भवेत् १४०

मुख्ये वाऽथ च भल्लाटे सारस्वत्यालयं भवेत्
अदितौ वा मृगे लक्ष्मीभवनकं स्मृतम् १४१

तत्रैव भुवनादेवीहर्म्यमेवं प्रकल्पयेत्
यद्द्वारस्य बहिरङ्गे रक्षार्थं भैरवालयम् १४२

राक्षसे पुष्पदन्ते वा दुर्गायाश्चापि चालयम्
तद्ग्रामस्य बहिः सौम्ये कालिकोष्ठं प्रकल्पयेत् १४३

ग्रामात्क्रोशावसानं स्यात्पूर्वे वा चोत्तरेऽपि वा
तत्र चण्डालावासः स्याच्चोत्तरे च श्मशानकम् १४४

ग्रामस्य चोत्तरे बाह्ये प्रेतभूतांशदण्डकम्
ग्रामस्य परितो बाह्ये रक्षार्थं वप्रसंयुतम् १४५

तद्बहिः परिखायुक्तं परितो वप्रवेदिकैः
चतुर्दिक्षु चतुष्कोणे महाद्वारं प्रकल्पयेत् १४६

वृत्तं वा चतुरश्रं वा वास्तुस्वाकृतिवप्रयुक्
पूर्वद्वारमथैशाने चाग्निद्वारं तु दक्षिणे १४७

पितुर्द्वारं तु तत्प्रत्यग्वायोर्द्वारं तथोत्तरम्
पूर्वपश्चिमयोर्द्वारौ तत् सूत्रं तु योजयेत् १४८

दक्षिणोत्तरयोर्द्वारौ तत्र देशे विशेषतः
दक्षिणोत्तरकं सूत्रं विन्यसेच्छिल्पिवित्तमः १४९

तस्य सूत्रान्ततत्पूर्वे हस्तं तद्द्वार मध्यमे
एवं दक्षिणतो द्वारं तद्धि वारौ यथोक्तवत् १५०

उत्तरे द्वार तत्सूत्रात्प्रत्यग्घस्तावसानकम्
चतुर्दिक्षु चतुर्द्वारं युक्तं वा नेष्यते बुधैः १५१

पूर्वे पश्चिमके वाऽपि द्वारमेतत् द्वयोरपि
परितश्चतुरश्राग्राद्द्वारं कुर्यात्तु सर्वदा १५२

एतत्सर्वं महाद्वारमुपद्वारमिहोच्यते
नागे वाऽपि मृगे वाऽथादितिश्चोदितोऽपि वा १५३

पर्जन्ये वाऽन्तरिक्षे वा पूषे वा वितथेऽवा
गन्धर्वे भृङ्गराजे वा सुग्रीवे वाऽसुरेऽथवा १५४

यथेष्टमेवमुपद्वारं कुर्यात्तल्लक्षणोक्तवत्
मुख्यके वाऽथ भल्लाटे मृगे चोदितोऽथवा १५५

जयन्ते वा महेन्द्रे वा सत्यके वा मृशेऽथवा
एवमेवं जलद्वारं कुर्यात्तत्र विचक्षणः १५६

ब्रह्मणे वाऽग्निदेशे वा मित्रे वा मण्डपं भवेत्
भूधरे चासुरे वाऽपि सभास्थानं प्रकल्पयेत् १५७

नन्द्यावर्तमिति प्रोक्तं तन्त्रविद्भिः पुरातनैः
पद्माख्यं वास्तुविन्यासलक्षणं वक्ष्यतेऽधुना १५८

दीर्घमायसमं कृत्वा बाह्ये वप्रं सुवृत्तकम्
चतुरष्टाश्रकं वाऽपि षडश्रं वा विधीयते १५९

चण्डितं स्थण्डिलं वाऽपि यथेष्टं पद विन्यसेत्

शूलषट्घ्रांति राज्ये च नरालयं प्रकारयेत् १६०

तद्देशे सदा स्थाप्यं मराडपं वा सभा भवेत्
बहिः सर्वरथ्येषु पद्मैरावर्तकेषु च १६१

चतुःपञ्च च षट् सप्त चाष्टकं वाऽथ वीथिका
मध्ये वीथिं विना कुर्याच्चतुर्दिग्द्वारकल्पनम् १६२

एवं तु पद्मविन्यासं शेषं प्रागुक्तवन्नयेत्
स्वस्तिकस्यापि विन्यासलन्नणं वन्यतेऽधुना १६३

यत्तदायामविस्तारे न्यसेत्परमशायिकम्
तत्पैशाचपदे चैव रथ्या तत्परितस्तथा १६४

तस्यान्तः स्वस्तिकाकारं विन्यसेच्छिल्पिवित्तमः
प्राक्प्रत्यक् च समायामं वास्तुमध्ये तु वीथिका १६५

दन्निणोत्तरमायामं पूर्वमध्ये तु वीथिका
वीथीम् एतद्द्वयं प्रोक्तं तन्मध्ये कर्करीकृतम् १६६

उदीच्यां दिशि पर्यन्तं प्राङ्मुखायतवीथिका
प्रागादीशाग्निपर्यन्तं दन्निणायतवीथिका १६७

दन्निणादिनैर्ऋतान्तं पश्चिमायतवीथिका
पश्चिमाद्वायुपर्यन्तमुत्तरायतवीथिका १६८

एतत्तु चतु रथ्याग्रादावृता वीथिका ततः
एवं तु स्वस्तिकवीथी लाङ्गलाकारवद्भवेत् १६९

मध्ये वीथीद्वयोग्रे तस्य मूलद्वयं बुधैः
चतुर्दिन्नु चतुष्कर्णे चतुर्दिन्नु चतुर्मुखम् १७०

पूर्वोक्तं मध्यरथ्यान्तं चतुष्कर्णावसानकम्
इन्द्रादीशानपर्यन्तं मध्यं सोमावसानकम्  १७१

तत्तयोर्मध्यदेशे तु प्राक्प्रत्यक् दिग्गतायतम्
बाह्येन्द्रानलयाम्ये तद्द्वयोर्मध्यदेशके  १७२

दक्षिणोत्तरयोर्दीर्घा वीथीरेतत् प्रकल्पयेत्
ब्राह्मयां याम्याश्च नैर्ऋत्यां वारुणान्तःप्रदेशकम्  १७३

पूर्वपश्चिमदीर्घा च वीथीरे वं तु कारयेत्
वायुवारुणसोमेतु ब्रह्मणान्तं पदे तथा  १७४

दक्षिणोत्तररथ्यं तत्तत्संख्या यथेष्टकम्
एवं वीथी द्विपक्षं स्यान्मध्यरथ्ये न पक्षकम्  १७५

तस्य मूलाग्रेयो देशे क्षुद्रमानं प्रकारयेत्
बाह्यवीथी द्विपक्षं स्यात्तद्बहिश्चावृतं बुधैः  १७६

वप्रांशभित्तिरक्षार्थं परितः परिखान्वितम्
स्वस्तिकाग्रं चतुर्दिक्षु द्वारं तेषां प्रकल्पयेत्  १७७

एवं चाष्टमहाद्वारं दिक्षु दिक्षु द्वयं ततः
मृगे चैवान्तरिक्षे वा भृङ्गराजमृशे तथा  १७८

शोषे वाऽपि च रोगे वा चादितिश्चोदितेऽपि वा
एवमेतदुपद्वारं कुर्यात्तत्र विचक्षणः  १७९

महाद्वारं तु सर्वेषां लाङ्गलाकारसन्निभम्
कपाटद्वयसंयुक्तं द्वाराणां तत्पृथक् पृथक्  १८०

अन्तर्वप्र बहिर्भित्तिश्चेष्ट दिगाता चूलिका

यन्त्ररुद्रादिकैः सर्वैर्नटैश्चाद्यभययन्त्रकैः १८१

सालान्तं वेदिकोर्ध्वे तु युद्धार्थं कल्पयेत् सुधीः
नानाजातिभिराकीर्णं स्वस्तिकं राजयोग्यकम् १८२

एवं तु स्वस्तिकं प्रोक्तं स्थानीयादिषु कारयेत्
चतुर्दिक्षु विदिक्ष्वेव मध्ये वा राजवेश्मकम् १८३

मध्ये ब्रह्मपदं त्यक्त्वा आर्यादौ च चतुष्पदे
यथेष्टं राजसदनं स्थानीये सर्वभूमिकम् १८४

आगते वारुणे वेश्म संग्रामे च यमे पदे
विजये सौम्यदेशे च तथेन्द्रजयेऽपि वा १८५

स्थानीये चाधिराजस्य मित्रे वारुणे एव च
आगते स्वस्वते चापि संग्रामे चापि सौम्यके १८६

विजये चार्कभागे वा चेन्द्रस्थाने गृहं भवेत्
स्थानीयेऽपि नरेन्द्रस्य वेश्म मित्रपदेऽपि वा १८७

विवस्वति पदे वाऽपि तथैवार्यपदेऽपि वा
आगते तु नरेन्द्रस्य संग्रामे चेन्द्रराजके १८८

विजये रुद्रराजश्च सदनं कल्पयेत्सुधीः
पार्ष्णिकादिभूपानां स्थानीयादिचतुष्टये १८९

आर्यादिषु चतुर्दिक्षु नैव कुर्यात्तु विश्वतः
एवमेव प्रशस्तव्यं शिल्पिशास्त्रोक्तवत्कुरू १९०

मित्रे च वारुणे चापि विवस्वेन्द्रमहेन्द्रके
एवं तु विष्णुधिष्ण्यं स्यात्स्थानीयादिचतुष्टये १९१

इन्द्रे चेन्द्रजये वाऽपि रुद्रे रुद्रजयेऽपि वा
आपवत्सापवत्सयोरपि चैशे वाऽपि जयन्तके १९२

एवमीशालयं प्रोक्तं कुर्याद्देवं बहिर्मुखम्
बौद्धं वायुपदे चैव नैर्ऋत्ये तु जिनालयम् १९३

भृङ्गराजे वितथे वा हर्म्यं कुर्यात्तु नागरे
चतुर्दिक्षु बहिर्द्वारं पार्श्वे च भैरबालयम् १९४

चतुर्दिक्षु विदिक्ष्वपि दुर्गाङ्गं गणपालयम्
सुग्रीवस्य पदे चैव षण्मुखस्यालयं भवेत् १९५

अग्निं पूषपदे वाऽपि ज्वरदेवालयं भवेत्
आदित्ये तु पदे वाऽपि भास्करस्यालयं भवेत् १९६

सौम्यके वाऽपि मुख्ये वा भुवनेशालयं भवेत्
तत्तत्पदे मध्ये तु विष्णुरुद्रालयं भवेत् १९७

एतानि स्थानानि परितो नराणां सदनं भवेत्
अन्तर्वीथी चैकपक्षं बाह्यवीथी द्विपक्षकम् १९८

एवमालयवास्तु स्यद्बाह्ये पक्षाभिरक्षणात्
एवमन्तर्गतान्देवान् बहिरङ्गे यथेच्छया १९९

शुद्धा चैव प्रतिष्ठा चेल्लिङ्गपाशुपतं तथा
नगर्यां तत्प्रतिष्ठे तु चोक्तवत्स्थापनं भवेत् २००

अन्येषां सर्वलिङ्गानां नगराणां बहिरङ्गतः
वैखानसप्रतिष्ठा चेदन्तस्थापनमिष्यते २०१

विष्णुदेवैरिति प्रोक्तं पाञ्चरात्रं बहिर्भवेत्

दुर्गां गणपतिं चैव बौद्धं जैनं गतालयम्  २०२

अन्येषां षण्मुखादीनां स्थापयेन्नगराद्बहिः
तत्तद्देवालयं वाऽपि कुर्याद्दोषो न विद्यते  २०३

अपि सर्वेषु नगरेषु संस्थापनमिष्यते
नगरस्य बहिश्चोदक्पूर्वे वाऽप्यतिदूरतः  २०४

चामुण्डालयं कुर्यादुत्तराभिमुखं तथा
तस्य देवालयात्पूर्वे चण्डालकुटिकान्वितम्  २०५

पूर्वे चोत्तरदेशेऽथ पश्चिमे वाऽथ नैर्ऋते
नगरात्तु बहिर्देशे तत्सेनालोकनार्थकम्  २०६

उत्तुङ्गवेदिकाचोर्ध्वे चोक्तवन्मण्डपं भवेत्
शेषं प्रागुक्तवत्कुर्याद्युक्त्या च शिल्पिवित्तमः  २०७

प्रस्तरस्य तु विन्यासलक्षणं वक्ष्यतेऽधुना
आयतं वा समं वाऽपि प्रस्तरस्याकृतिस्तथा  २०८

नृपाणां वाऽथ वैश्यानां योग्यमुक्तं पुरातनैः
नन्दनन्दपदं वाऽपि चण्डितं स्थण्डिलं तु वा  २०९

तद्यथेष्टपदं शिल्पि ग्रामे च परिकल्पयेत्
पैशाचेऽथपदे चैव महारथ्या द्विपक्षयुक्  २१०

एतत्तु परितः कुर्यात्तस्यान्तः प्रविष्टके
पेचकं वाऽथ पीठं वा रथ्यायुक्तं तु विन्यसेत्  २११

अथवा तन्महापीठे तत्र संयुक्तवीथिका
पूर्वपश्चिममायामं दक्षिणोत्तरदीर्घकम्  २१२

तन्मध्ये वैकवीथी स्यात्पैशाचाख्ये पदे बुधः
कृत्वा पीठपदे चैक मध्ये वीथीं न कारयेत्  २१३

पूर्ववद्दिक्षु चायामं द्विद्विरथ्यां प्रकल्पयेत्
महापीठपदे रथ्या दिक्षु दिक्षु त्रयं तथा  २१४

तेषामेव महारथ्यास्तस्मिन् विस्तारमुच्यते
षट्सप्ताष्टकदण्डं वा नन्दनाटकरुद्रकम्  २१५

एतत्सर्वं महावीथीविस्तारः परिकीर्तितः
यत्पदे तत्पदं ज्ञात्वा तत्तत्प्रत्येक तत्पदे  २१६

पुराकृतं पदं न्यस्य रथ्यान्तं परिकल्पयेत्
तत्पैशाचपदे देशे वावृता वीथिका भवेत्  २१७

तद्रथ्यान्तः प्रदेशे तु प्रागुदगायते तथा
त्रिपञ्चसप्तरथ्या वा अष्टमं च वन्धं भवेत्  २१८

एकद्वित्रिचतुर्वाऽपि तिर्यङ्मार्गं तथैव च
चतुष्कोष्ठं तु युक्तं चेच्चतुष्कं चैकाष्टसन्धिभिः  २१९

नवकोष्ठकयुक्तं चेच्चतुष्कं च चतुष्टयम्
सन्ध्याष्टकसमायुक्तं सन्धिभिर्द्वादशैर्युतम्  २२०

चतुष्कं नवकं कुर्याद्देवमन्तःप्रदेशके
तत्तत्प्रकोष्ठके प्रत्यक् प्रत्यग्ग्रामाकृतिस्तथा  २२१

प्रागुक्तवत्प्रदेशे तु देवतास्थापनं बुधैः
मण्डपादि च भूपानां वेश्म कुर्यात्तु पूर्ववत्  २२२

तत्तद्ग्रामान्तरे देशे वैश्यसंघैस्तदालयम्

तत्तत्पैशाचकपदे सर्वं कार्योपजीविनाम्  २२३

महारथ्यायताः सर्वे क्रयस्य विक्रयस्य च
तत्रैव द्वयपक्षं स्यान्महारादवासं युतम्  २२४

बाह्ये प्राकारसंयुक्तं परितः परिखान्वितम्
महारथ्यावशात्तेषां महाद्वारं प्रकल्पयेत्  २२५

चतुर्भिस्तुष्टकं वाऽपि द्वादशद्वारमेव च
शेषं तु पूर्ववत्कुर्यात्प्रस्तरेत् तन्त्रवित्तमः  २२६

ग्रामकार्मुकविन्यासलक्षणं वक्ष्यतेऽधुना
विस्तारसममायाममायाधिकमथाऽपि वा  २२७

पत्तनं वा खेटकं वा खर्वटं वा प्रकल्पयेत्
पत्तनं वैश्यसंघं स्याच्छूद्रसंघं तु खेटकम्  २२८

प्रथुलोमं च संघं स्यात्खर्वटं तत्प्रकीर्तितम्
नदीतीरेऽब्धितीरे वा कार्मुकं च विन्यसेत्  २२९

रथ्याद्यैश्चैकसन्धिः स्यात्पश्चिमोन्तर्गतस्तथा
दक्षिणे पूर्वके रथ्यामुत्तरे पूर्वकेऽपि च  २३०

दक्षिणे पश्चिमे वाऽपि रथ्या क्षेत्रवशाद्बुधः
तद्द्वयोर्वीथि बाह्ये तु कार्मुकाकारवत्पृथक्  २३१

एकद्वित्रिचतुष्पञ्चवीथिरेवं प्रकल्पयेत्
रथ्या सर्वा द्विपक्षं स्यात्तिर्यङ्मार्गं यथेच्छया  २३२

चतुर्दिक्षु पृथक् प्राज्ञश्चोक्तवत्पद विन्यसेत्
ग्रामाकारवशात्सर्वं कारयेच्छास्त्रवित्तमः  २३३

स्थापयेदीश्वराद्यैः देवैः प्रागुक्तदेशतः
यथेष्टद्वारसंयुक्तं वप्रयुक्त्या विनाऽथवा २३४

यत्तु रथ्याद्वयोर्मध्ये विष्णुस्थानं प्रकल्पयेत्
एतद्ग्रामस्य सन्धिश्चेत्तद्देशे शङ्करालयम् २३५

रथ्याविरहितस्थाने विष्णोर्वाऽपि शिवालयम्
विष्णुर्निरीक्षणं वास्तुवारात्पराङ्मुखे शुभम् २३६

एवं तु कार्मुकं प्रोक्तं शेषं प्रागुक्तवद्भवेत्
चतुर्मुखं ग्राम विन्यासलक्षणं वक्ष्यतेऽधुना २३७

चतुरश्रसमाकारमायामं वा प्रकल्पयेत्
प्राकारं चतुरश्रं वा प्राक्प्रत्यग्गतायतम् २३८

परितस्तु महावीथिर्वीथिरेषा द्विपक्षयुक्
अन्तश्चतुष्पदं मध्ये वीथिकाग्रं चतुर्दिशि २३९

तच्चतुर्वीथिकाग्रौ च चतुर्द्वारं प्रकल्पयेत्
एकतस्तु महाद्वारमुपद्वारं तु पूर्ववत् २४०

तत्तच्चतुःक्षुद्रवीथिं संकल्प्य च यथेष्टकम्
परितस्तु महारथ्ये चालयं सर्वजातिनाम् २४१

अन्तश्च शूद्रसंघः स्यादालयं परिकल्पयेत्
अथवा विप्रसंघश्चेत्पद्ममेव प्रकल्पयेत् २४२

अथवा वैश्वसंघश्चेत्कोलकोत्ममुदीरितम्
केचिच्चतुष्पदे सर्वे द्विजानामालयं भवेत् २४३

आग्नेये विप्रसंघश्चेन्नैर्ऋते नृपसंकुलम्

वायव्ये वैश्यसंघश्चेत्सद्मे चेदीशदिशके २४४

तत्पैशाचपदे चैव सर्वकर्मोपजीविनाम्
विष्णुरुद्रादिदेवानां गृहं कुर्यात्पुरोक्तवत् २४५

उक्तानुक्तं तु सर्वेषां कुर्यात्प्रागुक्तवद्भवेत्
एवं चतुर्मुखं प्रोक्तं ग्रामं तेषां पुरातनैः २४६

रथ्याविरहितस्थाने कुर्याच्चोक्तं नरालयम्
रथ्ये नरालयश्चेत्सर्वसंपद्विनाशनम् २४७

तस्मात्परिहरेच्छिल्पी नगरग्रामादिवास्तुके
अथ पौराणिके ग्रामे संदिग्धे वास्तु निर्णयेत् २४८

रक्षितो ग्रामविन्यासं शास्त्रे युक्तं विशेषतः
पुरातनेषु ग्रामेषु देवता चोत्सवार्थकम् २४९

निर्वास्तु यत्र तत्र स्याद्वास्तुनिर्णयमिष्यते
पौराण्यां देवताहर्म्यं सर्वथाऽपि न कारयेत् २५०

तस्मात्तदनुसारेण कुर्यात्तद्वास्तुनिर्णयम्
ग्रामप्रदक्षिणकाले चाष्टदिक्पालके पदे २५१

सम्यक् प्रदक्षिणं कुर्याद्भूसुरादिसुरेश्वरैः
मार्गाभावेऽथवा वास्तुदिक्पालानां प्रदेशके २५२

दिक्पालानां बलिं सम्यक् कुर्याद्ब्रह्मकदेशके
संप्राप्य दर्शनं कृत्वा ततः पश्चान्निवर्तयेत् २५३

यत्र प्रदक्षिणं हीनं तत्र दोषो न विद्यते
न बलिस्थान रथ्ये च कुर्याद्वास्तुप्रदक्षिणम् २५४

अज्ञानात्प्रवणं कुर्यात्सर्वदोषसमुद्भवम्
ग्रामेष्वपि च सर्वेषु एवमुक्तं पुरातनैः २५५

यत्र रथ्याग्रमूले वा मध्ये वा चान्तरालके
उक्तस्थानेऽथवा कुर्यादथ देवालयं तथा २५६

पक्षान्तरेऽथवा कुर्यात्तस्यावृत्त नरालयम्
अज्ञानात्पूर्वहर्म्यादीन् त्यक्त्वा चेत्कर्तृनाशनम् २५७

तस्मात्पौराणिकं देवसदनं युक्तं कारयेत्
रथ्या सर्वे यथापार्श्वे क्षत्रकायाकृतिर्भवेत् २५८

गृहाणां दक्षिणावर्तवेशनद्वारकल्पनम्
ग्रामे प्रस्तुतानां च गृहे द्वारं विशेषतः २५९

वीथिपार्श्वे गृहायामे नन्दभागविभाजिते
अन्तस्थितिर्बहिः पार्श्वे दक्षिणे पञ्चभागिकम् २६०

वामे चतुर्गुणांशः स्याच्छेषं तु द्वारकल्पनम्
अथवा मध्यसूत्रस्य वामे द्वारं प्रकल्पयेत् २६१

पुराणेन पुराने वा कुर्यात्तत्र विचक्षणः
दण्डकादिषु सर्वेषु वास्तुविन्यासयोजनम् २६२

पूर्वे चोत्तरे दिक्षु वृद्धिः स्यात्सम्पदास्पदम्
दक्षिणे पश्चिमे दिक्षु ग्रामान्नयूनं शुभावहम् २६३

परितस्तु प्रवृद्धिः स्यात्पूर्वमानं न हीनकम्
देशकालाविनिर्देशे पौराण्यमिति कथ्यते २६४

वीथीनां पार्श्वयोर्देशे वीथिकाद्यैरलङ्कृतम्

एकाद्यर्कतलं स्थलं स्यात्कारयेत्तद्यथेच्छया २६५

निम्नोन्नतं तु तत्सर्वं हर्म्यमेवं समोन्नतम्
प्रभूतालयसर्वेषां चाधिकोन्नतमेव च २६६

क्षीणजात्यालयं सर्वं चैकभौमावसानकम्
एवं तु चोक्तवत्कुर्यात्सर्वसम्पत्करं शुभम् २६७

कन्यकादिधनरत्नसंग्रहं शालिभूमिगृहदासिवाहनम्
शिल्पिनां च गुरवे निवेदयेत्कर्तृभक्तिवरदहस्ततोवभृत् २६८

लाभात्कुर्यादुक्तसंमान हीनं कर्ता यावद्भूमिचन्द्रं पतेत्स
तस्मात्कर्ता चोक्तसंमानजालं सर्वैश्वर्यं काम्यसिद्धिः लभ्येत २६९
इति मानसारे वास्तुशास्त्रे ग्रामलक्षणविधानं नाम नवमोऽध्यायः

## नगरविधानम्

भूपतीनां च सर्वेषामस्त्रग्राह्यादयः क्रमात्
वक्ष्ये संक्षिप्य तन्त्रेभ्यो नगरस्य तु लक्षणम् १

शतदण्डं समारभ्य शतदण्डविवर्धनात्
शतत्रयावसानं स्याद्द्विशतदण्डं समारभेत् २

चतुःशतकदण्डान्तं शतत्रय समारभेत्
पञ्चाशतावसानं स्यात्कन्यसादुत्तमान्तकम् ३

सहस्र द्विशताधिक्यं दण्डान्तं परिकल्पितम्
एकविंशद्विशालं स्यात्प्रत्येकं त्रिविधं भवेत् ४

अस्त्रग्राह्याख्यभूपस्य नगरस्य विशालकम्
दण्डं चतुःशतारभ्य शतपञ्चसमारभेत् ५

षट्शतं दण्डमारभ्य शतदण्डविवर्धनात्
सहस्र द्विशताधिक्यं दण्डान्तं पूर्ववद्भवेत्  ६

एवं नगरविस्तारं प्राहारकस्य भूपतेः
सप्ताष्टनवशताद्यैः शतदण्डविवर्धनात्  ७

सहस्रत्रयदण्डान्तं पूर्ववद्विस्तृतं भवेत्
पट्टभाग्भूपतेश्चैवमष्टाष्टैकोनसंख्यया  ८

सहस्रं च शताधिक्यं सहस्र द्विशताधिकम्
सहस्र त्रिशताधिक्यं शतदण्डविवर्धनात्  ९

सहस्रत्रिशतं नन्दं शतदण्डावसानकम्
पूर्ववत्प्रोक्तविस्तारं विस्तारं मण्डलेशके  १०

चतुःसहस्राष्टशतदण्डान्तं पूर्ववत्सुधीः
एतत्पट्टधरोयोग्यं नगरस्य विशालता  ११

तथा पञ्चशताधिक्यं दण्डम् पञ्चसहस्रकम्
दण्डान्तं पूर्ववद्वृद्ध्या पार्ष्णी कस्य च नगरे  १२

षट्शतं षट्सहस्रं च दण्डान्तं पूर्ववद्भवेत्
नरेन्द्रस्यापि नगरं त्रिचतुष्टयस्य संख्यया  १३

षट्सहस्रं नवशतं दण्डान्तं पूर्ववद्भवेत्
महाराजस्य नगरमेवं प्रोक्तं तु पूर्ववत्  १४

शतद्वयसमायुक्तं दण्डान्तं सप्तसहस्रम्
चक्रवर्तेस्तु नगरं विशालं पूर्ववद्भवेत्  १५

अथवाऽयुतदण्डान्तं महती नगरी भवेत्

विस्तारार्धाधिकं वाऽथ पादूनद्विगुणं तु वा १६

द्विगुणान्तं तदायामं नगरस्य तु विस्तृतम्
अथवा दण्डमानेन दण्डदण्डविवर्धनात् १७

तद्विस्तारसमाधिक्यमायामं प्रविधीयते
खेटकखर्वटकादीनां मानं ग्रामोक्तवद्भवेत् १८

सर्वेषां नगरादीनां भेदं लक्षणमुच्यते
नगरं राजधानीयं केवलं नगरं तथा १९

पुरं च नगरी चैव खेट खर्वटमेव च
कुब्जकं पत्तनं चैव शिविरं वाहिनीमुखम् २०

स्थानीयं द्रोणकं चैव संविद्धं कोलकं ततः
निगमं स्कन्धावारं च दुर्गं चाष्टविधं भवेत् २१

नगरादीनि संग्रामं प्रोक्तदुर्गं च सत्तमम्
राष्ट्रमध्ये नदीतीरे बहुपुण्यजनावृतम् २२

मध्ये राजयुतं चैव नगरं कृतमिष्यते
तत्रागते नगर्यन्तं यदि विष्णवालयं भवेत् २३

राजधानीति तन्नाम विद्वद्भिर्वन्द्यते सदा
चतुर्दिक्षु चतुर्द्वारं गोपुरैश्च समन्वितम् २४

रक्षागृहैः समाकीर्णं विष्वक्सेनालयान्वितम्
वणिग्भिश्च समाकीर्णमापणैश्च समावृतम् २५

अन्तर्बहिर्जनैः पूर्णा नानादेवालयैरपि
केवलं नगरं प्रोक्तं यदेतं तन्त्रपारगैः २६

काननोद्यानसंयुक्तं नानाजनगृहान्वितम्
क्रयविक्रयविद्भिश्च वैश्यरवेणसंमितम् २७

देवसप्तसमायुक्तं पुरमेतत्प्रकथ्यते
अस्यान्ते राजनिलय नगरीति तमिष्यते २८

नदीपर्वत प्रान्ते शूद्रालयसमन्वितम्
महाप्रावृतसंयुक्तं खेटमुक्तं पुरातनैः २९

परितः पर्वतैर्युक्तं नानाजातिगृहैर्वृतम्
सर्वप्रचारसंयुक्तमेतत्खर्वटमीरितम् ३०

खेटखर्वटयोर्मध्ये सर्वमध्यालयान्वितम्
वप्राभावस्वते तत्तु कुब्जकमुदाहृतम् ३१

अब्धितीरप्रदेशे तु नानाजातिगृहैर्वृतम्
वणिग्जातिभिराकीर्णं क्रयविक्रयपूरितम् ३२

रत्नैर्द्वीपान्तरैर्नित्यैः क्षौमैः कर्पूरकादिभिः
एतत्पत्तनमाख्यातं वप्रायतसमन्वितम् ३३

अन्यभूपालभूम्यन्ते युद्धारम्भक्रियान्वितम्
सेनानामयुतानां च पृतनाभिः समन्वितम् ३४

तदेतच्छिविरं प्रोक्तं तन्त्रविद्भिः पुरातनैः
नानाजनैश्च संपूर्णं भूपहर्म्येण संयुतम् ३५

बहुरक्षसमोपेतमेतत्सेनामुखं भवेत्
नदीपार्श्वाद्रिसंयुक्तं भूपालालयसंमितम् ३६

बहुरक्षसमायुक्तं नित्यं सन्नृपसंयुतम्

स्थानीयं सर्वविद्वद्भिः प्रोक्तं बहुसुखावम्  ३७

समुद्रा तटिनीयुक्तं तटिन्या दक्षिणोत्तरे
वणिग्भिः सह नानाभिर्जनैर्युक्तं जनास्पदम्  ३८

नगरस्य प्रतितटे ग्राहकैश्च समावृतम्
क्रयविक्रयसंयुक्तं द्रोणान्तरमुदाहृतम्  ३९

महाग्रामसमीपे तु क्षुल्लकग्रामसंयुतम्
तद्ग्रामोत्तरनाखादमग्रहारोपजीविनाम्  ४०

तस्मात्तु तत्र विद्वद्भिः संविद्धं तदुदीरितम्
महाराष्ट्रस्य मध्ये तु गृहं तत्कोलकात्मकम्  ४१

द्विजातिचतुर्वर्णैर्वर्णान्तरजनैर्वृतम्
बहुकर्मकरैर्युक्तं निगमं तदुदाहृतम्  ४२

नद्यादिकाननोपेतं बहुतीरजनालयम्
राजमन्दिरसंयुक्तं स्कन्धावारमुदाहृतम्  ४३

पार्श्वे चान्यद्विजातीनां गृहं तश्चेरिकोदितः
शत्रुभूपालहित्यर्थं नृपरक्षणदुर्गकम्  ४४

वक्ष्ये यथाक्रमं सर्वाणि दुर्गाणि दुर्गकम्
गिरिदुर्गं वनदुर्गं सलिलं पङ्कदुर्गकम्  ४५

रथादुर्गं देवदुर्गं मिश्रदुर्गं तथैव च
पर्वतावृतमध्ये पर्वतस्य समीपके  ४६

पर्वताग्रप्रदेशे तु गिरिदुर्गमिति त्रिधा
तलपर्जन्यान्तरोयुक्तं गगनं च प्रवेशनम्  ४७

एतत्तु वनदुर्गं स्याज्जलदुर्गमिहोच्यते
समुद्रैश्च नदीभिश्च संवृतं जलदुर्गकम् ४८

पर्वतं कन्दरैर्युक्तं दुष्प्रवेशं च शत्रुभिः
दुर्गं तु कृत्वा नृपतिस्तिष्ठेत्तत्पङ्कदुर्गकम् ४९

वनाभावे जलाभावे सर्वशून्यादिदूषकम्
चोरैश्च सङ्कुलस्थानं निग्रामं रथदुर्गकम् ५०

ब्रह्मराक्षसवेतालं भूतप्रेतादिभैरवैः
शिलावर्षं प्रवर्षन्तीरा लोक्य वेशनिर्गमे ५१

मन्त्रतन्त्रादिसामर्थ्यैः कृतान्तं देवदुर्गकम्
अनेकपर्वतोपेतं नानावनसमिश्रकम् ५२

तत्रास्थितं तु तद्दुर्गं मिश्रदुर्गमिति स्मृतम्
सर्वेषामपि दुर्गाणां वप्रैश्च परिघैर्वृतम् ५३

प्रवेशनिर्गमस्थाने द्वारैरपि समन्वितम्
इष्टकादिकृतं वप्रं हस्तद्वादशकोच्छ्रितम् ५४

तदर्धभित्तिमूले तु संचारैः सह विस्तृतम्
नगराणां तु सर्वेषां वक्ष्ये विन्यासलक्षणम् ५५

प्राक् प्रत्यग्गतमायामं दक्षिणोत्तरसमन्वितम्
एकरथ्यां समारभ्य एकैकं वीथिवर्धनात् ५६

वीथिद्वादशपर्यन्तं युग्मायुग्मं प्रकल्पयेत्
अम्यान्यानुक्तविन्यासं ग्रामे पूर्वोक्तवत्कुरु ५७

वस्तुवानियं ज्ञात्वोहापोहेन योजयेत्

एवं तु नगरं प्रोक्तं शिल्पिनां कारयेत्क्रमात् ५८
इति मानसारे वास्तुशास्त्रे नगरविधानं नाम दशमोऽध्यायः

भूमिलम्बविधानम्

भूमिलम्बविधिं वक्ष्ये शास्त्रे संक्षेपतः क्रमात् १

चतुरश्रमायताश्रं वर्तुलमायतं तत्
अष्टाश्रमायतं वा द्व्यश्रवृत्तं तथैवोत्तरम् २

एतद्विन्यासभेदं वा क्षयवृद्धिविधानकम्
उक्तं हि भूमिलम्बं स्यादेकान्तभूमिकम् ३

द्विकरं त्रिकरं चादौ द्विद्विकरेण वृद्धिः क्रमेण
दशनव हस्तान्तं स्यात्पञ्चचतुर्विस्तारमेकतले ४

एतेषु क्षुद्रमानं मध्यमं पञ्चषड्ढस्तमारभ्य
एकादशार्कहस्तान्तं द्विद्विहस्तेन वृद्धिः कथिता ५

एतत्तु पञ्चविपुलं युग्मयुग्मेन चोत्तमं वक्ष्ये
षट्सप्तकरं चादौ द्विसप्तपञ्चत्रयकरान्तं च ६

एते पञ्चधा विपुलं श्रेष्ठान्तमेकतलं कथितम्
विशालद्वयोत्तुङ्गं सोपानादिस्तूपिकान्तं स्यात् ७

एव कनिष्ठहर्म्ये तन्त्रविद्भिः पुरातनैः कथितम्
विशाले चतुरंशं त्रियं शाधिकमुत्सेधम् ८

पूर्वमध्यमहर्म्यं चैकभूमिकमिदमुक्तम्
विशालार्धाधिकमुत्सेधमुत्कृष्टहर्म्यमेकतले ९

अथवा तत्र मौन्यंशे त्र्यंशाधिकमुत्कृष्टमुत्सेधम्

क्षुद्रोत्सेधस्य माने तु हीनाधिकं वाधितं स्यात्  १०

पञ्चधोत्सेधमुत्कृष्टं मानात्पञ्चविधं नाम
शान्तिकं पौष्टिकं श्रेष्ठं पार्ष्णिकं मध्यमाने तु  ११

हीनं तु यत्तद्द्विगुणं चाद्भुतं कथितम्
कराधिकोदयहर्म्ये सर्वकामिकमुदीरितम्  १२

पञ्चषट्करमारभ्य द्विद्विहस्तेन वर्धयेत्
त्रिदशकरान्तं च चतुर्दशकरान्तं पञ्चधा विपुलम्  १३

द्वितलं हर्म्यं स्यादेतत्क्षुद्रमानमिदमुदितम्
रसमुनिकरमादौ वर्धनाद्द्विद्विहस्तेन  १४

मनुपञ्चादशहस्तान्तं पञ्चधाविपुलं मध्यमं चेति
मुनिवसुकरमारभ्य तिथिकरषोडशकरालयं स्यात्  १५

द्वितलहर्म्ये मुख्यैरेतत्कथितम्
पञ्चधा विपुलं शान्तिकं पौष्टिकात्मजम्  १६

पञ्चात्मिकाद्भुतं सार्वकामिकं क्रमतः
उत्सेधं पञ्चधा विपुलात्प्रागुक्तांशेनैव कुर्यात्  १७

वसुनवकरमारभ्य वर्धयेद्द्विद्विहस्तेन
षोडशसप्तदशान्तं विस्तारमेतत्पञ्चधा कथितम्  १८

नवदशकरमारभ्य सप्ताष्टाधिकदशकरान्तं स्यात्
द्विहस्तेन वर्धयेत्प्रोक्तं पञ्चधाविपुलमेतत्  १९

दशमेकादशकरमादौ च वर्धनाद्द्विद्विहस्तेन
एतत्तु पञ्चधाविपुलं त्रितले हर्म्ये त्रिविधाः कथिताः  २०

क्षुद्रं मध्यममुत्कृष्टं क्रमतस्तुङ्गं पूर्ववत्कुर्यात्
नवरुद्रत्रयोदशतिथिसप्तदशपञ्चधा विपुलम्  २१

क्षुद्रं चतुस्तलमुक्तं द्विगुणं त्रिविधं विपुलात्
दशरविमनुहस्तं षोडशमष्टादशहस्तं तत्  २२

पञ्चधाविपुलं हस्तयुग्मे युगतलं पूर्ववदुत्सेधम्
एकादशरविहस्तं त्रयोदशमनुतिथिहस्तम्  २३

षोडशसप्तदशहस्तं चाष्टादशैकोनविंशतिश्च
युग्मायुग्महस्तेन पञ्चधा विपुलं मध्यमं चेति  २४

पौष्टिकमुत्सेधमुदितं विपुलादेवं चतुस्तले प्रोक्तम्
अर्कत्रयोदशहस्तं मनुतिथिषोडशहस्तं च  २५

सप्तदशाष्टादशतः नवपङ्क्तिर्विंशत्येकविंशश्च
द्वाविंशस्त्रयोविंशश्चतुर्विंशत्पञ्चषड्विंशहस्तं च  २६

एवं तु पञ्चधाविपुलं चतुस्तले चोत्कृष्ट शान्तिकोत्सेधम्
एकादशकरमादावेकहस्तेन वर्धयेद्युक्त्या  २७

षडाधिकं तु पञ्चाशद्धस्तान्तं पञ्चधा विपुलम्
एवं क्षुद्रपञ्चतलोत्सेधं जयान्तिकं त्रितलम्  २८

द्वादशकरमारभ्य हस्तैकेन पूर्ववद्वृध्यात्
एक षष्टि करसंयुक्तं शतहस्तान्तं पञ्चधा विपुलम्  २९

एवं मध्यमं पञ्चतले पौष्टिकमुत्सेधमिदमुदितम्
सैकार्ककरमादावेकसप्ततिशतहस्तं च  ३०

एतद्धर्म्यविस्तारमुत्कृष्टं पञ्चतले कथितम्

इदं शान्तिकमुदयमथवा पौष्टिकमुत्सेधमिति ३१

मनुहस्तं त्वेकवृद्धेनैकाशीति हस्तान्तमेतत्
षड्भूमिहर्म्यके न्नुद्रं विपुलं तत्पञ्चधा कथितम् ३२

उत्सेधं सर्वकाम्योक्तमथवा द्विगुणमुदितम्
पञ्चादशकरमादौ चैककं हस्तमाधिक्यम् ३३

चतुर्विंशतिहस्तान्तं विपुलं पञ्चकमिति कथितम्
समभवनजय मुदितमुदितं जयतामुदितम् ३४

षोडशकरमारभ्य चैकैकं हस्तमाधिक्यम्
पञ्चविंशतिपर्यन्तं हस्तं पञ्चधा विपुलमिति ३५

षट्तलमथमिदमुदितं चोक्तवद्धर्म्यं शान्तिकोत्सेधम्
अथवा पौष्टिमुत्सेधं प्रोक्तं शिल्पविद्वद्भिः ३६

सप्तदशकरमादौ षड्विंशश्चान्तं पूर्ववद्वृध्यात्
अष्टादशकरमादौ पूर्ववद्वृध्यात् त्रिनवहस्तान्तम् ३७

एकोनविंशद्धस्तादौ चाष्टविंशद्धस्तपर्यन्तम्
एतत्तु पञ्चविपुलं न्नुद्रं मध्यममुत्कृष्टं सप्ततले ३८

शान्तिकं पौष्टिकं जयदं चाद्भुतमुत्तुङ्गं सार्वकामिकम्
तेषां चोत्तममादीनं प्रत्येकं विपुलवशात्क्रमतः ३९

नवविंशत्करमादौ त्रयस्त्रिंशत्करपर्यन्तम्
त्रिंशतिहस्तं चादौ चतुस्त्रिंशतिहस्तपर्यन्तम् ४०

एकत्रिंशतिहस्तौ पञ्चत्रिंशतिहस्तपर्यन्तम्
पञ्च पञ्च विपुलं कनीयसादि त्रिविधमुत्सेधम् ४१

एतदष्टतलमुदितं चोदयं शान्तिकादि पूर्ववत् संयुक्तम्
द्वात्रिंशत्करमारभ्य षट्त्रिंशत्करान्तकम्  ४२

पूर्ववद्वृध्या त्रयस्त्रिंशत्करमारभ्य सप्तत्रिंशकरपर्यन्तम्
चतुस्त्रिंशद्धस्तादौ चाष्टत्रिंशान्तं चैककरैर्वृध्यात्  ४३

नवतले त्रिपञ्चविधं वैपुलं कन्यसादिश्रेष्ठं प्रवक्ष्यते
पूर्ववत्तुंङ्गमुदितं शान्तिकादिशरभेदमेतत्  ४४

त्रयत्रिंशत्करमादौ चत्वारिंशद्द्वयाधिकम्
चतुस्त्रिंशतिहस्तादि त्रिचत्वारिंशद्धस्तपर्यन्तम्  ४५

पञ्चत्रिंशद्धस्तादौ चतुश्चत्वारिंशद्धस्तपर्यन्तम्
एवं दशतलहर्म्यं पञ्चादशविपुलं प्रोक्तम्  ४६

शान्तिकाद्युक्तं क्रमतः कन्यसादुत्तमान्तं कथितम्
चतुस्त्रिंशद्धस्तादौ त्रिचत्वारिंशद्धस्तपर्यन्तम्  ४७

पञ्चत्रिंशत्करमारभ्य चतुश्चत्वारिंशत्करपर्यन्तम्
षट्त्रिंशत्करविपुलात्पञ्चचत्वारिंशद्धस्तपर्यन्तम्  ४८

एकादशतलं हर्म्ये क्षुद्रादिपञ्चदशविपुलं स्यात्
पूर्ववत्पञ्चधोत्सेधं जन्मादिस्तूपिकान्तं स्यात्  ४९

भूतस्तिंशद्धस्तादि वेदाधिक्यं चत्वारिंशद्धस्तान्तम्
षट्षड्ढस्तमारभ्य पञ्चचत्वारिंशद्धस्तपर्यन्तम्  ५०

सप्तत्रिंशतिहस्तादि षडधिकाष्टापञ्चहस्तान्तम्
पञ्चदशविपुलं प्रोक्तं क्रमात्पूर्ववत्पञ्चधोत्सेधम्  ५१

क्षुद्रं मध्यममुत्कृष्टं रवितलमेतत्तन्त्रवित्कुर्यात्

एतज्ञातिवशात्प्रोक्तं छन्दादीनां शान्तिकोत्सेधम् ५२

क्रमतस्त्रिपादमर्धकरं पादं चेदं संकल्पमाभासमिदम्
क्षुद्रमध्यमादुत्कृष्टं क्रमात्पूर्ववद्धस्तसंख्येन ५३

एवं त्रिविधमानेन हर्म्यं संकल्प्य तन्त्रविधिज्ञैः
उत्तुङ्गपूर्वकादि पूर्ववत्क्रमतः ५४

द्विगुणपादमाधिक्यमथवार्धाधिक्यमुत्तुङ्गम्
शान्तिकायशक्रमुत्तुङ्ग त्रिपादमाधिक्यमुच्छ्रयं वापि ५५

पौष्टिकोत्तुङ्गमानं विभजेदष्टभागमेवं स्यात्
तस्मात्र्यंशमाधिक्यं द्वित्र्यंशादधिकं वाथ ५६

एतेषां सर्वमुत्तुङ्गं जात्यादिहर्म्यमिदमुदितम्
देवतालयानां नृपाणां शालागोपुरे वमुत्तुङ्गम् ५७

शान्तिकादिशरभेदं विस्तृतोत्सेधं गरायं क्रमतः
एतद्विपरीतं चेत्कर्ता च मरणं भवति ५८

तस्माद्धर्म्यतुङ्गात् परिहृत्य शिल्पिभिस्तन्त्रैः
नृणां शालानां तु सर्वेषां तदुत्सेधम् ५९

गोपुराणां तु सर्वेषां शिरोन्तं शिखान्तकम्
द्वारशालासममुत्तुङ्गं द्वितीयं चान्तं शिखान्तं वा ६०

द्वारशोभसमुत्सेधमन्योत्तरान्तं वा शिखान्तं चैव
शान्तिकात्पौष्टिकादेतं विधं गोपुरोत्तुङ्गं स्यात् ६१

अथवा हर्म्यमानेन विष्वग्भूमानं वक्ष्यते क्रमतः
षट्पञ्चहस्तमारभ्य वृद्ध्या द्वित्रिहस्तेन ६२

सत्रिचतुर्नवत्यन्तं कन्यसादित्रयं त्रयं मानम्
एतद्द्वादशभूम्यन्तं जन्मादिपूर्वेहकान्तं स्यात्  ६३

जन्मादिहस्तमेवोक्तं शान्तिकाद्यंशके भेदमुत्तुङ्गम्
एकादिद्विभूम्यन्तं कल्पग्रामस्य हर्म्यके भवति  ६४

एकादित्रिभूम्यन्तं प्राहारकस्य चालयं प्रोक्तम्
एकादिचतुस्तलान्तं पट्टभाक् चालयमिति कथितम्  ६५

त्रितलाद्यष्टतलान्तं नरेन्द्रस्य चालयं प्रोक्तम्
त्रितलादिनवतलान्तं महाराजस्य भवनमुदितम्  ६६

पञ्चतलाद्यर्कान्तं चक्रवर्तिहर्म्यं स्यात्
एकादित्रितलान्तं युवराजस्य चालयं प्रोक्तम्  ६७

सामन्तप्रमुखानां चैकादित्रितलपर्यन्तं स्यात्
क्षुद्रभूपस्य सर्वेषामेकादित्रितलभूमिपर्यन्तम्  ६८

स्थपतिस्थापकानां तु गभस्तिकादिकं तु यूषकानां च
द्विजातिशराणां तु एकद्वित्रितलपर्यन्तम्  ६९

उग्रैवजयिनां चैव शालैकद्वित्रितलपर्यन्तम्
गजाश्वादिशालानां तलमेकं कर्तव्यं प्रोक्तम्  ७०

देवानामपि सर्वेषां हर्म्यैकाद्यन्तं भूपतीनां चैव
अन्यसर्वजातीनां नवतलं कुर्यात्तदालयं प्रोक्तम्  ७१

क्षुद्रालयमेवोक्तं क्षुद्रात्क्षुद्रमानसंयुक्तम्
क्षुद्रदेवालयं सर्वं पूर्ववज्ज्ञानादिकमिदमुदितम्  ७२

मण्डपं नवतलं कुर्याद्भवनमन्यरङ्गं वाधिमण्डपाकारम्

एतत्तु भूमिलम्बं पुराणैः सर्वैस्तन्त्रवित् प्रोक्तम्  ७३
इति मानसारे वास्तुशास्त्रे भूमिलम्बविधानं नाम एकादशोऽध्यायः

## गर्भविन्यासविधानम्

देवानामालयादीनां द्विजातीनां च वक्ष्यते
गृहग्रामादि सर्वेषां गर्भविन्यासमुच्यते  १

नानाद्रव्यसुसंपूर्णं गर्भं सर्वशुभप्रदम्
हीनद्रव्यमनैश्वर्यं गर्भं तदशुभप्रदम्  २

गर्भन्यासं तु तस्मात्तु निक्षिपेत्सम्यगुक्तवत्
गर्भावटस्थ निम्नं स्यादधिष्ठानसमोन्नतम्  ३

इष्टकैरपि पाषाणैश्चतुरश्रं समं भवेत्
जलं संपूर्य तन्मूले तस्यान्तं सर्वमृत् क्षिपेत्  ४

नद्यद्रिमृत्तिका चैवं वल्मीकस्य तु मृत्तिका
कर्कटावटमृद्भिश्च स्थलितलमिति स्थित  ५

समुद्रतीरमृद्भिश्च वृक्षशृङ्गस्य मृत्तिका
गोखुराग्रमृच्चैव चैव तु दशमृत्तिका  ६

तदूर्ध्वे मध्यदेशे तु पीनकं तं विनिक्षिपेत्
इन्द्रे चोत्पलकन्दंतु याम्ये कौमुदकन्दकम्  ७

पश्चिमे न्यस्य सौगन्धिं काकोली तु चोत्तरे
तस्योपरि विन्यसेदष्टधान्यं यथाक्रमम्  ८

शालिमीशानके न्यस्य व्रीहिं प्राग्दिशि विन्यसेत्
कोद्रवं चाग्निकोणे तु कङ्गुं याम्ये तु विन्यसेत्  ९

मुद्गं नैर्ऋत्यकोणे तु मा प्रत्यग्विनिक्षिपेत्
कुलुत्थं वामकोणे तु तिलं विन्यस्य चोत्तरे १०

तस्य चोपरि निक्षिप्य मञ्जूषान्तं विनिर्मितम्
तन्मानं चैकभूमादिद्वादशाद्यं तलानि वै ११

हर्म्याणां तद्वशात्कुर्यात्तत्तदाकारवद्भवेत्
त्रिचतुर्मात्रमारभ्य द्विद्व्यङ्गुलविवर्धनात् १२

पञ्चषड्विंशमात्रान्तं द्वादशं विपुलं भवेत्
तद्विस्तारसमं वापि तदष्टांशोनमेव च १३

पञ्चांशोनमेवं वा गर्भभाजनमुच्छ्रयम्
एवं चतुर्विधं प्रोक्तं दण्डमानेन वक्ष्यते १४

हर्म्यपादस्य विष्कम्भसमं मञ्जूषविस्तृतिः
तदष्टांशैकहीनं वा तत्त्रिपादं प्रकल्पयेत् १५

तुङ्गं प्रागुक्तवत्कुर्याद्भित्तिरात्तिमिहोच्यते
एकद्वित्रियमेवापि सर्वभित्तिविशलकम् १६

तद्भित्तिभागमेकं वापि विधानं तदुच्छ्रयम्
मञ्जूषोच्छ्रं चतुर्भागं तत्तदेकासनं भवेत् १७

तद्द्वयं चाङ्घ्रितुङ्गं तु स्यादेकांशं प्रस्तरान्वितम्
त्रिवर्गमण्डपाकारमद्भिःस्वान्तं प्रविष्टके १८

पञ्चविंशतिकोष्ठं वा नवकोष्ठैकमेव च
एकांशं कोष्ठभित्त्युच्छ्रं घनं प्रागुक्तवन्नयेत् १९

उपपीठपदे देवान् कोष्ठं चोक्तक्रमं न्यसेत्

पूर्वान्हं च तदा ज्ञात्वा कारयेदधिवासनम्  २०

गन्धाक्षतैश्च पुष्पैश्च धूपदीपेन चार्चयेत्
सकलीकरणं कुर्यात् पुण्याहं वाचयेत्ततः  २१

स्थिरवास्तुं ततो गच्छेत्प्रस्तरे तु पदैः सह
मन्त्रः
हे वास्तो त्विह गर्भस्य वृद्धिं कुरु नमाम्यहम्  २२

ब्रह्मादिदेवतानां च ओङ्कारादिनमोऽन्तकम्
तत्तत्स्वनाममन्त्रेण अर्चयेद्वास्तुदेवताः  २३

क्षालयेत्पञ्चगव्यैस्तु गर्भमञ्जूषिकां बुधः
सूत्रैरावेष्टनं कुर्यात्तस्य चोपरि विन्यसेत्  २४

तदेव गन्धजलैः पूर्णकुम्भं विनिक्षिपेत्
परितस्तु चतुर्विंशत्कलशान् जलपूरितान्  २५

निक्षिप्य सूत्रैरावेष्ट्य वस्त्रं पल्लवकूर्चकैः
अलङ्कृत्य स्थपति वरवेषोत्तरीयवान्  २६

गन्धपुष्पैः समभ्यर्च्य भुवनाधिपतिं जपेत्
तस्य दक्षिणपार्श्वे चाक्षतैः स्थण्डिलं न्यसेत्  २७

ब्रह्मादिदेवतानां च सामान्यं हि बलिं क्षिपेत्
तत्प्राचि देशे सौम्ये तु जुहुयाद्वास्तुहोमकम्  २८

प्रत्येकं पञ्चविंशैस्तत्समिदाज्यं तिलं चरुम्
ब्रह्मार्यविवस्वांश्च मित्रभूधरदेवताः  २९

एतेभ्यो नामविस्तारमादिमन्त्रं समुच्चरेत्

सह मङ्गलघोषणैः ३०

पश्चात्तु स्यण्डिलं कुर्याच्छस्तशालिभिरक्षतैः
श्रादव न्यस्य मण्डूकमथवा परमासनम् ३१

दर्भं प्रस्त्रणं कृत्वा दर्भैरास्तीर्य चोपरि
सकलाख्यं पदं कृत्वा जलपुष्पकेण बुधः ३२

व्याहृत्यन्तो यदा वह्नि होमस्थानं विसर्जयेत्
शालिभिस्तिलकं कृत्वा पश्चाद्ग्रामस्य चोत्तरे ३३

पीत्वा शुद्धं पयोऽब्धेस्तु शयेत्ततच्छिल्पतन्त्रवित्
सूत्रग्राही तक्षकश्च वर्धकी द्रव्यसंयुतम् ३४

तत्रस्थं स्थपतिं श्रेष्ठं सेवां कुर्यात्तु जाग्रतः
स्वाध्यायं मन्त्रघोषैश्च ब्राह्मणैश्च युतस्ततः ३५

पश्चात्स्नात्वा तु वाचम्य विश्वत प्रविशयेत्
सकलीकरणं कृत्वा स्थपतिर्वरवेषवान् ३६

सुमुहूर्ते सुलग्ने च तद्द्रव्यभाजनात्ततः
निक्षिपय चोक्तवत्पश्चात्सर्वमङ्गलघोषणैः ३७

स्वस्तिं वृषभं चैव लक्ष्मीं दर्पणमेव च
स्वर्णेन स्वस्तिकं कुर्याद्वृषभं चायसेन तु ३८

लक्ष्मीं ताम्रेण कुर्यात्तु दर्पणं रजतेन तु
स्वस्तिकं चेन्द्रकोष्ठे तु चतुः विन्यस्य क्रमात् ३९

जयन्ते कोष्ठके चैव जातिहिङ्गुल्य निक्षिपेत्
हरितालं भृशे वासे वितथे च मनःशिला ४०

विन्यसेद्भृङ्गराजस्य कोष्ठके माद्विं निक्षिपेत्
सुग्रीवस्य तु कोष्ठे तु राजावन्तं तु निक्षिपेत् ४१

शोषे गैरिकं न्यस्य मुख्यके चास्य निक्षिपेत्
अदिते गन्धकं न्यस्य मधुरागं तु मध्यमे ४२

ततश्चाप्य प्रवालं तु साविन्द्रे पुष्परागकम्
विवस्वते च वैसूर्यं वज्रमिन्द्रस्य कोष्ठके ४३

मित्रकस्येन्द्रनीलं स्यात्तथा रुद्रस्य कोष्ठके
महानीलं विनिक्षिप्य मरतकं तु भूधरे ४४

मुक्ता पवत्स्यवासेषु विन्यसेत्तु यथाक्रमम्
विष्णुकान्ताग्निकोष्ठे तु त्रिशूलं चेन्द्रकोष्ठके ४५

श्रीदेव्याग्निकोष्ठे तु श्रयन्ते निहकोष्ठके
दूर्वां नैर्ऋत्यकोष्ठे तु भृङ्गीं वारुणकोष्ठके ४६

अपामार्गं च वायव्ये चैकपत्राम्बुजोत्तरे
विन्यसेच्चोषधिं चाष्टौ मृणालमेवं क्रमात्ततः ४७

जयन्ते चन्दनं क्षिप्य चान्तरिक्षेऽगुरुं तथा
विथते क्षिप्य कर्पूरं मृगे शैलं विनिक्षिपेत् ४८

सुग्रीवे च लवङ्गं स्याद्रोगे लयायतं क्षिपेत्
मुख्ये जातिफलं क्षिप्य उदिते कोलकं न्यसेत् ४९

कपालं च त्रिशूलं च खट्वाङ्गं खण्डमेव च
वृषभं चैव साम्बं च हर्णं शार्ङ्गमेव च ५०

एवं चाष्टविधं रूपं सौवर्णेन प्रकल्पयेत्

इन्द्रादिकोष्ठेषु कपालादि न्यसेत्क्रमात् ५१

गर्भभाजनमाच्छाद्य विधानेन तु निष्फलम्
तद्भाजनं च ताम्रे परवेष गुरोः सह ५२

वास्तुप्रदक्षिणं कुर्यात्स्थापयेत्स्थपतिर्बुधः
घटादि कलशं चैव तज्जलेनाभिषेचयेत् ५३

स्वाध्यायवेदघोषैश्च सर्वमङ्गलघोषणैः
भाजनान्तं समान्तश्च आशैलादि विवस्वतः ५४

ध्यात्वानन्तस्य मूर्त्तिं धरातलं तु सागरम्
पर्वताष्टमहानागैरष्टदिक्पालकैः क्रमात् ५५

तत्तत्स्वनाममन्त्रेण पूजयेच्च विशेषतः
सृष्टिं विश्वकर्माणं ध्यानं कृत्वा तु वार्चयेत् ५६

सृष्टिस्थितिलयाधारं भुवनाधिपतिं मनाक्
गन्धपुष्पादिधूपैश्च नैवेद्यादिभिरर्चयेत् ५७

सारदारु शिला वापि चेन्द्रनीलं प्रकल्पयेत्
त्रिचतुष्पञ्चमात्रं वा स्वस्तिकं तद्द्विधायतम् ५८

चतुरश्रं तु तन्मूले वृतं वाथ तदग्रकम् ५९

एवं द्वित्र्यङ्गुलं वापि लोहजैः प्रतिमोदयम्
चतुर्भुजं त्रिनेत्रं च जटामकुटभूषितम् ६०

वरदाभयसंयुक्तं कृष्णापरशुधारिणम्
स्थानकं चासनं वापि एतत्तु प्रतिमं भवेत् ६१

कीलतारसममध्यर्धं द्विगुणं वा गलका भवेत्

चतुरश्रं समं कृत्वा सारदारुजलाश्मना ६२

फलका भाजनोर्ध्वे तु तदूर्ध्वे चेन्द्रकीलकम्
ततः प्रतिमसंयुक्तं स्थापयेत्स्थपतिर्बुधः ६३

परितस्त्विष्टकाभिः सहस्रैराउषधः सह
दृढीकृत्यमथ ज्ञात्वा पुष्पवस्त्रैश्च शोभितम् ६४

हर्म्यादिद्वारसर्वेषां पादमूले वा दक्षिणे
तत्पादमूले देशे वा तथोपानप्रदेशके ६५

कुमुदाग्रे गले वापि विस्तरे प्रकरैः बुधः
कुडयस्तम्भे गृहस्तम्भे हर्म्यगर्भे विनिक्षिपेत् ६६

तान्यत्सेधं तथाभाति भवेत्सर्वविपत्करम्
एवं रुद्रालये गर्भमन्यगर्भमिहोच्यते ६७

विष्णुधिष्णयस्य गर्भान्तं रुद्रचिह्नं विवर्जयेत्
प्रागुक्तं द्रव्यसंयुक्तं विष्णुचिह्नानि योजयेत् ६८

मध्ये चक्रं तु भौमेन भाजनान्तं विनिक्षिपेत्
रौप्येण शङ्खं ताम्रेण चापं चैव तु वामके ६९

लतासीसेन खड्गं च वायव्येन तु दक्षिणे
प्राङ्मुखे तार्क्ष्यरूपं च हेमजेन प्रकारयेत् ७०

एवं च विष्णुगर्भं स्याद्ब्रह्मगर्भमिहोच्यते
ब्रह्मगर्भम्
यत्र वस्तूनि वास्तूनि ब्रह्मस्थाने विशेषतः ७१

ब्रह्मगर्भं क्षिपेत्काले तस्य चिह्नं च योजयेत्

ओङ्करं निर्मितम् हेमं मध्यकोष्ठे तु विन्यसेत् ७२

हेमजं यज्ञसूत्रं स्यादोङ्कारस्योपरि न्यसेत्
स्वस्तिकादीनि वर्णेन चतुर्दिक्षु विनिक्षिपेत् ७३

मण्डलं वा ततो निर्मितं ताम्रमेव च
अक्षमालां च ताम्रेण कृष्णवर्णं च वामके ७४

ब्रह्मगर्भमिति प्रोक्तं प्रतिमं तत्स्वरूपकम्
अन्य देवदेवीनां सर्वेषामालयादिभिः ७५

तत्तच्चिन्हानि रूपं च स्वर्णलोहेन निर्भितः
पूर्वद्रव्येण संयुक्तं गर्भमेवं विनिक्षिपेत् ७६

नरगर्भम्
देवगर्भमिति प्रोक्तं नरगर्भमिहोच्यते
द्विजातीनां च वर्णानां गृहगर्भं यथाक्रमम् ७७

पूर्वद्रव्यं तु सर्वेषु तत्तच्चिन्हं च संयुतम्
चक्रं च कण्डलं दण्डं यज्ञसूत्रं च हेमकम् ७८

ओङ्कार निर्मितं हेमं तच्चतुर्दिशि मध्यमे
एवं ब्राह्मणगर्भं स्याद्भूपतीनां च वक्ष्यते ७९

खजं खङ्गं च छत्रं च चामरं च चतुष्टयम्
हेमनिर्मितसर्वं च चतुर्दिक्षु विनिक्षिपेत् ८०

तुलां हेमेन निर्माय मध्यकोष्ठे तु विन्यसेत्
एवं तु वैश्यगर्भं स्यादनुक्तं शास्त्रमार्गवत् ८१

लाङ्गलं च युगं स्वर्णेन मध्यमं न्यसेत्

ब्रह्मरूपं द्विजातीनां भूपानां चेन्द्ररूपकम्  ८२

विशां वैश्रवणं रूपं शूद्राणां नररूपकम्
एवं तु प्रतिमं प्रोक्तमेतद्गर्भोपरि न्यसेत्  ८३

गृहगर्भमिति प्रोक्तं ग्रामगर्भमिहोच्यते
ग्रामगर्भम्
ग्रामादीनां नगरादीनां पुरपत्तनखर्वटे  ८४

कोष्ठकोलादि सर्वेषां गर्भस्थानमिहोच्यते
स्थिरवास्तुकुक्षिदेशे चरवास्तु तथापि च  ८५

ग्रामद्वारस्य योगे वा गर्भश्वभ्रं प्रकल्पयेत्
पुरुषाञ्जलिमात्रे तु श्वभ्रव्यासं तु निम्नकम्  ८६

मृत्कन्दजलधान्यादीन् पूर्वोक्तानि च विन्यसेत्
पञ्चाङ्गुलमारभ्य द्विद्व्यङ्गुल विवर्धनात्  ८७

सैकार्काङ्गुलान्तं च भाजने पञ्चधा तति
पञ्चविंशतिकोष्ठे वा नवकोष्ठमथापि वा  ८८

शेषं तु पूर्ववत्कुर्याद्द्रव्यादीनां तु पूर्ववत्
इन्द्रे राजतदन्ती वाग्नौ मेषं च वायसा  ८९

मृत्पुरुषामहिषं याम्ये नर वैकत नैर्ऋते
पश्चिमे राजतं ग्राह्यं वायव्ये मृगं चायसम्  ९०

इतस्ततस्तु सौम्ये तु राजता वृषभेशके
एवं प्रक्षिप्य वेश्मस्य पूर्वोक्तैर्द्रव्यकैः सह  ९१

ग्रामगर्भमिति प्रोक्तं जलगर्भमिहोच्यते

जलगर्भम्
वापीकूपतटाकेषु मध्ये गर्भं नराञ्जलिम् ९२

मराडूकं पाञ्चजन्यं च मत्स्यं कूर्मं च राजतम्
इन्द्रादिषु चतुर्दिन्नु विन्यसेत्तु यथाक्रमम् ९३

मध्ये सुवर्णकुलीरं शेषं प्रगुक्तवन्नयेत्
एकद्वादशभूम्यन्तं चेष्टके द्वादशान्ततः ९४

हर्म्यं निर्माणतो वन्द्ये प्रथमेष्टकलन्नणम्
सप्ताङ्गुल्यं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ९५

एकोनविंशदङ्गुल्यं त्रिंशदङ्गुलान्तकम्
विस्तारात्पादमाधिक्यमर्धपादोनमाधिकम् ९६

तत्समं चाधिकं वापि चेष्टकायाममिष्यते
विस्तारार्धं घनं कुर्यातमं तु चतुरष्टकम् ९७

शैलजं शिला चैव चेष्टके पेष्टकां तथा
स्त्रीपुन्नपुंसकं ज्ञात्वा शिला वा चेष्टकैस्तथा ९८

गर्भेण सहितं स्थाप्य पूर्वके तु प्रदेशके
अथवा पाञ्चन्त पूर्वे तु हितकाले विनिन्निपेत् ९९

ईशाने वाथ नैर्ऋत्ये वायव्ये वाथे दन्निणे
एवं सर्वेषु हर्म्याणां शिवसद्मैः विशेषतः १००

पूर्वोक्तस्थानदेशे वा मध्ये वा प्रथमेष्टके
जन्मान्तं वाथवा प्रान्तं कुमुदान्तं वा गलान्तकम् १०१

पट्टिकान्तं न्निपेच्चापि विन्यसेत्प्रथमेष्टकम्

पूर्ववच्चौषधिरक्तं निक्षिपेदिष्टकैः सह १०२

इष्टश्चाविधि वासादौ स्थापयेत्प्रथमेष्टकम्
प्रागिष्टके सकारं तु दक्षिणे तु षकारकम् १०३

पश्चिमे तु सकारं स्याच्चयोत्तरे तु वकारकम्
मध्ये तु प्रणवं प्रोक्तं विन्यसेच्चाक्षरं क्रमात् १०४

प्रागिष्टकं दक्षिणं दीर्घं दक्षिणे पश्चिमायतम्
पश्चिमं चोत्तरायामं चोतरं चेन्द्रकायतम् १०५

मध्ये चौषधिरक्तानि विन्यसेच्चोक्तवद्बुधः
स्थपतिः स्थापकश्चोभौ कुर्यात् कर्ममिदं क्रमात् १०६

शिलेष्टकास्त्रिलिङ्गा ज्ञात्वा संग्राह्य शिल्पिराट्
पुरुषं देवविमानस्य स्थापयेत्पुरुषेष्टकम् १०७

गर्भन्यासं च रात्रौ च दिवाकालेष्टका भवेत्
गृहगर्भमन्तर्मुखं स्याद्ग्रामगर्भं बहिर्मुखम् १०८

गर्भन्यासविधिं सम्यक् प्रोक्तं तत्प्रथमेष्टकम्
अनुक्तं कर्म यद्यस्तु स्वगृहे त्वासमोक्तवत् १०९

इति मानसारे वास्तुशास्त्रे गर्भविन्यासविधानं नाम द्वादशोऽध्यायः

## उपपीठविधानम्

उपपीठविधिं वक्ष्ये शास्त्रे संक्षिप्यतेऽधुना
अधिष्ठानोन्नते देशे चोपपीठं हि संश्रितम् १

एते तत्त्वमधिष्ठानं तुङ्गं तच्चतुरंशकतम्
विभजेत्त्वादिमांशेन एकैकांशं विवर्धनात् २

तदष्टांशावसानं स्याज्जन्मादिपट्टिकान्तिकम्
एवं हि चोपपीथोच्चं नवभिर्भेदमीरितम्  ३

अथवा द्वादशान्तं वा मध्यभूम्यन्तिकम् क्रमात्
अथवा क्षुद्रहर्म्ये तु चतुर्भागांशमुन्नतम्  ४

द्विभागं वा त्रिभागं वा चतुर्भागमथापि वा
पञ्चादशोदयं वापि रिन्तिकादिशरोन्नतम्  ५

अथवा मध्यहर्म्ये तु द्विभागं वा त्रिभागिकम्
चतुर्भागं पञ्चभागं षड्भागावसानकम्  ६

शान्तिकं सर्वभूम्यन्तं पञ्चधोत्तुङ्गमीरितम्
अथवा मुख्यहर्म्ये तु त्रयं वा चतुरंशकम्  ७

पञ्चांशं वा षडंशं वा सप्तांशं वावसानकम्
एवं पञ्चविधं प्रोक्तं शान्तिकादिशरोन्नतम्  ८

क्षुद्रोत्सेधं वापि पादाधिकमेव च
पादोनद्विगुणं वापि द्विगुणं चा विशेषतः  ९

मूलहर्म्यस्य पदं तु वप्रजन्म तु बाह्यतः
उपपीठनिर्गमं स्याद्भागमानेन वक्ष्यते  १०

सप्ताष्टनवभागं वा दशमेकादशस् तथा
द्वादशैकार्कभागं वा चतुर्दशांशकमेव वा  ११

पञ्चादशांशकं वापि विभजेत्तु विशेषतः
तत्तद्भागैकभागं वा द्विभागं वा त्रिभागिकम्  १२

चतुर्भागं पञ्चभागं वा षट्सप्ताष्टकमेव च

पूर्ववन्निर्गमं प्रोक्तं यन्मानोरम्य मानतः १३

अथवा हस्तमानेन निर्गमं तत्प्रवक्ष्यते
एकहस्तं समारभ्य चतुर्थांशेन वर्धनात् १४

तत्त्रिहस्तावसानं स्यान्निर्गमं नवधा भवेत्
अथवा दण्डमानेन चोपपीठस्य निर्गमम् १५

दण्डं सार्धं द्विदण्डं वा सार्धद्विदण्डमेव च
त्रिदण्डं चार्धमाधिक्यं चतुर्दण्डमथापि वा १६

पञ्चषट्सप्तदण्डं वा दण्डाष्टनवदण्डकम्
निर्गमं चोपपीठं स्यात्पादबाह्यावसानकम् १७

एतत्तु निर्गमं प्रोक्तं गण्यमानमिहोच्यते
उत्सेधे तु चतुर्विंशत्पञ्चांशोपानमीरितम् १८

एकेन कम्पमित्युक्तं ग्रीवोच्चं द्वादशान्तकम्
कम्पमेकं तु वेदांशं वाजनं कम्पमंशकम् १९

वेदिभद्रमिति प्रोक्तमथवा द्वादशांशकम्
जन्म द्वयांशमंशकं पद्मं कम्पमर्धेन कारयेत् २०

पञ्चांशं कण्ठमर्धेन क्षेपणं पद्ममंशकम्
तदर्धं पट्टिकोत्सेधं कम्पमर्धेन कारयेत् २१

अथवा भागमानेन सार्धांशं पादुकोदयम्
तदूर्ध्वे तत्समाब्जं कम्पमर्धेन कारयेत् २२

सार्धपञ्चांशकं ग्रावं क्षेपणं चार्धभागिकम्
तदूर्ध्वे पद्ममंशेन वाजनं चैकभागिकम् २३

तदूर्ध्वे सार्धकम्पं स्याद्योजयेत्तु विचक्षणः
तदेवांशेन युग्मेन सोपानाम्बुजमेव वा २४

कम्पमर्धं तथा कर्णं तदूर्ध्वेऽशेन पट्टिका
पञ्चांश कन्धरं प्रोक्तं कम्पमर्धेन कारयेत् २५

द्व्यंशं तद्वाजनोत्तुङ्गं कम्पमर्धेन कारयेत्
सर्वहर्म्येषु योग्यं स्याद्वेदिभद्रं चतुर्विधम् २६

प्रतिभद्रं चतुर्विधम्
विंशत्यंशं षडाधिक्यं चोपपीठोदयं भवेत्
तदंशेन त्र्यंशकं च जन्म कम्पं शिवांशकम् २७

तदूर्ध्वे चाक्षमब्जं स्यात्कम्पमेकेन कारयेत्
ग्रीवमेकादशांशं स्यात्तदूर्ध्वे कम्पमंशकम् २८

तद्द्वयं चाम्बुजं चोर्ध्वे कपोतोच्चं गुणांशकम्
तदूर्ध्वेऽन्तरितं चांशं तत्समं प्रतिवाजनम् २९

केचिच्चोपपीठोच्चं स्याद्द्वात्रिंशतिकं भवेत्
जन्मोच्च द्व्यंशकं चैव क्षेपणं चार्धभागिकम् ३०

सार्धद्व्यंशेन पद्मं स्यात्क्षुद्राब्जं चार्धकं भवेत्
तत्समं चोर्ध्वकम्पं स्याद्द्व्यशं चोपरि कन्धरम् ३१

कम्पमर्धं तथाब्जं स्याद्द्व्यंशं चोपरि पट्टिका
तदूर्ध्वे सार्ध पद्मा कम्प कन्धरं दशांशकम् ३२

अर्धांशं कम्पमर्धेन चाधोपद्मं च कारयेत्
तदूर्ध्वे कम्पमर्धांशमंशं चोपरि कन्धरम् ३३

उत्तरं चांशकं चोर्ध्वे क्षेपणार्धार्धकाम्बुजम्
कपोतोच्चं त्रियंशं स्यादालिङ्गं चार्धमागिकम्  ३४

एकं चान्तरितं चोर्ध्वे सार्धांशं प्रतिवाजनम्
अथवा चोपपीठोच्चं तदेकांशाधिकं तथा  ३५

सार्धदृग्जन्ममुत्सेधं कम्पमर्धं तदूर्ध्वके
पद्मतुङ्गं तु वन्यंशं कम्पमर्धेन कारयेत्  ३६

तत्समं कन्धरं प्रोक्तं कम्पमर्धं तथाम्बुजम्
तदूर्ध्वे च द्विभागेन वज्रकुम्भं प्रकारयेत्  ३७

दलमध्यार्धकं पञ्चद्विसप्तांशं गलोदयम्
उत्तरं चार्धकम्पं स्यात्तदूर्ध्वे च सरोरुहम्  ३८

कपोतोच्च त्रियांशं चालिङ्गं चार्धकं भवेत्
अंशेनान्तरितं चोर्ध्वे सार्धांशं प्रतिवाजनम्  ३९

तदंशेनांशमाधिक्यं जन्म सार्धद्वयांशकम्
तदूर्ध्वे कम्पमर्धेन पद्मोत्सेधं गुणांशकम्  ४०

कम्पमर्धं तथा कर्णं कम्पमर्धं तथाम्बुजम्
द्विभागं रत्नपट्टं स्याद्दलार्धं क्षेपणार्धकम्  ४१

कर्णमंशं तदूर्ध्वेऽर्धं क्षेपणं चैकमम्बुजम्
तदूर्ध्वे क्षेपणं सार्धं कर्णमेकादशांशकम्  ४२

अंशोत्तरार्धं कम्पार्धमम्बुजैः क्षमूर्ध्वके
कपोतं सार्धमालिङ्गं सार्धांशान्तरितं तथा  ४३

एकभागं प्रतिं चैव सार्धांशं चोर्ध्ववाजनम्

प्रतिभद्रमिति प्रोक्तं पादतस्तु चतुर्विधम् ४४

देवभूसुरभूपानां हर्म्याणामासनान्वितम्
मञ्चभद्रं चतुर्विधम्
तुङ्गे त्रिंशतिभागेन जन्मतुङ्गं गुणांशकम् ४५

अर्धेन कम्पमूर्ध्वे तु गुणांशेन महाम्बुजम्
अर्धेन कम्प कण्ठं दृक् चार्धं कम्पं तथाम्बुजम् ४६

कपोतं सार्ध युग्मांशं प्रतिवाजन संमितम्
तदूर्ध्वे कम्पमष्टांशमुत्तरं चैकभागिकम् ४७

तदूर्ध्वे च क्षेपणं स्यात्सार्धं पद्मं गोपानकस्त्रिभिः
शेषमालिङ्गान्तरितं प्रतिवाजन संयुतम् ४८

तदेव भागांशमाधिक्यं त्रियं चोपानमीरितम्
अर्धेनोपरि कम्पं स्यात्सार्धत्र्यंशं सरोरुहम् ४९

क्षेपणं सार्धमर्धांशं कम्प कर्णं तथाम्बुजम्
सार्धद्व्यं तु गोपानं त्रिंशं तत्प्रतिवाजनम् ५०

तदूर्ध्वे गलमष्टांशमुत्तरं चैकभागिकम्
कम्पमर्धं तथाब्जं स्यात्कपोतोच्चं त्रियंशकम् ५१

अर्धमर्धांशकं चैवमध्यर्धं यथाक्रमम्
आलिङ्गान्तरितं चैव प्रतिवाजन संमितम् ५२

सद्वात्रिंशतिक तुङ्गं द्व्यंशेनोपानमीरितम्
कम्पमर्धेन तस्योर्ध्वे सार्धद्व्यंशं महाम्बुजम् ५३

क्षुद्राब्जं सार्धं कम्पार्धं द्व्यंशेनान्तरितोपरि

कम्पमर्धं तथा पद्मं पट्टिकोच्चं तथांशकम्  ५४

पञ्चमर्धं तथा कम्पं पञ्चभागेन तद्गलम्
एकंशं चोत्तरं चोर्ध्वे कम्पमर्धं तथाम्बुजम्  ५५

कपोताध्यर्धभागं स्यात्तत्समं प्रतिवाजनम्
तदूर्ध्वेऽन्तरितं कर्णं च त्रियंशं चोत्तरांशकम्  ५६

कम्पमर्धं तथा पद्मं कपोतोच्चं गुणांशकम्
शेषमालिङ्गान्तरितं गलमंशेनोत्तरम्  ५७

चतुस्त्रिंशतिकं भागं कृत्वा तत्तुङ्गमानतः
जन्मतुङ्ग गुणांश स्यात्कम्पमर्धेन कारयेत्  ५८

सार्धवह्न्यंशमब्जं च क्षुद्रपद्मं तदूर्ध्वके
कम्पमर्धं तु सप्तांशं गलमंशेन चान्तरम्  ५९

अर्धेन कम्पमर्धेन पद्मं सार्धद्वियांशुकम्
कपोतं सार्ध चन्द्रांशमालिङ्गादिप्रतिष्ठितम्  ६०

षडंशं चान्तरे कर्णे चोत्तरांशं तदूर्ध्वके
अर्धेनार्धेन कम्पाब्जं गोपानोच्चं गुणांशकम्  ६१

तदूर्ध्वे द्व्यंशकेनैवालिङ्गादिवाजनम्
मञ्चभद्रमिदं नाम्ना चतुर्भेदमितीरितम्  ६२

निर्गमम्
उमापतिविष्णुहर्म्याणां चक्रवर्तिस्तथालये
यत्तदेवमुक्तानि तन्त्रविद्भिः पुरातनैः  ६३

तत्तद्देवादिसर्वेषां निर्गमानि यथोच्यते

तत्तदङ्गानि सर्वेषामुपानादि यथाक्रमम्  ६४

तत्समं निर्गमं वापि तत्पादाधिकमेव च
तदर्धाधिकभागं वा तत्रि भागाधिकं ततः  ६५

तत्समाधिकमेवं वा पादादोपाननिर्गमम्
अथवा पादविष्कम्भं दण्डमानेन मानयेत्  ६६

एकदण्डसमं वापि तत्पादाधिकमेव च
तदर्धधिकमेवं वा तत्त्रिपादाधिकं तु वा  ६७

द्विदण्डं वा त्रिदण्डं वा जन्मनिर्गममीरितम्
अथवा हस्तमानेन पादहस्तं समारभेत्  ६८

तत्समं वर्धयेत्तस्मात्सार्धहस्तावसानकम्
जन्मनिर्गममेवोक्तं पद्मनिर्गममिष्यते  ६९

तुङ्गं तत्सममेवं वा पादाधिक्यार्धाधिकम्
पादोनद्विगुणं वापि पद्ममेवं तु निर्गमम्  ७०

अथवा हस्तमनेन पूर्ववद्विधि वक्ष्यते
उपमानस्य मानेन युक्त्या पद्मं तु निर्गमम्  ७१

क्षुद्रपद्मानि कम्पानि तत्समं वाथ निर्गमम्
पट्टिकादीनि सर्वाणि तत्समं निर्गमं भवेत्  ७२

भागपादादिसर्वेषामुद्ग्रीवास्तुवशान्न्यसेत्
पादानामपि सर्वेषां पत्रजात्यैरलङ्कृतम्  ७३

अन्तरे नाटकैर्युक्तं पद्मानां तु दलैर्युतम्
चतुरश्राकृतिं चैव प्रथमादीन् कम्पवाजनैः  ७४

अथवा रक्तपुष्पैश्च पत्राद्यैरलङ्कृतम्
अन्यैर्युक्तं स्वलङ्कृत्य प्रतिवाजनदेशके ७५

प्रतिवाजनं तेषां कृतेः कर्करीकृतम्
अन्येन वान्तरं चैव व्यालसिंहादिरूपकैः ७६

खङ्गेव श्रोणिसंयुक्तं वृत्ताश्रं पुष्पकैर्युतम्
अन्यानुक्तं च सर्वेषां युक्त्या तत्रैव योजयेत् ७७

इति मानसारे वास्तुशास्त्रे उपपीठविधानं नाम त्रयोदशोऽध्यायः

## अधिष्ठानविधानम्

अधिष्ठानविधिं वक्ष्ये शास्त्रे संक्षिप्यतेऽधुना
त्रिंशदङ्गुलमारभ्य षट्षडङ्गुलवर्धनात् १

चतुर्हस्तावसानं स्यात्कुट्टिमद्वादशोन्नतम्
एकद्वादशभूम्यन्तं हर्म्याणां तु क्रमान्न्यसेत् २

विप्राणां तु चतुर्हस्तं भूपतीनां त्रिहस्तकम्
सार्धद्विहस्तमुत्सेधं युवराजस्य हर्म्यके ३

द्विहस्तं तु विशां प्रोक्तमेकहस्तं तु शूद्रके
हर्म्यतुङ्गवशात्प्रोक्तं तस्य मासुरकोन्नतम् ४

जन्मादिवाजनान्तं स्यात्कुट्टिमोदयमीरितम्
तदुत्सेधं चतुर्विंशत्कृत्वाष्टांशं तु वप्रकम् ५

कुमुदोत्सेध सप्तांशं कम्पमेकेन कारयेत्
कर्णतुङ्ग त्रियशं स्यात्तदूर्ध्वे कम्प शिवांशकम् ६

पट्टिकोच्चं गुणांशं स्यात्कम्पमंशेन योजयेत्
एकोनत्रिंशदंशं तु तुङ्गं कृत्वा विशेषतः ७

द्विभागं जन्मतुङ्गं स्यात्पद्मोच्चं तत्समं भवेत्
कम्पमेकेन कर्तव्यं शेषं प्रागुक्तवन्नयेत् ८

अथवा त्रिनवांशोच्चं जन्म चैकेन कारयेत्
शेषं पूर्ववदुद्दिष्टं कुर्यात्तुङ्गे विशेषतः ९

अष्टाविंशकं कृत्वा जन्म द्व्यंशेन कारयेत्
तदूर्ध्वे कम्पमेकांशं वप्रस्योपरिकांशकम् १०

युक्त कन्धरं प्रोक्तं शेषं पूर्वोक्तवद्विदुः
एतच्चतुर्विधं प्रोक्त पादबन्धमसूरकम् ११

उरगबन्धं चतुर्विधम्
अधिष्ठानस्य तुङ्गं तु साष्टांशदशांशकं कृते
सप्तांशं वप्रतुङ्गं तु कुमुदोच्चं रसांशकम् १२

कम्पमेकेन कर्तव्यं कन्धरं तत्समं भवेत्
पट्टं च पट्टिकैर्द्व्यंशं कम्पमेकेन कारयेत् १३

अथवा द्व्यंशमाधिक्यं तुङ्गं कृत्वा विशेषतः
वाजनं चैकभागं स्यात्तस्याधा कन्धर द्वयम् १४

तस्याधो वाजनं चांशं शेषं प्रागुक्तवन्नयेत्
तदेव द्व्यंशमाधिक्यं कुम्भस्योर्ध्वे विशेषतः १५

कम्पमेकं तथा कर्णं कम्पं तस्योर्ध्वमंशकम्
द्व्यंशं गोपानकं चोर्ध्वे शेषं तत्प्रतिवाजनम् १६

अथवा तच्चतुर्विंशद्भागं कृत्वा यथोच्छ्रयम्
सप्ताशं वप्रतुङ्गं स्यात्कुमुदोच्चं षडंशकम् १७

तदूर्ध्वे कम्पमेकांशं कन्धरं तत्समं भवेत्
तदूर्ध्वे वाजनं चांशं कन्धरोच्चं गुणांशकम्  १८

तत्प्रदेशे विशेषोऽस्ति मकरादिविभूषितम्
तदूर्ध्वे वाजनं चांशं कम्पनं चैकभागिकम्  १९

तदूर्ध्वे कम्पमेकांशं शेषं तत्प्रतिवाजनम्
एतच्चतुर्विधं ज्ञात्वोरगबन्धमिति स्मृतम्  २०

सर्ववक्त्राकृतिं कुर्यात्तदूर्ध्वे तत्प्रतिद्वयम्
एतच्चतुर्विधाकारं वृत्तं कुम्भं प्रकारयेत्  २१

देवभूसुरभूपानां हर्म्याणां तत्प्रकल्पयेत्
प्रतिक्रमं चतुर्विधम्
एकविंशांशकं तुङ्गे न्नुद्रोपानं शिवांशकम्  २२

सार्धद्व्यंशं तु पद्मं स्यात्तदूर्ध्वे सार्ध कम्पकम्
ऊर्ध्वे वप्रं तु सप्तांशं धाराकुम्भं रसांशकम्  २३

आलिङ्गमंशकं चैव तत्समान्तरितं तथा
एकैकपद्मकम्पं वा पट्टं वाथ द्व्यांशकम्  २४

गजैरश्वैश्च सिंहैश्च भूषितैः मकरादिभिः
द्वाविंशांशकं कुम्भे कुमुदोर्ध्वे विशेषतः  २५

आलिङ्गमंशक चोर्ध्वे चैकांशं वाजनं भवेत्
द्विभागं कन्धरं चैव पट्टिकं वाजनांशकम्  २६

तद्देशे पूर्ववद्रूपैः सर्वालङ्कारसंयुतम्
शेषं तु पूर्ववत्कुर्यातदेकांशाधिकं तदा  २७

कुम्भान्तं पूर्ववच्चोर्ध्वे कम्पमेकेन कारयेत्
कन्धरं चैकभागं स्यात्तदूर्ध्वे कम्पमंशकम्  २८

द्व्यंशेन कर्णमूर्ध्वे तु वाजनं चैकभागिकम्
पूर्ववत्समलङ्कृत्य तत्तुङ्गैकांशमाधिकम्  २९

पूर्वोत्तरप्रदेशे तु कम्पनं सान्तरांशकम्
द्व्यंशकं च त्रिपट्टं स्यात्तदूर्ध्वे चान्तरं भवेत्  ३०

प्रतिमं चैवांशमंशं च वाजनं चैव कारयेत्
पूर्ववत्समलङ्कृत्य शेषं प्रागुक्तवन्नयेत्  ३१

तैतिलानां च द्विजातीनामालयेषु न्यसेत्क्रमात्
एतत् प्रतिक्रमं नाम्ना तं चतुर्विधमीरितम्  ३२

कुमुदबन्धम्
जन्मादिवाजनान्तं च सप्तविंशांशमुच्छ्रयेत्
द्विभागं जन्मतुङ्गं स्यात्तत्समं चाम्बुजोदयम्  ३३

त्र्यंशमेकेन कम्पं स्याद्व्प्रतुङ्गं षडंशकम्
त्र्यंश पद्मं च कर्णं च चांशु पद्मं तथांशकम्  ३४

कुमुदोच्चं त्रियंशं स्यात्पद्मतुङ्गं शिवांशकम्
त्र्यंशकं पद्मं कर्णान्तं कम्पमब्जांशकं  ३५

द्विंशं पट्टाब्जमंशं च कम्पमंशेन योजयेत्
पूर्वोत्तुङ्गस्य मानेन पट्टिके तु विशेषतः  ३६

द्विंशं गोपानसंयुक्तं चोर्ध्वे युक्त्या स्वलङ्कृतम्
केचित्कुमुदकाङ्गे तु त्रिपट्टाश्रममेव वा  ३७

मध्ये पट्टैर्विशेषं तु पुष्परत्नैश्च शोभितम्
कटकावृतमेवं वा शुद्धवृत्तमथापि वा  ३८

त्रियश्रं कुमुदं वापि षडश्राकृतिरेव वा
एवमष्टविधं कुर्यात्पद्मकेसरमीरितम्  ३९

सर्वहर्म्येषु योग्यं स्यात्कारयेच्छिल्पिवित्तमः
नवाधिकविंशांशं तत्तथाधिकतुङ्गके  ४०

जन्मतुङ्गं तद्द्विभागं वेदांशं वप्रतुङ्गकम्
अर्धांशपद्मतुङ्गं तु कन्धरं तत्समं भवेत्  ४१

तत्समं चोर्ध्वपद्मं स्यादेकांशं कुमुदोदयम्
पद्ममध्यर्धं तथा कम्पं कर्णतुङ्गं द्वयांशकम्  ४२

कम्पमर्धं तथा पद्म पट्टिकोच्चं द्वयांशकम्
तदूर्ध्वे पद्ममेकांशं चोर्ध्वकम्पं तु तत्समम्  ४३

अर्धार्धं वाथ जन्मोच्चं कम्पमूर्ध्वेऽर्धमेव वा
शेषं प्रागुक्तवत्कुर्यात्तत्तदेतद्विशेषतः  ४४

एकांशं जन्मतुङ्गं स्यादर्धांशं पद्ममेव च
शेषं तु पूर्ववत्कुर्यात्किञ्चिदेवं विशेषतः  ४५

पट्टिके तत्कपोतं वा शेषं युक्त्या प्रयोजयेत्
एतच्चतुर्विधं प्रोक्तं पुष्पपुष्कलनामकम्  ४६

क्षुद्रमध्ये तु मुख्ये तु प्रथमाद्यं तु भूमिकम्
तेन हर्म्येषु योग्यं स्यात्कल्पयेच्छिल्पिवित्तमः  ४७

जन्मादिवाजनान्तं स्याद्द्वात्रिंशद्विभाजिते

द्विभागं जन्मतुङ्गं स्यादेकांशेकेन वाजनम्  ४८

सप्तांशेन महापद्मं कर्णमंशं तथाम्बुजम्
ऊर्ध्वे कुम्भं तु वेदांशं पद्ममेकेन कारयेत्  ४९

तदूर्ध्वे कम्पमेकांशं त्र्यंशकैर्गलमुन्नतम्
कम्पमंशं गलं चांशं गोपानं चतुरंशकम्  ५०

आलिङ्गमंशकं चोर्ध्वे अंशेनान्तरितं तथा
प्रतिमुखं तद्विभागं स्यादूर्ध्वे वाजनमंशकम्  ५१

अथैकांशेन समाधिक्यं महाशोपरि पद्मकम्
जन्मस्योपरि पद्मं वा शिवांशेनांशमाधिकम्  ५२

एतन्महाम्बुजस्याधो कम्पमेकेन कारयेत्
रसांशं तन्महाब्जं स्याच्छेषं प्रागुक्तवन्नयेत्  ५३

एतच्चतुर्विधं प्रोक्तं श्रीबन्धमिति नामकम्
चक्रवर्तेश्च विष्णोश्च शिवस्यापि च योग्यकम्  ५४

श्रीबन्धं चतुर्विधम्
षड्विंशद्भागमुत्तुङ्गे जन्ममेकांशमीरितम्
वप्रोच्चं तु षडंशं स्यात्कुमुदोच्चं षडंशकम्  ५५

कर्णमेकेन बन्धांशं कर्ण कम्पं शिवांशकम्
पद्ममंशं तदूर्ध्वे तु त्र्यंशं गोपानकोदयम्  ५६

आलिङ्गमंशकं चोर्ध्वे चांशमन्तरितं तथा
प्रतिवक्रं तु युग्मांशं वाजनं चैकभागिकम्  ५७

अथवा जन्म युग्मांशं तदेव प्रतिकांशकम्

शेषं तु पूर्ववत्कुर्याज्जन्मोर्ध्वे क्षेपणांशकम्  ५८

गोपानोपरि चाध्येनौ लिङ्गान्तरितांशकम्
अंशं तत्प्रतिवक्रं स्यादर्धांशश्चार्ध वाजनम्  ५९

अथवा जन्म मेकांशं तत्समं चाब्जकं तथा
तदूर्ध्वे कम्पमेकांशं शेषं प्रागुक्तवन्नयेत्  ६०

एतच्चतुर्विधं प्रोक्तं मञ्चबन्धमुदीरितम्
देवानां भूपतीनां च हर्म्याणां तत्प्रकल्पयेत्  ६१

मञ्चबन्धं चतुर्विधम्
जन्मादिवाजनान्तं च कृत्वा विंशत्षडाधिकम्
जन्मतुङ्गं तु सार्धांशं युगलं पद्मतुङ्गकम्  ६२

एवं कम्पं च वप्रोक्तं षडंशं कुम्भ युगांशकम्
तस्योर्ध्वे कम्पमेकांशं कन्धरश्च द्विभागिकम्  ६३

एकांश कम्पकं चाद्यां पट्टं तत्क्षेपणांशकम्
आलिङ्गं चार्धकं चोर्ध्वे कम्पमेकेन कारयेत्  ६४

अध्यर्धांशं प्रतिं चैव सार्धांशं वाजनं भवेत्
व्यालरूपादिसिंहैश्च मकराद्यैर्विभूषितम्  ६५

द्विभगं जन्मतुङ्गं स्यात्तत्सममम्बुजं भवेत्
एकांशं क्षेपणं चैव वप्रतुङ्गं रसांशकम्  ६६

कुमुदोच्चं युगांशं स्यात्कम्पमेकेन कारयेत्
कन्धरं च द्विभागं स्यात्कम्पमंशेन योजयेत्  ६७

पट्टिकोच्चं द्विभागं स्यात्कम्पमंशं तदूर्ध्वके

कर्णमेकेन कर्तव्यं वाजनं चैकभागिकम् ६८

प्रतिमं चैकांशकं स्याद्वाजनं चैकभागिकम्
त्रिपट्टं कुमुदं वापि प्रतिरेवं त्रिपट्टकम् ६९

शेषं तु पूर्ववत्कुर्यात्प्रत्यलङ्कार पूर्ववत्
तदेव पट्टिकं चोर्ध्वे कन्धरं चैकभागिकम् ७०

शेषं पूर्ववदुद्दिष्टं युक्त्यालङ्कार योजयेत्
एवं चतुर्विधं प्रोक्तं श्रेणीबन्धमिति स्मृतम् ७१

देवानामपि सर्वेषां हर्म्याणां कल्पयेद्बुधः
श्रेणीबन्धं चतुर्विधम्
अष्टादशांशकं तुङ्गे जन्ममर्धार्धभागिकम् ७२

अर्धांशं क्षुद्रकम्पं तु भूतांशं तन्महाम्बुजम्
एकांशं कन्धरं चांशं चाब्जं कुम्भं गुणांशकम् ७३

तदूर्ध्वे पद्ममंशं स्यादालिङ्गांशं तदूर्ध्वके
एकांशं वाजनं चोर्ध्वे प्रतिं द्व्यंशमंशं वाजनम् ७४

द्वाविंशांशकं कृत्वा पक्षांशं जन्मतुङ्गकम्
क्षुद्रं क्षेपणमर्धांशं सार्धवेदांशकाम्बुजम् ७५

एकांशं कन्धरं चोर्ध्वे तत्समं चाब्जकं भवेत्
कुम्भं तुङ्गं गुणांशं च पद्मतुङ्गं शिवांशकम् ७६

कम्पमेकं तदूर्ध्वे तु कन्धरं चाक्षभागिकम्
क्षेपणं चैकभागं तु पद्मं चैकेन कारयेत् ७७

द्विभागं पट्टिकोत्तुङ्गं पद्ममंशमंशं वाजनम्

तस्मादेकांशमाधिक्यं सार्धयुग्मं तु पादुकम्  ७८

तदूर्ध्वे कम्पमर्धेन पञ्चांशेन महाम्बुजम्
कन्धरं चैकभागेन पद्ममंशेन योजयेत्  ७९

कुमुदोच्चं गुणांशं स्यात्पद्ममंशं तदूर्ध्वके
कम्पमंशेन संयुक्तं कन्धरं तत्समं भवेत्  ८०

तत्समं वाजनं चोर्ध्वे वन्ह्यंशान्तरितं तथा
द्व्यंशं तत्प्रतिं संयुक्तं वाजनं चैकभागिकम्  ८१

तस्मादाधिक्यमेकांशं जन्मतुङ्गं कलांशकम्
एकांशं क्षुद्रपद्मोच्चं तदूर्ध्वमंशेन वाजनम्  ८२

भूतांशेन महापद्मं तदूर्ध्वांशे दलान्वितम्
शेषं प्रागुक्तवच्चोर्ध्वे गृहसिंहादिभूषितम्  ८३

एतच्चतुर्विधं ज्ञात्वा पद्मबन्धमुदीरितम्
देवानामपि सर्वेषां देवीनां शम्भोरालये  ८४

कारयेत्सर्वसंसिद्ध्यै श्रीसौभाग्यप्रदायकम्
पद्मबन्धं चतुर्विधम्
एकविंशांशकोत्सेधं जन्मतुङ्ग कलांशकम्  ८५

एकांशं पद्मतुङ्गं तु कम्पमेकेन कारयेत्
भूतांशं कुम्भतुङ्गं स्यादेकांशं क्षेपणं भवेत्  ८६

त्रियंशं स्यादधोपद्ममूर्ध्वे कर्णं शिवांशकम्
तत्समं कम्पमूर्ध्वे तु द्विभागं पट्टिकोदयम्  ८७

तदूर्ध्वे कम्पमेकांशं कन्धरं चैकभागिकम्

तदूर्ध्वे द्व्यंशकं पट्टं युक्त्या तत्रैव योजयेत् ८८

तदेव तुङ्गभागेन वह्नि सोपानमीरितम्
एकांश पद्मतुङ्गं स्यात्पञ्चांशं कुमुदोदयम् ८९

कम्पमेकं तदूर्ध्वे स्याद्बन्धांशं पद्मतुङ्गकम्
तदूर्ध्वे कम्पमेतेन तदूर्ध्वे द्व्यंशकैः गलम् ९०

क्षेपणं चैकभागं स्यात्पद्ममेकेन कारयेत्
कपोतोच्च द्विभागं स्यात्कम्पमेकं तदूर्ध्वके ९१

तदेवाब्जं प्रदेशे तु कम्पमेकेन पूर्ववत्
तदूर्ध्वे द्विंश कर्णं स्यात्कम्पमेकं तदूर्ध्वके ९२

द्विंशं चान्तरितं चोर्ध्वे प्रतिं चैकांशमेव च
तदूर्ध्वे वाजनं चांशं शेषं प्रागुक्तवन्नयेत् ९३

जन्मोच्चं त्र्यंशकं स्यात्पद्ममेकेन कारयेत्
कन्धरं चैकभागं स्यादूर्ध्वे पद्मं शिवांशकम् ९४

कुम्भटङ्गं शरांशं स्यात्पद्ममेकेन कारयेत्
तदूर्ध्वे कम्पमेकेन कर्णमंशं तदूर्ध्वके ९५

पद्ममेकं तदूर्ध्वे तु कपोतोच्चं कलांशकम्
आलिङ्गमंशकंचैवमेकांशान्तरितं तथा ९६

प्रतिवाजनमेकेन कुम्भबन्धं चतुर्विधम्
गृहसिंहादिसर्वेषां युक्त्या देशैः लङ्कृतम् ९७

कुम्भबन्धं चतुर्विधम्
उत्सेधे तु चतुर्विंशद्भागं कुर्याद्विशेषतः

जन्मोच्चं तु द्विभागं स्यात्तत्समं पद्मतुङ्गकम्  ९८

कम्पमेकं तदूर्ध्वे तु कर्णतुङ्गं गुणांशकम्
तदूर्ध्वे कम्पमेकांशं पट्टिकोच्चं कलांशम्  ९९

तदूर्ध्वे कम्पमंशेन चाधो पद्मं कलांशकम्
कर्णमेकांशकं चोर्ध्वे पद्ममेकांश कारयेत्  १००

तदूर्ध्वे कुम्भ त्र्यंशं स्यात्पद्ममेकांशमेव च
तदूर्ध्वे निम्नमंशं स्यात्तस्योर्ध्वे कम्पमंशकम्  १०१

तदूर्ध्वे तत्समं निम्नमूर्ध्वे प्रतिमेकांशमेव च
तदेव पूर्ववदुत्सेधं पद्मकर्णे विशेषतः  १०२

मध्ये कुम्भं कलांशं स्यात्तस्योर्ध्वे एकाश निम्नकम्
शेषं प्रगुक्तवत्कुर्यात्तद्भागेन विशेषतः  १०३

द्विभागं जन्मतुङ्गं स्यात्पद्मतुङ्गं तु तत्समम्
निम्नमेकं तदूर्ध्वे तु कुम्भतुङ्गं कलांशकम्  १०४

कम्पमेकं तदूर्ध्वे तु कन्धरं चैकभागिकम्
कम्पमेकं तदूर्ध्वे स्यात्तत्समं चोर्ध्वकम्पकम्  १०५

कपोतोच्चं कलांशं स्याद्वाजनं चैकभागिकम्
तदूर्ध्वे सार्ध पद्मं स्यान्निम्नमेकेन कारयेत्  १०६

तदूर्ध्वे सार्ध पद्मं तु कुम्भतुङ्गं कलांशकम्
तदूर्ध्वे सार्ध पद्मं स्यान्निम्नमेकेन कारयेत्  १०७

तस्योर्ध्वे क्षेपणांशं तत्समं निम्नमेव च
तस्योर्ध्वे एकं प्रतिं चैव कारयेल्लक्षणान्वितम्  १०८

अथवा द्व्यंशकं जन्म तत्समं पद्मस्योच्छ्र्यम्
एकांशं कन्धरं प्रोक्तं कुम्भतुङ्गं कलांशकम् १०९

एकांशमूर्ध्वेऽकं निम्नं च क्षुद्रपट्टाब्जमंशकम्
कपोतं चोर्ध्वके युग्मं तदूर्ध्वे क्षेपणांशकम् ११०

तदूर्ध्वे चार्धपद्मांशं तत्समं कन्धरं भवेत्
तत्समं चोर्ध्वपद्मं स्यात्कुम्भतुङ्गं गुणांशकम् १११

अधो पद्मं शिवांशं स्यात्तदूर्ध्वंशेन कन्धरम्
कम्पमेकेन भागं स्यात्क्षुद्राब्जं चार्धकं भवेत् ११२

अध्यर्धांशं कपोतोर्ध्वं शेषं तत्प्रतिवाजनम्
जन्मादिवाजनान्तं च तुङ्ग षड्विंशदंशके ११३

द्विभागं जन्मतुङ्गं स्यात्तत्समं पद्मतुङ्गकम्
कम्पमेकं तदूर्ध्वे तु कन्धरं तद्द्विभागिकम् ११४

तदूर्ध्वे कम्पमेकांशं पद्ममेकेन योजयेत्
पट्टिकोच्च द्विभागं स्यात्तदूर्ध्वे पद्ममंशकम् ११५

आलिङ्गमंशकं चोर्ध्वे ऊर्ध्वे पद्मं शिवांशकम्
कुम्भतुङ्गं त्रिभागं स्यात्तदूर्ध्वे पद्ममंशकम् ११६

पद्ममेकं तदूर्ध्वे तु कन्धरं च द्विभागिकम्
एकेन कम्पमंशाब्जं कपोतोच्चं कलांशकम् ११७

शिवांशं चोर्ध्वके कम्पं शेषं युक्त्या प्रयोजयेत्
ग्राहादिचित्र सर्वेषां क्षुद्रनासादिभूषितम् ११८

एतत्पञ्चविधं प्रोक्तं कुम्भदेशे विशेषतः

वृत्तं विधिं त्रिपट्टं वाधाराय कटकान्वितम्  ११९

एतत्कलशबन्धाख्यं देवभूपत्योरालये
वप्रबन्धम्
वप्रबन्धमधिष्ठानमेकत्रिंशांशतुङ्गके  १२०

जन्मं तु द्व्यंशकं तुङ्गे कम्पमर्धेन कारयेत्
पद्मं सार्धं शिवांशं स्यात्तदूर्ध्वार्धेन वाजनम्  १२१

वप्रोच्चं सार्धवह्न्यंशं पद्ममर्धमर्धं कम्पम्
कन्धरोच्चं द्विभागं स्यादर्धार्धकम्प पद्मकम्  १२२

पट्टिकोच्चं कलांशं स्यात्पद्ममर्धार्ध वाजनम्
युगांशं कर्णतुङ्गं स्यात्त्वेपणांशम्बुजार्धकम्  १२३

कपोतोच्चं द्विभागं स्यादेकांशं प्रतिवाजनम्
वप्रबन्धमिति प्रोक्तं वज्रबन्धमिहोच्यते  १२४

वर्जबन्धम्
तदेव तुङ्गभागेन जन्मतुङ्गं कलांशकम्
तदूर्ध्वेऽर्धेन कम्पं स्यात्सार्धार्धं पद्मतुङ्गकम्  १२५

अर्धेन कम्पकं चोर्ध्वे कन्धरं तत्समं भवेत्
कम्पमर्धेन तस्योर्ध्वे पद्ममर्धेन कारयेत्  १२६

वज्रकुम्भं द्वयांशं स्यात्तदूर्ध्वेऽर्धं सरोरुहम्
कम्पमर्धेन तस्योर्ध्वे कर्णतुङ्गं कलांशकम्  १२७

तदूर्ध्वं कम्पमर्धेन तत्समं चाम्बुजं भवेत्
कपोतं द्विभागं स्यादेकांशं प्रतिवाजनम्  १२८

कन्धरं चाश्विनीभागं चांशेन कम्प पद्मकम्
वज्रपट्टं द्विभागं स्यात्पद्म कम्पं शिवांशकम् १२९

वज्रबन्धमिति प्रोक्तं श्रीभोगं तमिहोच्यते
श्रीभोगम्
तुङ्गे तु सप्तविंशांशं सार्धद्व्यंशेन जन्मसु १३०

क्षुद्रकम्पार्धभागेन अम्बुजोच्चं गुणांशकम्
अर्धेन क्षुद्रपद्मं स्यात्कम्पमर्धेन योजयेत् १३१

तदूर्ध्वे कर्णमंशं स्यात्कम्पमर्धेन योजयेत्
क्षुद्राब्जं तत्समं चैव कुमुदोच्चं गुणांशकम् १३२

तदूर्ध्वे पद्ममर्धेन तत्समं क्षेपणं भवेत्
कर्णतुङ्गं कलांशं स्यात्कम्पमर्धेन कारयेत् १३३

तत्समं पद्मतुङ्गं स्यात्पट्टिकोच्चं कलांशकम्
पद्ममर्धेन कम्पार्धं कन्धरं द्व्यंशमिष्यते १३४

कम्प पद्मं शिवांशं तु सार्धार्धांशं कपोतकम्
तदूर्ध्वे द्व्यंशकेनैवमालिङ्गान्तादि योजयेत् १३५

अथवा जन्म युग्मांशं क्षुद्रोपानं शिवांशकम्
महाम्बुजं शिवांशं स्यादर्धेन क्षुद्रपङ्कजम् १३६

अर्धेन कम्प कर्णं दृक्कम्प पद्मं शिवांशकम्
कपोतं चाश्विनीभागमम्बरांशं गलोदयम् १३७

प्रतिवाजनमेकांशं द्विभागांशं गलोदयम्
व्योमांशं पद्म कम्पं च द्व्यंशकं पट्टिकोदयम् १३८

अध्यर्धांशं गलोत्तुङ्गं वाजनं कम्पमूर्ध्वके
तत्समं पद्मतुङ्गं स्यात्सार्धद्व्यंशं कपोतकम् १३९

द्व्यंशेन प्रतिमं चैव सप्तविंशतिकोदयम्
श्रीभगं स्याद्द्विधा प्रोक्तं सर्वालङ्कारसंयुतम् १४०

रत्नबन्धम्
रत्नबन्धमधिष्ठानं षड्विशत्यंशकं भवेत्
अध्यर्धांशं तु जन्म स्यादर्धांशं क्षुद्रवाजनम् १४१

वप्रयोशं तु पद्मं स्यात्तदूर्ध्वेऽर्धेनासनम्
रत्नवप्रं तु बन्धांशमर्धेन कारयेत् समम् १४२

तत्समं चोर्ध्वकम्पं स्यान्निम्नमर्धेन कारयेत्
तदूर्ध्वार्धेन कम्पं स्यादर्धेनाब्जं तदूर्ध्वके १४३

रत्नकम्प द्विभागं स्यात्तदूर्ध्वेऽर्धेन कम्पजम्
तदूर्ध्वार्धेन कम्पं स्यात्कन्धरं च द्विभागिकम् १४४

कम्पपद्मं शिवांशं स्याद्रत्नपट्टं कलांशकम्
तदूर्ध्वे पद्मकम्पं च व्योमांशेनैव योजयेत् १४५

सार्धांशं तु कर्णं स्यादर्धांशं चोर्ध्ववाजनम्
अर्धेनाब्जं तदूर्ध्वे तु द्व्यांशकं कपोतकम् १४६

आलिङ्गं चार्धभागेन शेषं तत्प्रतिवाजनम्
तद्देश व्यालरूपादिमकरादिविभूषितम् १४७

अन्यत्सर्वाङ्गकै रत्नैः पङ्कजैश्च विभूषितम्
शिवविष्णवालयं कुर्याद्रत्नबन्धमुदीरितम् १४८

पट्टबन्धम्
जन्मादिवाजनान्तस्य तुङ्गे तदंशकं भवेत्
जन्मतुङ्गं द्विभागं स्यात्तदूर्ध्वेऽर्धेन वाजनम् १४९

महाब्जं सार्धयुग्मं स्यात्पद्मकम्पं शिवांशकम्
निम्नकम्पं तथैकांशं तदूर्ध्वेकेन पद्मकम् १५०

महापट्ट द्विभागं स्यात्पद्मकम्पं शिवांशकम्
कन्धरं चैकभागं स्यात्क्षेपणाब्जं शरांशकम् १५१

कपोतोच्चं द्विभागं स्याच्छेषं तत्प्रतिवाजनम्
एतत्तु पट्टबन्धं स्यात्सर्वालङ्कारसंयुतम् १५२

कुद्मिबन्धं चतुर्विधम्
त्रिषडंशं तदुत्सेधं द्व्यंशकं जन्मतो उच्छ्रयम्
कम्पमर्धं तदूर्ध्वे तु सार्धद्व्यंशं महाम्बुजम् १५३

पद्मकम्पं तथैकेन निम्नमन्तरितांशकम्
ग्रध्यर्धांशं प्रतिं चैव वाजनं चैकभागिकम् १५४

कन्धरं चैकभागं स्यात्कम्पपद्मं शिवांशकम्
वृत्तकुम्भं द्विभागं स्यात्पद्मक्षेपणमंशकम् १५५

कर्णमेकेन तस्योर्ध्वे कम्पपद्मं शिवांशकम्
कपोत सार्धभागं स्यात्तदूर्ध्वार्धेन वाजनम् १५६

सर्वालङ्कारसंयुक्तं व्यालग्राहादिभूषितम्
तदेव तुङ्गांशमाधिक्यं जन्मतुङ्गं कलांशकम् १५७

तदूर्ध्वेऽर्धेन पद्मं स्यात्कम्पमर्धेन कारयेत्
द्व्यंशं महाम्बुजं चोर्ध्वे पद्मनिम्नं शिवांशकम् १५८

अर्धेनाब्जं तदूर्ध्वे तु सार्धांशं कुमुदोदयम्
अर्धेनाब्जं तथा कर्णं अर्धेनाब्जं तदूर्ध्वके १५९

सार्धांशं पट्टिकोत्तुङ्गं पद्मकम्पं शिवांशकम्
अर्धेन निम्नकं चोर्ध्वे तत्समान्तरितं तथा १६०

एकांशेन प्रतिं चोर्ध्वे वाजनं चार्धभागिकम्
एकांशं कन्धरं प्रोक्तं कम्पमर्धेन योजयेत् १६१

पद्ममर्धेन सार्धांशं कपोतांशेन वाजनम्
एकं तत्प्रतिबन्धं स्याद्द्विविधं तत्प्रकीर्तितम् १६२

शेषं तु पूर्ववत्कुर्यात्सर्वालङ्कारसंयुतम्
तुङ्गे षड्विंशदंशेन जन्मतुङ्गं कलांशकम् १६३

क्षुद्रोपानं शिवांशं स्यात्पद्मतुङ्गं कलांशकम्
एकेन कम्पकं चोर्ध्वे कन्धरं च द्विभागिकम् १६४

तदूर्ध्वे कम्पमेकांशं पद्ममेकेन कारयेत्
पर्यंशं कुमुदोच्चं स्यात्पद्ममेकेन कारयेत् १६५

कम्पमेकं तदूर्ध्वं च द्व्यंशकैर्गलमेव च
तदूर्ध्वे कम्पमेकांशं पद्ममेकेन कारयेत् १६६

कपोतोच्चं द्विभागं स्याच्छेषं तत्प्रतिवाजनम्
वृत्तं वा पट्टकम्पं वा कपोतो वापि पट्टिकौ १६७

अध कर्णद्वयोर्देशे व्यालरूपादिभूषितम्
चतुर्विंशांशकं तुङ्गे जन्मोत्सेधं गुणांशकम् १६८

कम्पमीशं तदूर्ध्वे तु निम्नमंशेन कारयेत्

एतदूर्ध्वं पञ्चभागेनैकैकं भद्रसंयुतम् १६९

तदूर्ध्वे कम्पमेकेन तत्समं निम्नकं भवेत्
तत्समान्तरितम् चोर्ध्वे भागेन प्रतिसंयुतम् १७०

तदूर्ध्वे चांश कम्पं च तत्समं चोर्ध्वकन्धरम्
कम्पमेकं तदूर्ध्वे तु पद्ममेकेन कारयेत् १७१

कपोतोच्चं त्रियंशं स्यादेकांशं कन्धरं भवेत्
तत्समोर्ध्वे प्रतिं चैव कुम्भमष्टांशमेव च १७२

कपोते भद्रपट्टं स्यात्पत्रपट्टकमेव च
एतच्चतुर्विधं प्रोक्तं कम्पबन्धं प्रकीर्तितम् १७३

कम्पबन्धम्
षट्षड्भागकृते तुङ्गे जन्मादी वाजनान्तकम्
चतुर्भागेन जन्म स्यात्क्षुद्रोपानं शिवांशकम् १७४

महाब्जं पञ्चभागं स्यात्क्षुद्राब्जं तु शिवांशकम्
तदूर्ध्वे कम्पमेकेन निम्नमंशेन योजयेत् १७५

तदूर्ध्वे वाजनांशं तत्समं चोर्ध्वे पद्मकम्
महाब्जोच्चसमं कुम्भं तदूर्ध्वे चाब्जमंशकम् १७६

कम्पमेकं तदूर्ध्वे तु चालिङ्गोपरि चांशकम्
तदूर्ध्वेऽन्तरितं चांशं प्रति द्व्यंशेन योजयेत् १७७

तस्योर्ध्वे वाजनं चांशं क्षेपणं चैकभागिकम्
तस्योर्ध्वे कन्धरं चांशं कम्पमेकेन कारयेत् १७८

पद्ममंशं तदूर्ध्वे तु कपोतोच्चं त्रियंशकम्

आलिङ्गमंशकं चोर्ध्वे प्रतिमेकेन कारयेत्  १७९

श्रीकान्तम्
वृत्तं वा तत्र पट्टं वा कुम्भं देशे विशेषतः
श्रीकान्तं चतुर्विधं प्रोक्तं सर्वालङ्कारशोभितम्  १८०

तदेव तुङ्गभागे त्र्यंशं चोपानतुङ्गकम्
क्षुद्रोपानं तथौकांशं चाष्टांशं महाम्बुजम्  १८१

क्षुद्राब्जं चैकभागेन कन्धरं तत्समं भवेत्
पद्ममेकं तदूर्ध्वे तु पट्टिकोच्चं गुणांशकम्  १८२

क्षुद्रकम्पं शिवांशं स्यात्पद्मतुङ्गं युगांशकम्
क्षुद्राब्जं तुङ्गमंशं च निम्नं चोर्ध्वैकभागिकम्  १८३

तत्समं चोर्ध्वपद्मं स्यादूर्ध्वे कुम्भ गुणाशकम्
तदूर्ध्वे कम्पमेकांशं तत्समं क्षेपणान्वितम्  १८४

कन्धरं च द्विभागं स्यात्कम्पमेकेन कारयेत्
पद्मतुङ्गं तु तत्तुल्यं कपोतोच्चं कलांशकम्  १८५

तदूर्ध्वमालिङ्गमंशं च प्रतिमेकेन कारयेत्
तत्तत्तु श्रीकान्तं स्याच्छिवविष्णवालयं भवेत्  १८६

अधिष्ठाननिर्गमम्
जन्मादिवाजनान्तं चाङ्गानां तद्विशेषतः
तत्तद्द्रव्येण संज्ञात्वा वृद्धिहान्यांशकं भवेत्  १८७

तुङ्गे हीनाधिकं चैतत् सर्वं दोषं समुद्भवेत्
तत्समं निर्गमं वापि त्रिपादमर्धार्धार्धमेव च  १८८

तदेव क्षेपणं सर्वे यथाशोभं तु कारयेत्
उपानतुङ्गसमं वापि तत्पादोनविवर्धनात् १८९

तुङ्गेन त्रिविधानां च त्रिपादं निर्गमं भवेत्
वप्रोच्चं तु समं वापि यावत्कुमुदनिर्गमम् १९०

कुमुदोच्चं वप्रपट्टान्तं पट्टिकानिर्गमं भवेत्
तत्समं निर्गमं वपि पट्टं गोपाननिर्गमम् १९१

क्षुद्रपङ्कजसर्वेषां तत्समं निर्गमं भवेत्
यथाशोभं बलात्सर्वमङ्गानां सहितो न्यसेत् १९२

दण्डमाननिर्गमम्
अथवा दण्डमानेन निर्गमं वक्ष्यतेऽधुना
दण्डं वा सार्धदण्डं वा द्विदण्डकं वा त्रिदण्डकम् १९३

सार्धत्रिदण्डकं वापि चतुर्दण्डमथापि वा
सार्धचतुर्दण्डकं वा पञ्चदण्डमथापि वा १९४

एवं चोपानानिष्क्रान्तमथवा हस्तमानतः
अर्धहस्तं समारभ्य त्रित्र्यङ्गुलविवर्धनात् १९५

सार्धहस्तावसानं स्यान्निर्गमं त्रित्रिभेदकम्
क्षुद्रमध्यं च मुख्यानां हर्म्याणां निर्गमं च तत् १९६

एवं चतुःषष्टिमसूरकाणि
शास्त्रोक्तमानेन विभाजितानि
ज्ञात्वा प्रकुर्वन्निह शिल्पिवर्य
स्तद्वास्तुभर्तुः प्रददाति संपत् १९७

विमानशालेषु च मण्डपेषु
निधानसद्मेष्वपि गोपुरेष्वपि

एतेष्वधोदेशतलोपपीठे
तस्योपरिष्ठात्कृतकुट्टिमानि १९८

किं चोपपीठेन सहैव कुर्यात्
पीठोपपीठात्समसूत्रकानि
एवं तु सत्यकृतेव भक्तौ
सिञ्चन्ति लक्ष्म्या सह मुक्तिभुक्तिम् १९९

समस्तहर्म्यादि च धातुसर्वं
कृतं विमान मसुरेण सह यदि स्यात्
लोकेत्वनावृष्ट्यपि कर्तृनाशं तु
अश्रीकरं स्यात्खलु सर्वहानिः २००

तस्मान्मसूरेण सहैव सर्वं
कृतं विमानेषु च भूषणानि
अनूनलक्ष्मीरिह भुक्तिमुक्तिम्
आयुष्यमारोग्यकरं सुखं च २०१

इति मानसारे वास्तुशास्त्रे अधिष्ठानविधानं नाम चतुर्दशोऽध्यायः

स्तम्भलक्षणम्

पादानामपि सर्वेषां लक्षणं वक्ष्यतेऽधुना
आयामं च विशालं च आयादि भूषणादिकम् १

दारुसंग्रहणं पादस्थापनं च यथाक्रमम्
जङ्घा च चरणं चैव स्तली स्तम्भमङ्घ्रिकम् २

स्थाणु स्थूणं च पादं च कम्भमारणि भारकम्
धारणं द्वादशं नाम पर्यायोक्तं पुरातनैः ३

अधिष्ठानोपरिष्ठात्तु चोत्तराधोऽवसानकम्
उपपीठोपरिष्टात्तु जन्मादौ चोत्तरान्तकम् ४

पादायामावसानं च अधिष्ठानोदयेन च
द्विगुणं वा सपादार्धं पादोनद्विगुणं तु वा ५

द्विगुणान्ताङ्घ्रिकायामं हस्तमानवशोच्यते
सार्धद्विहस्तमारभ्य षट्षडङ्गुलवर्धनात् ६

अष्टहस्तावसानं स्याच्चतुर्थांशङ्घ्रितुङ्गकम्
त्रिचतुष्पञ्चषण्मात्रं कुडयस्तम्भविशालकम् ७

तत्तद्द्विगुणितं वापि त्रिगुणं वा चतुर्गुणम्
एतत्कम्पविशालं स्यादथवा तुङ्गमानतः ८

आदित्यरुद्रपत्यं शरन्ध्रं चाष्टांशकं भवेत्
एकैकं पादविस्तारं तत्तत्पादोनमग्रतः ९

एतत्पादविशालं स्यात्तथा कारमिहोच्यते
चतुरश्रं ब्रह्मकान्तं स्यादष्टाश्रं विष्णुकान्तकम् १०

षोडशाश्रं तु वृत्तं वा रुद्रकान्तमिति स्मृतम्
पञ्चाश्रं शिवकान्तं स्यात्षडश्रं स्कन्दकान्तकम् ११

मूलादि चाग्रपर्यन्तमेवमाकारमीरितम्
एवमाकारपादानां मूले वेदाश्रमेव च १२

मूलं मध्यं चाग्रं च चतुरश्रमथापि वा
अग्रतारसमाग्रे तत्कर्णमानाग्रमन्तकम् १३

तत्समं मध्यमाश्रान्तं मध्यमाश्रं समाश्रकम्
मध्यमाग्रस्य द्वयोः पादमग्रास्य च मान्तकम् १४

शेषं तत्पादमूले तु चतुरश्राकृतिं न्यसेत्

चित्रकर्णमिति प्रोक्तं तत्र सर्वालयं भवेत्  १५

तन्मूले चासनं कुर्यात्पादुकं वा सहाम्बुजम्
मूलाग्रे चित्रसंयुक्तमग्रान्ते मुकुलान्वितम्  १६

तन्मूले पालिकाहं स्याद्यथाशोभं तु कारयेत्
अन्तरे चित्रपट्टं स्यात्परितो द्व्यङ्गुलेन च  १७

पत्रादिरत्नपुष्पैश्च एतत्पट्टैश्च भूषितम्
मध्याग्रे पद्मपत्रादि ऊर्ध्वाधोऽग्रं तु कुड्मलम्  १८

मूलवच्चाग्रमग्रे तु चाग्राधः कुड्मलान्वितम्
सर्वालङ्कारसंयुक्तं पद्मकान्तमिति स्मृतम्  १९

मूले विनासनस्तम्भं चित्रकम्भमुदीरितम्
अङ्घ्रिकायाममानेन बोधिकादीनि विन्यसेत्  २०

तत्तत्पादप्रदेशे तु तद्विशालेन मानयेत्
विस्तारं च समुत्सेधं त्रिपादं वार्धमेव वा  २१

अथ पादांशकं चैव यन्मानोरम्यमानकम्
दण्डके बोधिका वापि पालिका वाथ चोन्नतम्  २२

द्विदण्डं वा त्रिदण्डं वा चतुः पञ्चकमेव वा
एतदायामविस्तारमुन्नतस्य समं भवेत्  २३

दण्डं सपाददण्डं वा बोधिकाविस्तृतं भवेत्
एतद्दण्डं समं वापि त्रिपादार्धकमेव वा  २४

एवं तु वीरकण्ठोच्चं विस्तारार्धं विशालकम्
फलकोच्चैकदण्डं वा त्रिपादं वा तथोन्नतम्  २५

द्विदराडं वा त्रिदराडं वा फलकायाममिष्यते
पादतारं चतुर्थांशं तत्समं निम्नकं भवेत् २६

दराडार्धं कुम्भतुङ्गं स्यादध्यर्धं वा द्विदराडकम्
कुम्भायामं तथोत्कराठमूर्ध्वे कराठसमं भवेत् २७

तत्समं ताटिकास्थं स्यादुन्नतं तद्विशेषतः
सपाद सार्धदराडं वा तस्यायामं तथोदितम् २८

तत्तुङ्गस्य समं चाधो पद्मतुङ्गं प्रकल्पयेत्
सपाददराडमायामं तत्तुङ्गार्धं तु हारिकम् २९

तद्दराडं तु तदायाममधोदेशे विशेषतः
दराडं तत्समविस्तारमुत्सेधं ताटिकोदयम् ३०

कलशाकारवत्कुर्यादधो वीरावसानकम्
ग्राधिसुरपुष्पाभं यथाशोभं तु कारयेत् ३१

तस्याधो सार्धदराडेन मूलबन्धं सहाम्बुजैः
तस्याधोऽपि विशेषेण मुक्तादामविभूषितम् ३२

एवं तु चोर्ध्वालङ्कारमधोऽलङ्कारमुच्यते
एतद्दराडेन मूले तु द्विदराडेनोन्नतायतम् ३३

एवं पद्मासनं कुर्याद्भूतसिंहादि रूपकम्
ग्रधः कुम्भं विनिक्षिप्य दराडं वाथ द्विदराडकम् ३४

सिंहस्योपरि पट्टं वा पद्मं गोपानमेव वा
पालिकाकृतिवद्धापि शेषं युक्त्या प्रयोजयेत् ३५

ग्रथवा तन्मूले वा पालिकादीनि विन्यसेत्

एवं तु पालिकास्तम्भं कुम्भस्तम्भमिहोच्यते ३६

पादमूलैकदण्डेन पालिकोन्नतमिष्यते
तद्विस्तारं द्विदण्डेन कुम्भतुङ्गं द्विदण्डकम् ३७

तद्विविस्तारं त्रिदण्डं स्यात्तदर्धं वास्य तुङ्गकम्
तत्पादस्याग्रके कुर्यान्नासिकापञ्जरान्वितम् ३८

शक्तिध्वजैकदण्डं स्यान्नासितुङ्गं द्विदण्डकम्
तत्समं विहृतं चैव चैकदण्डं गलोदयम् ३९

विशालं तद्द्वयं चाधो पञ्जरोदयमीरितम्
दिशालं द्विदण्डं स्यादेतष्टं दण्डमेव च ४०

यथाशोभं ततः कुर्यात्तस्याधो वीरकर्णकम्
पादतारसमोत्सेधं विस्तारं तत्समं भवेत् ४१

तस्याधो फलकादीनां पूर्ववत्कारयेत्क्रमात्
कुम्भस्तम्भमिति प्रोक्तं कोष्ठस्तम्भादि वक्ष्यते ४२

कोष्ठकं तद्द्विपार्श्वे तु ऋजु पादाकृतिस्तथा
पञ्जरस्योत्तरादींश्च कोष्ठवासाकृतिस्तथा ४३

तदेव कोष्ठपादे च तदूर्ध्वे पञ्जरादिकम्
मूलपादविशालेन पञ्जरादीनि कारयेत् ४४

पञ्जरं च द्विदण्डेन तदर्धं चोर्ध्वकैः गलम्
तदूर्ध्वे च द्विदण्डेन नासिकाशिखरान्वितम् ४५

तदर्धं स्तूपिकोत्तुङ्गे तन्माहानासिकाश्रये
अथवा मूलपादोच्चं पङ्क्तिरन्ध्राष्टभाजिते ४६

तत्तद्भागे गुणांशेन कोष्ठोर्ध्वे भूषणोदयम्
तत्तुङ्गं पञ्चधा कृत्वा चैकांशं पञ्जरोदयम्  ४७

तत्समं ग्रीवतुङ्गं स्यात्तद्द्वयं नासितुङ्गकम्
स्तूपितुङ्गं तदर्धं स्यान्नासिकाग्रं च तत्समम्  ४८

द्विदण्डाद्दण्डवृध्या च दशदण्डावसानकम्
पञ्जरादिविशालं यच्छेषं चोर्ध्वेऽङ्घ्रिकम्  ४९

एकोनविंशदंशं स्यात्पञ्जरोच्चं विभाजिते
द्विभागं चोत्तरोत्तुङ्गमेकाशं वाजनोदयम्  ५०

तदूर्ध्वपद्मं द्विभागं स्याद्वाजनं चैकभागिकम्
अष्टांशेन कपोतोच्चं तदूर्ध्वे आलिङ्गमंशकम्  ५१

तत्सममन्तरितं चोर्ध्वे द्व्यंशं तत्प्रतिकोन्नतम्
तदूर्ध्वे वाजनं चांशं शेषं युक्त्या प्रयोजयेत्  ५२

ग्रीवतुङ्गं त्रिधा भज्यमेकांशं वेदिकोन्नतम्
ग्रीवतुङ्गं सपादांशं शेषांशं ग्रीवभूषणम्  ५३

वेदिकोर्ध्वे तु सप्तांशं सार्धबन्धं गलोदयम्
तदूर्ध्वे कम्पमेकांशं सार्धांशं पद्मतुङ्गकम्  ५४

तदूर्ध्वे वाजनं चांशमायामं वा त्रिभागिकम्
एकांशं मध्यभद्रं तु मध्ये युक्त्या प्रकोष्ठकम्  ५५

ग्रीवभूषणतुङ्गे च विभजेत्तु षडंशकम्
द्विभागं चोत्तरोत्सेधं तदर्धं वाजनं भवेत्  ५६

द्विभागं गलभित्सेधं वाजनं चैकभागिकम्

मध्यकोष्ठोत्तरं तत्स्यात्क्षुद्रपादौ सभूषितम्  ५७

पञ्जरे प्रतिकायामे चाष्टभाग विभाजिते
सप्तांशे वेदिकायामे पद्मवाजनकान्तकम्  ५८

वेदितारं चतुर्भागं त्रिभागं ग्रीवविस्तृतम्
वेदितारसमं नासी शालायामं प्रकल्प्लयेत्  ५९

तदायामे त्रिभागैकं मध्यनासी विशालकम्
विशालार्धं त्रिपादं वा मध्यनास्योदयं भवेत्  ६०

पार्श्वयोर्बहुनास्योच्च शिखरस्य समोन्नतम्
तच्छिखं चोत्तरान्तं स्यात्कवरीवक्त्रसंयुतम्  ६१

नासिकापत्रसंयुक्तं मध्यक्षुद्रं च निम्नकम्
शिरस्योर्ध्वे पट्टिकानां च मध्यनासी शिखान्तकम्  ६२

शिरोलम्बोत्तरान्तं वा वलभावतिमेव वा
शिखरस्योर्ध्वे पट्टोच्चमुत्तरोच्चं समं भवेत्  ६३

तदूर्ध्वे वाजनं पद्मं निम्नं कुम्भं सदण्डकम्
पद्मवाजन पद्मं च तदग्रे कुड्मलान्वितम्  ६४

एतत्स्तूपित्रयं प्रोक्तं भागं युक्त्या प्रयोजयेत्
तच्छिरे समलङ्कृत्य पत्रवल्ल्यादिशोभितम्  ६५

एतत्पञ्जरशालां च पद्ममेकं शिखात्रयम्
सर्वालङ्कारसंयुक्तं कुर्याद्वि तक्षकेण तु  ६६

अथवा तोरणं कृत्वा स्तम्भस्योपरि वाजनम्
मूलेपादविशाले तु चैकदण्डं तथोन्नतम्  ६७

पूर्ववद्भागमानेन चोत्तरादिक्रियान्वितम्
तदूर्ध्वे तोरणस्यान्ते मकरापत्रसंयुतम् ६८

तदूर्ध्वे तोरणान्तं स्यादेकदण्डं तु तच्छिरः
मकरीवक्त्रसंयुक्तं सर्वालङ्कारशोभितम् ६९

कोष्ठं च पार्श्वयोश्चैव क्षुद्रपादसमन्वितम्
मूलपादविशालं स्यात्त्रिपादक्षुद्राङ्घ्रितारकम् ७०

तस्यपादविशालेन पादभूषण मानयेत्
फलकाद्यन्तकाद्यं च वीरकर्णैकदण्डकम् ७१

बोधिकादि विनायुक्तं फलकादिक्रियान्यसेत्
फलकायाम द्विदण्डं चाध्यर्धदण्डकं तत्कुम्भविस्तृतम् ७२

ताटिवक्त्रं सपादं स्यात्तुङ्गं प्रागुक्तवन्नयेत्
सर्वालङ्कारसंयुक्तं युक्त्या तत्रैव योजयेत् ७३

बोधिकान्तं ललाटे च स्यादुत्सेधं चोर्ध्वे वाजनम्
तद्वाजनं तु पादान्तं पार्श्वयोस्तन्मुखावृतम् ७४

अधोभागे त्रिभागैकं मध्यभद्राकृतिं न्यसेत्
तद्विपार्श्वे तु चैकैकं कर्तृछेदममिष्यते ७५

पार्श्वयोर्वाजनस्याधो वक्त्रं वज्राकृति तथा
ऊर्ध्ववाजन तद्युक्त्या कुर्यात्क्षुद्रादि वाजनम् ७६

पार्श्वयोः स्तम्भस्योर्ध्वे मध्यभद्रादिभूषितम्
द्वाभ्यां तत्कर्णदण्डान्तं मध्ये पार्श्वे च निम्नकम् ७७

बोधिके च तरङ्गं स्यात्सर्वालङ्कारसंयुतम्

तदेव तुङ्गमाने तु द्वादशांशे विभाजिते ७८

अधोभागे त्रिभागेन तरङ्गाकृतिं विन्यसेत्
तदूर्ध्वे बोधिकोत्सेधं षडंशेन विशेषतः ७९

प्रकुल्लानन सर्वभं पुष्पसंपवदाननम्
एतदूर्ध्वे शिरस्योर्ध्वे चांशेन हरिता भवेत् ८०

एकदण्ड त्रिपादं वा वाजनान्तं शिर उन्नतम्
तस्मात्तदायते दीर्घे निर्गमस्यमधोमुखम् ८१

कन्दलीसूनदण्डाभमग्निमूर्ध्वे निरोपमम्
अग्रे समगलं चैव तरङ्गं तत्समाधिकम् ८२

ललाटे चित्र भागैकमधो मूर्ध्नि विशालकम्
तस्योर्ध्वे कर्णभागेन कर्णकम्पाब्जवाजनम् ८३

पत्रवल्यादिरत्नैश्च पत्रचित्राभिभूषितम्
सर्वालङ्कारसंयुक्तं पुष्पबोधकमीरितम् ८४

उपपीठवदाकारं दण्डकादीनि विन्यसेत्
क्षुद्रकम्पं च पद्मैश्च पुष्परत्नैश्च भूषितम् ८५

तरङ्गा दण्डकां चैव बोधिकादीनि पालिका
एकवक्त्रं द्विवक्त्रं वा त्रिवक्त्रं चतुराननम् ८६

पञ्चषट् सप्ताष्टं वा यथा शक्तिवशान्न्यसेत्
तस्याधो वीरकर्णे तु फलका बोधिकान्तरम् ८७

आधारार्थं तु शोभार्थं सिंहचित्रादिमण्डितम्
वीरकर्णस्योदयं ज्ञात्वा नवभाग विभाजिते ८८

एकांशं पादुकं कुर्तात्पञ्चभागं तु संग्रहम्
तदूर्ध्वे करिकांसं स्यादब्जमंशेन कारयेत् ८९

तदूर्ध्वे वाजनं चांशं संग्रहं च द्विवक्त्रयुक्
पद्माग्राकृतिरग्रादीन् रेखा मूलवती न्यसेत् ९०

रत्नवल्यादि संभूष्य शेषं युक्त्या प्रयोजयेत्
संग्रहं रूपमित्युक्तं वीरकर्णे पुरान्वितम् ९१

पदङ्गाद्वदनं कृत्वा पश्चादुद्धृतहस्तवत्
तदेव सिंहादिरूपैर्वा नाटकाद्यैरलङ्कृतम् ९२

एतत्तु मुष्टिबन्धं स्यात्फलकोच्चं त्रिभागिकम्
एकांशोत्सन्धितुङ्गं स्यात्तदधो चोपणांशकम् ९३

तदधोऽब्जांशं पद्मं च द्व्यंशेनाब्जमथापि वा
कुम्भोच्चं चाष्टभागेन चांशेन पद्मकम्पकम् ९४

कुम्भाधो चोर्ध्वदेशे तु वटपत्रादिशोभितम्
निम्नं च ताटिकादीनि युक्त्या प्रागुक्तवन्नयेत् ९५

कुम्भस्तम्भप्रतिस्तम्भे कोष्ठकादीनि काङ्घ्रिके
कुम्भस्तम्भानि सर्वेषामेवमुक्तं पुरातनैः ९६

भुवोपरिष्टान्मुनिभागतुङ्गके
त्रिभागमञ्चं गलमंश चोर्ध्वके
फलं विभागं शाला शिरा कुम्भमंशकम्
क्रमात्प्रकुर्वन्त्विति पञ्जरादिकम् ९७

पञ्चभाग पुरतोक्ततुङ्गके
द्व्यंशकं त्रिपदं सार्धकं त्रिपात्

पञ्चांशं गलनासिकानन
कुम्भयुक्तचरणाग्रभूषणम्  ९८

कुम्भालङ्कारम्
अथवक्ष्ये विशेषेण कुम्भालङ्कारमुच्यते
तन्मूलपालिकोत्सेधे विभजेत्तु षडंशकम्  ९९

एकांशं पादुकं चैव पद्मतुङ्गं तु तत्समम्
कम्पमर्धं तदूर्ध्वे तु कन्धरं च द्विभागिकम्  १००

कम्पमर्धेन तस्योर्ध्वे पद्ममंशेन योजयेत्
अथवा चोर्ध्वके कम्पं तस्याधो पद्ममंशकम्  १०१

कण्ठमेकांशकं कुर्याच्छेषं प्रागुक्तवद्भवेत्
तदेवोर्ध्वेऽर्धं पद्मं च तस्योर्ध्वैकं कपोतकम्  १०२

अर्धेन वाजनं चोर्ध्वे यथाशोभं तु कारयेत्
तदूर्ध्वे कुम्भमूले तु पाल्यां शेनाश पद्मकम्  १०३

तदूर्ध्वे कम्पमर्धेन शेषं युक्त्या यथाकृति
तदूर्ध्वे वक्त्रतुङ्गं स्यान्नवभाग विभाजिते  १०४

कुम्भोर्धांशेन जन्म स्याद्वाजनं चार्धभागिकम्
पद्ममंशेन संयुक्तं कम्पमर्धेन कारयेत्  १०५

सार्धद्व्यंशं गलोत्तुङ्गं कम्पमर्धेन कारयेत्
तत्समं पद्मतुङ्गं स्यात्सार्धांशं तु कपोतकम्  १०६

एकांशं प्रतिसंयुक्तं सर्वालङ्कारसंयुतम्
कर्णतुङ्गद्विभागं पद्ममध्यर्धमेव वा  १०७

अथवा वक्त्रतुङ्गं स्यादेकदराडेन कारयेत्
पालिकस्योक्तवत्कुर्याद्यथाशोभं तु कारयेत् १०८

अस्योर्ध्वेऽर्धेन दराडेन कुड्मलाकृति न्यसेत्
तदा स्यान्निर्गमं भावं कुम्भान्तं लंभयेत् पुनः १०९

कुम्भमध्ये रत्नबन्धं वस्त्रनिष्पं च विन्यसेत्
सर्वालङ्कारसंयुक्तं पादमूले तु विन्यसेत् ११०

तदास्यं निर्गमं भावं कुम्भान्तं नासिकं भवेत्
अथवा नासिकां त्यक्त्वा पञ्जरस्योपरि न्यसेत् १११

पादस्योर्ध्वे पाल्यन्तं पद्मवल्यादिभूषितम्
मूलपादविशालं वा तत्त्रिपादविशालकम् ११२

एतत् कुम्भाङ्घ्रिकं प्रोक्तं चान्तरालं च योजयेत्
कुर्याद्बहिःप्रदेशे तु मध्ये वा चान्तरालके ११३

भित्तिमध्ये च कूटे च शिरोदेशे विशेषतः
विशालपञ्जराद्यैश्च योजयेच्छिल्पिवित्तमः ११४

स्तम्भलक्षणम्

तत्स्तम्भलक्षणं वक्ष्ये तुङ्गादींश्चोक्तवन्नयेत्
मूलस्तम्भविशालेन त्रिपादम् वार्धमेव वा ११५

संयोगस्तम्भविस्तारं यन्मानोरम्य मानयेत्
बोधिका फलकान्तं च मूलदराडेन मानयेत् ११६

पालिकाद्यङ्गं सर्वेषामुपदराडेन मानयेत्
बोधिकादीनि सर्वाङ्गं पूर्ववत्परिकल्पयेत् ११७

उपपादानि सर्वेषां पूर्वपादे तु योजयेत्
उपपादां मूलपादान्तमुपदण्डसमन्तकम् ११८

तद्दण्डस्य त्रिपादं वा दण्डार्धं वाथवांशकम्
एकोपपादसंयुक्तं द्वित्र्युपपादेन सयुतम् ११९

एवं क्रममिति प्रोक्तं मूले पद्मासनान्वितम्
वेदोपपादसंयुक्तं ब्रह्मकान्तमीरितम् १२०

पञ्चोपपादसंयुक्तं शिवकान्तमितीरितम्
षडोपपादसंयुक्तं स्कन्दकान्तमिति स्मृतम् १२१

अष्टोपपादसंयुक्तं विष्णुकान्तमुदीरितम्
सर्वेषां पादमूले तु पालिकां चोपपीठवत् १२२

कुर्यात्सिंहस्य रूपं वा पादं पत्रादिभूषितम्
शिले दारुजे वापि कारयेदुक्तवद्बुधः १२३

दारुसंग्रहणम्

दारुसंग्रहणं वक्ष्ये पश्चाद्दारोश्च लक्षणम्
दक्षिणायनकाले तु चोत्तरायणमेव वा १२४

माधादौ च चतुर्मासे कुर्याद्दारोश्च संग्रहम्
कृष्णपक्षे शुभदिने सुमुहूर्ते सुलग्नके १२५

दारुसंग्रहणं कुर्यात्स्थपतिः स्थापकैः सह
कुठारखट्वखड्गादीन् रक्षासूत्रेण बन्धनम् १२६

पीत्वा शुद्धं पयो रात्रावुपोष्याधिवसेद्बुधः
प्रभाते तु समुत्थाय कर्ता स्वानुचरैः सह १२७

वनप्रयाणमार्गे तु पश्येत्तु शकुनानि वै
संमुखे तु सुराभाराडं मांसं वृषभं तु वा १२८

पूर्णकुम्भं गजं वेश्या द्विजानां सङ्घमेव च
दर्पणं पुष्पमालां च राजानं चक्रमेव च १२९

आन्दोलिका बलिं पूर्णघटं च शिबिरं तथा
वस्त्रधृग्रजकं चैव कामधेनुं सुमङ्गलाम् १३०

धनधान्यसमृद्धिं च दृष्ट्वा सर्वमेतच्छुभावहम्
मुक्तकेशं नासिहीनं तैलभाराडं तथैव च १३१

एक द्विजं यतिं चैव कपालारक्तवाससान्
क्षयरोगं चाङ्गहीनं नव्यङ्गगदिगं तथा १३२

मार्गे संमुखं दृष्ट्वा त्वमङ्गलमिति स्मृतम्
भारद्वाजं दिवाभीतं नर्तक व्यानकं तथा १३३

वरदासीस्मरं वामे शुभदं दक्षिणेऽशुभम्
वायसं च मयूरं च दीर्घपुच्छं तथैव च १३४

कृष्णपक्षद्वयं चैव श्वेताक्षं कृकलासकम्
रक्तबोधं च फणिनं सारङ्गं व्याघ्रमेव च १३५

जम्बुकं च तथा वामं दक्षिणे गमनं शुभम्
दक्षिणं वामतो गच्छेदशुभं भवति ध्रुवम् १३६

अन्धकं शकुनं चैवारराये श्वेतलोचनम्
हरिणं च शशं चैव मार्गकीटं तथैव च १३७

बहुवर्णं च गृध्रं च रक्तश्वानं च सूकरम्

दक्षिणाद्वामगमनं मङ्गलं भवति ध्रुवम्  १३८

वामतो दक्षिणे गच्छेदशुभं प्राप्यते ध्रुवम्
परिहारं च वक्ष्यामि ग्रामसीम्नि शुभं तु चेत्  १३९

स्थित्वा भुक्त्वा द्विजान् पश्चाद्दृष्ट्वा गच्छेत्ततः सुधीः
ग्रामसीम्नस्तु परितो दुर्निमित्ते पशुं क्षिपेत्  १४०

विपिनस्य समीपे तु चोक्तान्येकानि सर्वशः
दक्षिणं वामतो गच्छेद्वामतो दक्षिणे तथा  १४१

मध्ये तदिष्टकार्याणि मङ्गलं भवति ध्रुवम्
वनं संप्राप्य सुच्छायं सुशीतलतरुं तथा  १४२

दृष्ट्वा निर्ज्येर्यते च्छायां शृणुयाच्छाकुनस्वरान्
व्यालं भारद्वाजं च श्वेताक्षिं च बृहत्खगम्  १४३

सुस्वरं तु शुभं प्रोक्तं दुःस्वरेऽथ पशु क्षिपेत्
काकस्वरं दक्षिणे श्रेष्ठं प्राचि चैव मध्यमम्  १४४

प्राक् स्वरं चाधमं प्रोक्तं तस्य तूत्तर स्वरम्
यदि श्रुतं चेत्तत्काष्ठे त्रीण्यजानि बलिं क्षिपेत्  १४५

होमार्थं तत्र कुर्यात्प्रयत्नं चोक्तवद्बुधः
असुरं राक्षसं चैव भूतपैशाचमेव च  १४६

चरगं पूतन विदारौ पापराक्षसमेव च
महांश्चाष्टगणाख्यानिन्द्रानीशानकान्तकम्  १४७

रक्तेन मिलितं चान्तं स्तुतिं चैव सदा जपेत्
मुख्यं चापि मृगं चैव चादितिमुदितिं तथा  १४८

वितथं चान्तरिक्षं च भृशं पूषणमेव च
एतेभ्यो राक्षसेभ्यश्च मांसमन्नं बलिं क्षिपेत् १४९

फलानि क्षीरमन्नं च स्थपतिस्तु वनस्पतेः
बलिं दद्यात्स्वनाम्नैश्चान्येषां च स्वनामभिः १५०

शुद्धिं कृत्वा ततः पश्चात्पुण्याहं वाचयेत्ततः
स्वस्तिवाचनकं कुर्यात्पश्चाद्ब्राह्मणभोजनम् १५१

दारुच्छेदनकाले तु बहिर्गच्छेद्वनस्पतेः
मन्त्रः
राक्षसैः सह भूतैश्च कर्तारं रक्षते नमः १५२

पश्चात्तु स्थापकेनैव ब्रह्मार्थं निक्षिपेद्बलिम्
कुर्याद्धोमं स्थापकस्तु पूजयित्वा वनदेवताः १५३

प्रोक्षयेत्परशुं तत्र प्राङ्मुखश्चोत्तरेऽपि वा
परशुं तक्षकं श्रेष्ठं स्थपतिः स्थापककरात् १५४

स्वीकृत्य दारु विच्छिद्य चान्यैरनुचरैः सह
स्थूलमूलं कृशाग्रं च निशृङ्गं स्निग्धरूपकम् १५५

जनशाखासंकीर्णं छत्रवन्निश्चथं यदि
सुशीतलं तु सुच्छायं छायावृक्षमिति स्मृतम् १५६

वृक्षस्य मूलमध्ये तु वृक्षाग्रे समनाहकम्
निःशाखः स पुमान्प्रोक्तं स्निग्धरूपं च शीतलम् १५७

अग्रस्थूलं कृशे मूले नानाविटपशाखयुक्
दुर्भरं भिन्नसुषिरं चोष्णं विवृतशाखकम् १५८

दृष्टान्तं मनुजायोग्यं छायायामं नपुंसकम्
स्त्रोपुमान्वृक्षकश्छेद्यः सुमुहूर्ते सुलग्नके १५९

वृक्षच्छेदनकाले तु उत्पद्य न पतेद्यदि
पतन्ति चोत्तरे वा प्राग्दिग्भागे न चामङ्गलम् १६०

याम्ये वा पश्चिमे वापि देशे पतन्ति मङ्गलम्
ईशं नैरृतिकोणे वा सर्वसंपत्करं भवेत् १६१

अनलानिलकोणे वा चान्यथा चान्तरालके
उद्गतमिति तत्र स्यात्सकलानीत्यमङ्गलम् १६२

छिन्नवृक्षस्य पतने वृषभं हयकुञ्जरम्
निनदं भवति श्रेष्ठं बाह्यत्वाने त्वमङ्गलम् १६३

समीपे स्थितवृक्षाश्च हत्वा यदि पतेत्तरुः
अशुमं तत्समुद्दिष्टो पतन्ति मनुजोपरि १६४

पूर्वे वा चोत्तरे वापि वृक्षास्तत्र पतन्ति चेत्
तत्रादे तत्क्रमं नास्ति चान्ये दिक्षु त्वमङ्गलम् १६५

सर्वदोषं समुद्दिश्य शान्तिं कुर्याद्विचक्षणः
पशुप्रहारहोमं च बाह्यणान्भोजयेत्ततः १६६

एवं शान्तौ कृतायां तु दोषं नश्यति नान्यथा
नराणां मरणं स्याच्चेत्तत्त शान्तिर्न विद्यते १६७

तस्मात्परिहरेद्विद्वान् कुर्याद्दारु संग्रहम्
शयनस्थितद्दारूणि स्थूपिकीलादिकं सर्वशः १६८

भूमौ पदं नितच्चक्रमिति विरचितम्

स्थितः शयनदारूणि रथमारोपयेत्तदा १६९

नववस्त्रेण संवेष्ट्य सर्वमङ्गलघोषणैः
अनड्वाहौ वाहयित्वा महिषं कुञ्जरं तु वा १७०

कर्षयेत्तु नरैर्वापि सुमुहूर्ते सुलग्नके
शिल्पशालां प्रवेश्याथ रथात्तदवतारयेत् १७१

दारुसंग्रहणं प्रोक्तं दारुलक्षणमुच्यते
धूमकं क्षीरणं चैव खादिरं खदिरं तथा १७२

शाकं च निम्बवृक्षं च शमी शाखं तथा मृगम्
एतेषु धारणं वृक्षं शतवृक्षमिहोच्यते १७३

कतरं कृतमालं च व्याघ्रकाश्छादना मृगम्
द्राक्षा शाखा च रुद्राणि जम्बूकं शयितेष्वपि १७४

नालिकेरं च तालं च वेणु मौनी च किंशुकम्
पूगं च पुष्कलं चैव चामलकं च किंशिरि १७५

हरितं च सप्तपर्णं चोर्ध्ववृक्षमुदीरितम्
तेषां देवालयं कुर्यान्नृणां सद्मैः विशेषतः १७६

व्याघ्र चन्दनरक्त च चन्दनं तिन्त्रिणी तथा
अन्यानि दारुसर्वाणि द्विजातीणां गृहे न्यसेत् १७७

तत्तज्जातिद्रुमाभावे एकजात्या च सर्वशः
वृक्षस्य मूलं शतश्चाग्रे चाग्रं तथैव च १७८

भूमिस्पर्शमुखं ज्ञात्वा तदूर्ध्वं परभागतः
स्तम्भस्थापनम्

देवालयादिसर्वेषां स्तम्भस्थापनमुच्यते १७९

यथाभागावसाने तु स्थापयेदखिलाङ्घ्रिकम्
स्तम्भान्ते स्तम्भयुक्तं चेद्वास्तुवस्तु विनाशनम् १८०

यद्वास्त्वन्तर्बहिः सूत्रं स्थापयेदृजुसूत्रकम्
स्तम्भमध्यात्तु बाह्यान्तं यथापादं तथाश्रयम् १८१

यत्रदेश विशालार्धं तत्र दोषो न विद्यते
पुष्य माघं च चैत्रं च वैशाखं चोत्तरायणे १८२

आषाढं श्रावणाश्वी च कार्तिकं दक्षिणायने
सुमुहूर्ते सुलग्ने च शुक्लपक्षे शुभदिने १८३

स्तम्भमावाहनं कुर्याच्छेषमासे च भावके
अङ्कुरार्पणकर्मादौ स्थापनान्तं यथाक्रमम् १८४

जलाधिवासनं स्थानं कुर्यात्त्वपि सर्वशः
ईशाने नैर्ऋतिकोणे तु मध्ये चाङ्घ्रिकमेव च १८५

पादस्थानस्य यदृशे वस्तुनश्च बलं यथा
तदूर्ध्वं धारपट्टं स्याद्दण्डाध्यर्ध द्विदण्डकम् १८६

घनं च विस्तृतं चैव चायामं तद्यथेष्टकम्
शिलास्तम्भे शिलाधारं दारुस्तम्भे द्रुमस्तथा १८७

अथवा चाश्मनं सर्वमाधारं चतुरश्रकम्
एकहस्तं द्विहस्तं वा त्रिहस्तं विपुलं भवेत् १८८

आधारस्य तु मध्ये स्याद्रत्नस्थापनतोऽवटम्
प्रासादाभिमुखे चैव मण्डपं परिकल्पयेत् १८९

मराडपान्तं प्रदेशे तु स्तम्भं संग्राह्य वेशयेत्
स्थरिडले चरिडतं कृत्वा बीजं ब्रीह्यादि विन्यसेत् १९०

तत्र स्तम्भं च विन्यस्य पूर्वे वाप्युदगग्रकम्
नववस्त्रेण संवेष्टय कुम्भं कुर्यादभिभूषणं १९१

कर्पटं तु शिरीषादिधान्यं कार्पासबीजकम्
सूत्रेण वध्वा पश्चात्तु स्तम्भकर्णे च बन्धनम् १९२

तदग्रे स्यरिडलं कृत्वा शुद्धशालैश्च लाजकैः
दर्भैरास्तीर्य तत्रैव प्रागुदक् स्यात्तदग्रकम् १९३

पीठं वा चोपपीठं वा चोक्तवत्पद कल्पयेत्
जलसंपूर्णकुम्भादि तत्र चावाहयेद्बुधः १९४

सूत्रपल्लवकूर्च्याद्यान् नववस्त्रेण वेष्टयेत्
तदग्रे स्थरिडलं कृत्वा रत्नलोहादि चावहेत् १९५

पादप्रक्षालनं कुर्यादाचम्य स्थपतिर्बुधः
भस्मं वा चन्दनं वापि धारयेत्तु त्रिपुराड्रकम् १९६

सकलीकरणं कृत्वा पुरायाहं वाचयेत्ततः
ब्रह्मादिदेवताः सर्वाः पादस्थाने समर्चयेत् १९७

हृल्लेखामध्यकुम्भान्तं पूजयेत्तु विशेषतः
देव्यावरणं सर्वेषां परितः कलशोदके १९८

ग्रावाह्य पश्चादभ्यर्च्य गन्धपुष्पाक्षतादिभिः
रत्नाधिवासनं कुर्यात्तत्तद्देवत नामभिः १९९

गन्धपुष्पादिधूपैश्च नैवेद्यान्तं समर्चयेत्

तदग्रे पूर्वदिग्देशे होमं कुर्याद्विचक्षणः २००

पश्चात्तु शिल्पी संप्राप्य संस्पृशेत्स्तम्भमूलकम्
गैरिकार्पितसूत्रैश्च चतुःसूत्राणि विन्यसेत् २०१

स्वर्णसूच सदर्भाश् च घृतक्षीरेण योजयेत्
धूपदीपं ददेत् पश्चाद्गन्धपुष्पैः समर्चयेत् २०२

हिमाद्रिरूपं तत्स्तम्भं ध्यात्वा हस्तेन संस्पृशेत्
ततोऽधिवासनं कुर्यात्स्तम्भं तद्देशिकोत्तमः २०३

पश्चात्तक्षकमुख्यैस्तु स्तम्भमुद्धृत्य हस्ततः
वास्तुप्रदक्षिणं कुर्यात्स्वकीयानुचरैः सह २०४

सर्वमङ्गलघोषैश्च स्तम्भस्थापनदेशकम्
संप्राप्य हस्ततः स्तम्भमवरोह्य च पश्चिमे २०५

तत्स्तम्भं पूर्ववदनं धारं प्रोक्ष्य संस्थितम्
अधिवासितरत्नानि व्याहृत्यावटतः क्षिपेत् २०६

मध्ये तु हेमं निक्षिप्य चैन्द्रे ताम्रं विनिक्षिपेत्
याम्ये तु चायसं स्थाप्य कांस्यं वा वारुणे न्यसेत् २०७

सौम्ये तु रजतं स्थाप्य पुष्परागं तु मध्यमे
पुष्परागमिन्द्रकोष्ठे गोमेधं चाग्निकोणके २०८

महानीलं च याम्ये तु मरतकं नैर्ऋते न्यसेत्
स्फटिकं वारुणे कोष्ठे तु प्रवालं वायुकोष्ठके २०९

सौम्ये तु मौक्तिकं न्यस्य चेन्द्रनीलं तथेशके
तत्स्तम्भं तत्र निक्षिप्य स्थपतिः कर्तृभिः सह २१०

सर्वमङ्गलघोषैश्च ब्राह्मणैः स्वस्तिवाचनम्
अधिवासितकुम्भानि सर्वाणयादाय शिल्पिकः २११

वास्तुप्रदक्षिणं कृत्वा स्तम्भं मन्त्राभिषेचयेत्
धूपदीपं दधेत् पश्चाद्वस्त्रमाल्यैर्विभूषितम् २१२

गन्धपुष्पैः समभ्यर्च्य नैवेद्यं च निवेदयेत्
मन्त्रः
स्तम्भ महामेरो वास्तु दद्याथश्चन्द्रदिवारम् २१३

अन्यैः स्तम्भैश्च मूर्ध्ना ते धृत्वा रक्षतु चोन्नतम्
एतन्मन्त्रं पठित्वा तु कुर्यादनुनयं बुधः २१४

प्रासादे मण्डपे वापि प्राकारे गोपुरे तथा
द्विजातीनां च वर्णानां सद्ममासपकादिनाम् २१५

स्तम्भप्रतिष्ठां सर्वत्र चैवं कुर्याद्विचक्षणः
पुरातनैश्च ऋषिभिः ब्रह्माद्यैश्च सुरैरपि २१६

स्तम्भप्रतिष्ठा चोक्ता स्याद्विनाचेदशुभं भवेत्
तस्मात्स्तम्भप्रतिष्ठां तु कारयेच्छिल्पिवित्तमः २१७

स्थपतिः स्थापकं विप्र स्थापनं कर्मणे वृतान्
पूजयेद्विधिवदुक्तमार्गतः स्वस्वात्मशिबिरानन्तः प्रतिष्ठा चोक्ता स्यात् २१८
इति मानसारे वास्तुशास्त्रे स्तम्भलक्षणं नाम पञ्चदशोऽध्यायः

## प्रस्तरविधानम्

प्रस्तरस्य विधिं वक्ष्ये शास्त्रे संक्षिप्यतेऽधुना
अधिष्ठानत्रिपादं वा समं वा पादमधिकम् १

अर्धत्रिपादमाधिक्यं तत्समाधिकमेव वा

षड्विधं कुट्टिमोत्तुङ्गं प्रस्तरोदयमीरितम्  २

अथवा हस्तमानेन देवजातिवशोच्यते
सप्तहस्तं समारभ्य सार्धवेदकरान्तकम्  ३

अर्धारत्निकहान्येन षड्विधं प्रस्तरोदयम्
देवानां भूसुराणां च भूपतीनां युवराजयोः  ४

वैश्यानां शूद्रजातीनां सद्म जातिवशात्क्रमात्
अथवा पादतुङ्गार्धं तत्समं वा विशेषतः  ५

चतुर्भागैकहीनं वा तत्पादाधिकमेव च
अर्धाधिकं त्रिपादं वा तत्समाधिकमेव वा  ६

एतत्तु षड्विधं प्रोक्तं युक्त्या तत्प्रस्तरोदयम्
अथवा पादोदये चाष्टभागं कुर्याद्विचक्षणः  ७

सप्तषट्पञ्चभागाब्धित्रिभागद्व्यंशमेव च
एवं तु षड्विधं प्रोक्तं प्रस्तरोच्चं मुनीश्वरैः  ८

उत्तरादिप्रदेशान्तं सर्वेषां प्रस्तरोदयम्
कपोतं प्रस्तरं चैव मञ्चं प्रच्छादनं तथा  ९

गोपानं च वितानं च वलभी मत्तवारणम्
विधानं च लुपं चैवमेते पर्यायवाचकाः  १०

प्रस्तरोच्चादि सर्वेषामङ्गैः सर्वमिहोच्यते
उत्सेधं चैकत्रिशं तु भागं कुर्याद्विचक्षणः  ११

चोत्तरं सार्धवह्न्यंशमंशं तद्वाजनं भवेत्
वलभोत्सेधं बन्ध्वंशं सार्धांशं वा जनं भवेत्  १२

उत्तरोच्चं त्रयांशं वा वाजनं चैकभागिकम्
तत्समं क्षुद्रपद्मं स्यात्त्रयं चोर्ध्वे महाम्बुजं १३

तदूर्ध्वे वाजनं चैकं धातुभागं कपोतकम्
आलिङ्गमंशकं चैवमेकार्धमन्तरितं तथा १४

द्व्यंशकं प्रस्तरं चैव सार्धांशं वाजनं भवेत्
उत्तरोर्ध चतुष्पञ्चाषट्सप्ताष्टकं भवेत् १५

तत्तदेकांशमानेन हर्म्यपादं तु बाह्यके
यन्मानोरम्यमानेन चोत्तरं निर्गमं भवेत् १६

उत्तराद्वाजनं चैव तत्समं निर्गमं भवेत्
वलभी समं वापि त्रिपादं निर्गमं भवेत् १७

तदूर्ध्वे वाजनं युक्त्या तच्चतुर्थांश निर्गमम्
कपोतं तत्समं वापि वाजनं तु बहिर्भवेत् १८

अथ त्रिपादमर्धं वा पादं वा निर्गमं न्यसेत्
आलिङ्गपादबाह्यस्य निम्नमेवं तु कारयेत् १९

तस्मादन्तरितं चोर्ध्वे तत्समं निर्गमं तु वा
त्रिपादं चार्धमेवं वा प्रति तत्समं निर्गमम् २०

ऊर्ध्वे वाजनमुच्च तु निर्गमं पादबाह्यतः
प्रतिं च प्रस्तरं चैव प्रतिवाजनमेव च २१

अन्वन्तं चावसानं च विधानं च विधानकम्
एतत्सर्वमिति प्रोक्तं पर्यायाख्यानि पण्डितैः २२

प्रतिरूपं दलाकारं वाजनं च द्व्यांशकम्

वाजनं क्षेपणं वेत्रं पट्टमुत्तर पट्टिका २३

कम्पं दृक्कं च मन्दादि चान्तरितं पर्यायमेव च
तुलादण्डं जयन्ती फलका पर्यायवाचकम् २४

कपोतं वक्त्रहस्तं च लुपा गोपानकं तथा
चन्द्रमेतत्तु सर्वाणि प्रोक्तं पर्यायवाचकाः २५

संग्रहं मुष्टिबन्धं च मद्दलोद्धृतहस्तकम्
वलभी धारणं चैवमेते पर्यायवाचकाः २६

तदूर्ध्वे तत्क्रियाः सर्वे नाटकान्तमृणालिका
वल्लिका पत्रवल्ली च चित्राङ्गं कुलिकाङ्घ्रिकम् २७

एतत्पर्यायवाक्यानि पुरातनमुनीश्वरैः
उत्तरं वाजनमाधारमाधेयं शयनं तथा २८

उद्धृतं च मूर्धकं चैव महातौलि स्ववंशकम्
प्रच्छादनस्यमा धारमेतत्पर्यायमीरितम् २९

पूर्वभागिकमानेन चोत्तरोच्चं गुणांशकम्
तदूर्ध्वे कम्पमेकेन वलभीतत्समोदयम् ३०

नन्दकरमब्जवत्कुर्यात्तदूर्ध्वेऽर्धेन वाजनम्
द्व्यंशार्धं मुष्टिबन्धं चांशेनोर्ध्वेऽर्धेन वाजनम् ३१

द्व्यंशं मृणालकोत्तुङ्गमेकांशेनोर्ध्वकन्धरम्
तदूर्ध्वे क्षेपणं कुर्यात्पद्मं तु तत्समं भवेत् ३२

तदूर्ध्वे वाजनं चांशं पत्रवल्यादिभूषितम्
कदलीस्तम्भसंजाता पुष्पवती मृणालिका ३३

तदूर्ध्वे द्व्यंशमाधारं पट्टं चार्धेन वाजनम्
अध्यर्धं मुष्टिबन्धं च वाजनं चैकभागिकम् ३४

तदूर्ध्वे च द्विभागेन महावाजनमीरितम्
तदर्धेनाब्जं तस्याधो शोभयेत्समलङ्कृतम् ३५

तदेव तुङ्गार्धमानेन चैतत्क्रियाङ्गमेव च
तदूर्ध्वे पादमूलोच्च तत्तद्भागेन विन्यसेत् ३६

तदूर्ध्वे द्व्यंशभागेन चालिङ्गोदयमेव च
तदूर्ध्वे वाजनं चांशं त्रियंशान्तरितं तथा ३७

एकांशं चोर्ध्वकम्पं स्यात्प्रति द्व्यंशेन कारयेत्
तदूर्ध्वे वाजनं चांशं षट्षट्भागोदयं भवेत् ३८

अथवा प्रस्तरोत्सेधं त्रिंशद्भाग विभाजिते
उत्तरोच्च त्रिभागं स्यात्कम्पमेकेन कारयेत् ३९

ऊर्ध्वे वलभि युग्मांशं वाजनं चैकभागिकम्
कपोतं पञ्चभागं तु अंशमालिङ्गमेव च ४०

द्विभागान्तरितं चैव निम्नमर्धेन कारयेत्
तदूर्ध्वेऽध्यर्धभागेन प्रतिवाजन कारयेत् ४१

तदूर्ध्वे कन्धरं द्व्यंशं वाजनं चैकभागिकम्
तदूर्ध्वे गृहं युग्मांशमेकभागेन वाजनम् ४२

वेदांशं तत्कपोतोच्चमर्धेनालिङ्गमेव च
अंशमन्तरितं चोर्ध्वे निम्नमर्धेन योजयेत् ४३

अंशेन प्रस्तरं चैव सर्वालङ्कारसंयुतम्

तदेव मूल गोपानमूर्ध्वे द्व्यंशेन वाजनम् ४४

तदूर्ध्वे पञ्चभागेन कूलिकाङ्घ्रिकतुङ्गकम्
तत्प्रदेशे विशेषोऽस्ति नाटकाभिरलङ्कृतम् ४५

कपोतक्षुद्रनास्यङ्गैः पत्रवल्यादिभूषितम्
प्रस्तरे सर्वदेशे तु मकरादिविभूषितम् ४६

मकरैर्भ्रमरैर्युक्तं शेषं प्रागुक्तवन्नयेत्
एकदण्डं द्विदण्डं वा चार्धदण्डमथापि वा ४७

क्षुद्रनासं विशालं स्यात्तुङ्गं गोपानसीमकम्
अधःपादवशान्यस्य सर्वेषां क्षुद्रनासिकम् ४८

कर्णपादवशात्क्षुद्रनासि स्तम्भाग्रमर्धकम्
षडधिह्कम् तु विंशांशं भागं तु प्रस्तरोदयम् ४९

त्रिभागं चोत्तरोत्तुङ्गमूर्ध्वे अंशेन वाजनम्
तदूर्ध्वे पद्मतुङ्गं स्याद्वाजनं चैकभागिकम् ५०

मुष्टिबन्धं त्रिभागं स्यादंशेन वाजनं भवेत्
त्र्यंशं मृणालिकोत्तुङ्गं चांशेन वाजनं भवेत् ५१

युगांशं पट्टिकोत्तुङ्गं वाजनं चैकभागिकम्
अर्धेन कम्पमंशेन पद्ममर्धेन वाजनम् ५२

कपोतं बन्धभागं स्यादर्धेनालिङ्गमेव च
वाजनं तत्समं तु स्यादंशेनान्तरितं तथा ५३

तदूर्ध्वे चैकभागेन प्रतिवाजन संयुतम्
नाटके तत्सपादैश्चाधोपाद समन्वितम् ५४

तदूर्ध्वेऽर्धं च सर्वेषां तत्पादं बहिर्निर्गमम्
एकदराडं द्विदराडं वा त्रिदराडं वाथ निर्गमम्  ५५

भूतरूपगर्णैश्चैव यत्तविद्याधरं तथा
नरैर्वा नाटकाङ्गं तु कुर्याद्देवालयादिनाम्  ५६

यत्तविद्याधरादीनां भूपहर्म्ये तु योजयेत्
हर्म्यान्तरालयाः सर्वे नृणां नाटकसंयुतम्  ५७

सर्वेषां मुष्टिबन्धानां कुर्यात्पादै ऋजुस् तथा
शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्  ५८

एतत्तु प्रस्तरस्योर्ध्वे नाटकस्योर्ध्वशाशवत्
कुर्यादेतत्कपोतं स्यादष्टभागाधिकं तथा  ५९

शेषं तु पूर्ववत्कुर्यात्प्रस्तरं चाष्टभेदकम्
प्रस्तरोच्चमिति प्रोक्तं प्रच्छादनमिहोच्यते  ६०

प्रासादादीनि सर्वेषां प्रच्छादनादिलत्तरणम्
उत्तरान्तत्रिकान्तं वा वलभी चोर्ध्वमेव वा  ६१

कपोतान्तकमेवं स्यात्तस्योर्ध्वे प्रस्तरांशकम्
एतत्प्रच्छादनात्स्थाने दराडं चोपरि शाययेत्  ६२

एतद्द्वारवशाद्दीर्घं तस्योपरि जयन्तिकाम्
दारुदराडं शिला वापि इष्टकेन जयन्तिकाम्  ६३

अथवा दारुजयन्तिश्च शिला चेत्सदराडकम्
विनादराडं तथा कुर्यात्पाषाणं फलका न्यसेत्  ६४

एतत्सर्वालये कुर्याद्देवहर्म्ये विशेषतः

शुद्धं मिश्रं च संकीर्णं त्रिविधं तद्वशान्नयसेत् ६५

एकद्रव्यं तु शुद्धं स्याद् द्विद्रव्यं मिश्रकं भवेत्
त्रिद्रव्यैस्तु संकीर्णं तज्ज्ञात्वा कारयेत्बुधः ६६

केवलं चेष्टकाहर्म्ये दारुप्रच्छादनमन्वितम्
शिलाहर्म्ये शिलातौलिं कुर्यात्तत्तद्विशेषतः ६७

कर्णं च पट्टिकायुक्तं मध्यं मध्यावसानकम्
चतुरश्रायताश्रं वा यथा कर्मानुकूलतः ६८

एकपट्टं द्विपट्टं वा त्रिपट्टोर्ध्वे तथोच्चयेत्
तन्मध्ये फलकं वापि शिला तौलाजयान्तिकम् ६९

लुपाकारं तु वत्कुर्याद्दलस्याकृतिः एव वा
एवं गेहे प्रोक्तं मम दृष्टमर्थं तु कारयेत् ७०

कुर्याद्दिशि तुलां वापि पट्टस्योपरितस्तु वा
तन्मध्येदेश दारुणा दण्डं कृत्वा प्रयोजयेत् ७१

एतत्प्रच्छादनं गेहे प्रोक्तं मम मुनीश्वरैः
अन्यवास्तुनि सर्वेषां प्रच्छादनमिहोच्यते ७२

मध्ये प्रागुक्तवत्कुर्यात्तदूर्ध्वे प्रस्तरमेव च
बाह्ये प्रागुक्तवत्सङ्गं प्रस्तरं तु यथोच्चयम् ७३

कुर्यादधःप्रदेशे स्यान्मध्ये वृत्तमुत्तरोपरि
महाभारं तुलां वापि क्षुद्रदण्डमथापि वा ७४

आधारपट्टसंयुक्तं सतुलं तु जयन्तिकम्
प्रस्तरावृतमध्योर्ध्वे तुलाया छादयेत्ततः ७५

तद्विधानस्य धोदेशे क्षुद्रपट्टैर्मलक्षकम्
अथवा चतुरश्रैश्च कुर्यात्तत्र विशेषतः ७६

तत्र पट्टैश्चतुष्कानां सन्धिर्मध्ये तु कुड्मलम्
पादेषु फुल्लपद्मं च कुर्याद्युक्त्या च शोभितम् ७७

मध्यरङ्गं तदुद्दिश्य चोर्ध्वेऽलङ्कार वक्ष्यते
उत्तरस्याधोदेशे तु पूर्वोक्तचरणाग्रके ७८

बोधिकाकृति विज्ञात्वा स्तम्भस्यार्धाग्रदेशतः
पीनकर्णोपरि प्रान्ते पालिकाकृति विन्यसेत् ७९

तदूर्ध्वे नाटकाङ्गैश्च पालिका द्विगुणोन्नतम्
तदूर्ध्वे मृणालिकोत्तुङ्गं नाटकोन्नत समम् ८०

महाबोधिकसंयुक्तं मृणालोपरि विन्यसेत्
तन्महाबोधिकाचोर्ध्वे महातौलिं न्यसेद्बुधः ८१

बोध्हिका पूर्ववत्तुङ्गं तत्समं तौलिकोन्नतम्
महातौलिं विना कुर्यादाधारार्थं तु पट्टिका ८२

पूर्वोक्तप्रस्तराङ्गैश्च यन्मानोरम्यवर्गकम्
आधारस्योपरि प्रान्ते कुर्यात्तु शिल्पिवित्तमः ८३

ऊर्ध्वे प्रच्छादनं कुर्यादथवाधारवोर्ध्वके
एतत्प्रच्छादनं कुर्यात्पूर्ववत्समलङ्कृतम् ८४

एवं तु चोर्ध्वालङ्कारं मध्यरङ्गे तु विन्यसेत्
तत्तुङ्गं पूर्ववत्कुर्याच्छेषं युक्त्या प्रयोजयेत् ८५

तद्बहिः प्रान्तभक्तीनां प्रच्छादनमिहोच्यते

प्रागुक्तमूलपादानां स्तम्भे च प्रतिपादके ८६

तदूर्ध्वे चोत्तरं न्यस्य वाजनं मुष्टिबन्धनम्
मृणाल वाजनं वापि चोत्तरादि यथोर्ध्वके ८७

कुर्यात्तु तस्य चोर्ध्वे तु दण्डैस्तच्छ्रोणिकां न्यसेत्
त्रिचतुष्पञ्चषण्मात्रं दण्डान्तरविशालकम् ८८

तत्तद्द्विगुणदण्डं स्याद्युक्त्या बलवशान्नयसेत्
चतुरश्रं चतुःपट्टं तुलानामाकृतिस्तथा ८९

पत्रवल्यादियुक्तं वा यथाशोभं तु कारयेत्
तदूर्ध्वे जयन्तिकं स्यादन्तराले तु विन्यसेत् ९०

अथवा चोत्तरा सर्वे सान्तःप्रान्तरोत्तरम्
यत्तद्भक्तिवशात्सर्वं प्रस्तरं स्यात्तदन्तरम् ९१

बाह्यके चोत्तरं सर्वं युक्त्या काष्ठवशान्नयसेत्
तस्यान्तः पादमध्यान्तः प्रस्तीर्यात्तु यथोत्तरम् ९२

एतत्तु सर्वतोभद्रमलक्षाकृतिरिहोच्यते
तदेव कर्णवशाद्वशं प्रस्तीर्यात्तु सर्वशः ९३

उत्तरैः प्रागुक्ताङ्घ्रिः स्यात्तद्वशात्परितो न्यसेत्
तदेवान्तमलक्षं च कर्णयोश्चोत्तरं विना ९४

इन्द्रादियाम्यपर्यन्तं याम्यादिवरुणान्तकम्
वरुणात्सौम्यपर्यन्तं सौम्यादिपूर्वकान्तकम् ९५

बाह्यान्तरान्तरं च युक्त्या वंशे तु योजयेत्
शेषं प्रागुक्तवत्तुल्ये बहिस्तद्वशान्नयसेत् ९६

बहिश्चावृतवारादि चोत्तरादीनि कारयेत्
उत्तराद्युत्तरान्तं तु तलैर्विन्यासमीरितम् ९७

बाह्ये लम्बावभक्तिश्चेद्दरिडकोर्ध्वे लुपैस्थिरम्
पूर्वोक्तमञ्चतुङ्गैर्वा यथाशोभं तु योजयेत् ९८

शिलायां दारुके वापि चेष्टके वाथ कारयेत्
यथाबलं यथाभारं तथा वंशादि योजयेत् ९९

अन्तर्वहिश्च तत्सर्वे चोत्तरैः समता न्यसेत्
अन्यथाङ्गानि सर्वेषां कायां कुर्याद्वशां नयेत् १००

उत्तरं वैपरीत्यं चेत्कर्तुः तद्वास्तुनाशनम्
देवानां भूपतीनां च चोर्ध्वे मध्ये तरङ्गकम् १०१

मलक्षादिविधानं च कुर्यात्तु सम्पदांपदम्
तैतलानां द्विजातीनामन्यत्सर्वं शुभावहम् १०२

इति मानसारे वास्तुशास्त्रे प्रस्तरविधानं नाम षोडशोऽध्यायः

## सन्धिकर्मविधानम्

सन्धिकर्मविधानं च लक्षणं वक्ष्यतेऽधुना
हर्म्याणां दारुसंयोगं सन्धिकर्ममुदीरितम् १

वृक्षमूले बलं युक्तं वृक्षाग्रे बलहीनकम्
तस्मात्तु बन्धयेत्सर्वं दारुसंमूलात्सुधीः २

उक्तवद्दारु संग्राह्य योजयेत्तक्षकेण तु
न वक्रं च न भिन्नं च न सुषिरं दारु सर्वशः ३

मल्लसंबद्धसन्धिं च ब्रह्मराज द्वयं तथा
वेणुपर्वाख्यसन्धिं च पूगपर्वं च सन्धिकम् ४

देवसन्धिस्तथर्षिमेषुपर्वसन्धिं दण्डकम्
एतदष्टविधं प्रोक्तं दारुयोगेन सन्धिभिः ५

दारुद्वयैकसन्धिः स्यान्मल्लबन्धमिति स्मृतम्
त्रिचतुर्दारुयोगेन द्वित्रिसन्धिर्यथाक्रमम् ६

ब्रह्मराजमिति प्रोक्तं तन्त्रविद्भिः पुरातनैः
पञ्चदारु चतुःसन्धि वेणुपर्वकमीरितम् ७

षड्दारु पञ्चसन्धिः स्यात्पूगपर्वं प्रशस्यते
सप्तदारुभिः षट्सन्धि देवसन्धिमिति स्मृतम् ८

अष्टदारु ऋषिसन्धिमेषुपर्वाख्यसन्धिकम्
तस्योपरि बहुसन्धि बहुद्रव्यैश्च दण्डकम् ९

पादानामुत्तराणां च कुड्यस्योत्तरदारूणाम्
सन्धिकर्मक्रमं सम्यगेकवस्तुन्यनेककम् १०

अन्तर्बहिश्च यश्चोर्ध्वे तत्तत्सन्धिमिहोच्यते
मल्लबन्धादि स्यादष्टसन्धिः सर्वेषु धामसु ११

दीर्घं ह्रस्वं समं दारु योजयेदुक्तवत्क्रमात्
पुंदारूणां तु पुंदा न स्त्रीदारुं स्त्रिया सह १२

युञ्जीत या स्त्रिया सार्धं पुंदारु पतिना सह
नपुंसकं न पुञ्जीत सर्वेष्वपि गृहादिषु १३

चतुर्दिक्षु बहिर्दारु रनन्तं प्रेक्ष्य संस्थितम्
ज्ञात्वा धीमान्मुहुर्देवान् दिनयेद्वामदक्षिणम् १४

अन्तश्चतुर्दिशां दारु बहिः पश्येत् तन्मुखम्

ज्ञात्वा तु शिल्पिनां श्रेष्ठं दिव्यं दक्षिणवामकम् १५

दीर्घादिसर्वदारुणि विन्यासं वक्ष्यतेऽधुना
दक्षिणे विन्यसेद्दीर्घं कुब्जदारु तु दक्षिणे १६

अथवा मध्यमे दीर्घं वामवामे तु कुब्जकम्
त्रिदारुयोगसंपाते सममेतत्त्वथापि वा १७

दक्षिणं मध्यमं दीर्घं वामे दारु त्वदीर्घकम्
दारुमूलं तथाग्रं च संयोगं दारुसर्वशः १८

दक्षिणोत्तरमायामं दारुमूलं च दक्षिणे
पूर्वपश्चिमयोर्दीर्घं दारुमूलं च पश्चिमे १९

प्रत्यग्दक्षिणयोर्दारु मूलसंयोग नैर्ऋते
पूर्वे चोत्तरतो दारु अग्रं संयोगमीशके २०

अनलानिलकोणे तु चाग्रमूलं तु योजयेत्
कटचोत्तरं तु संयोगं मूलं तच्च षडश्रकम् २१

अज्ञानाद्द्व्यन्तराग्रं चेत्स्वामिनो मरणं ध्रुवम्
उत्तराद्दारुसंयोगमालिम्बोदययोर्मुखम् २२

तन्मूलस्योपरि स्थाप्य चाग्रमेतदधोमुखम्
पादैरपि च सर्वेषां गृहं संप्राप्य वश्यते २३

आधारं प्राक्शयं दारु मूलाग्रं चोर्ध्व तक्षयेत्
वैवस्वतं दिशं चैवं चान्तं चोपरि विन्यसेत् २४

मूलमूर्ध्वे संच्छेद्य प्रत्यग्दारोश्च मूलतः
अधश्छेद्यं दक्षिणतः चोर्ध्वे दारूमिदं न्यसेत् २५

प्रत्यग्दारोश्च चाग्राधश्चोत्तरं दारुमूलकम्
प्राग्दार्वाग्रमूर्ध्वे तु सौम्यदार्वाग्रनिक्षिपेत्  २६

एतत्तु सर्वतोभद्रं प्रागादिदारु योजयेत्
तदेव दारुयोगं च नन्द्यावर्तमिहोच्यते  २७

पूर्वे च शयितं दारु दक्षिणे निर्गमं भवेत्
दक्षिणे शयितं दारु पश्चिमे निर्गमं भवेत्  २८

पश्चिमे शयितं दारु निर्गमं चोत्तरे तथा
उत्तरे शयितं दारु प्राग्दिशि निर्गमं भवेत्  २९

आधाराधेययोगेन पूर्ववत्परिकल्पयेत्
नन्द्यावर्तमिति प्रोक्त स्वस्तिकं वक्ष्यतेऽधुना  ३०

प्राक्शयितं दारु सर्वेषां दक्षमूलोत्तराग्रकम्
दक्षिणे शयितं दारु प्रत्यङ्मूलाग्रपूर्वके  ३१

तद्द्वयोर्मूलमग्रं च चाग्निकोणे च बन्धनम्
प्रत्यग्दिक्शयितदारोर्मूलं याम्येऽग्रमुत्तरे  ३२

सौम्ये शयितदारूणां प्रत्यङ्मूलाग्रपूर्वके
वायुकोणे दिशं बन्धं त्रीणि दार्वाग्राणि एव वा  ३३

दक्षिणे पश्चिमे सौम्ये दारु तत्प्रागुदग्रकम्
नैर्ऋते वायुकोणे च बन्धयेत्तद् द्विसन्धिकम्  ३४

पूर्वे च दक्षिणे प्रत्यग्दारु प्रागुत्तराग्रकम्
वह्निनैर्ऋत्यकोणे च दारु संबन्धयेत्सुधीः  ३५

एतत्सन्धिविशेषोऽस्ति चाधाराधेयपूर्ववत्

दारुमूलं तु सच्छिद्रं दार्वाग्रं सशिखान्वितम् ३६

दक्षिणे दारुमूले च छिद्रं प्रत्यक् शिखान्वितम्
एतन्नैर्ऋृतिकोणे तु युक्त्या दारुं संयोजयेत् ३७

एवं तु चाग्निकोणे तु युक्त्या दारु सुयोजयेत्
सौम्ये च दारुमूले तु छिद्रं प्रत्यक्छिखान्वितम् ३८

एवं तु वायुकोणे तु कारयेत्तक्षकोत्तमः
एवं तु स्वस्तिकं प्रोक्तं युक्ताग्रे चैशकोणयुक् ३९

प्राच्ये दार्वा च सच्छिद्रं सौम्याग्रं च शिखान्वितम्
छिद्रयुक्तं तदाधारमग्रमिदं सशिखान्वितम् ४०

वास्तुमध्ये गणं युक्तं तद्बाह्ये वृतदारुणा
यथेष्टदिग्भद्रसंयुक्तं युक्तादन्यैस्तु योगतः ४१

आधाराधेयमाद्यैश्च सर्वं प्रागुक्तवन्नयेत्
वर्धमानमिति प्रोक्तं वर्धमाने तु विन्यसेत् ४२

अधोभूदारुयोगं च तथोर्ध्वोर्ध्वं तथा न्यसेत्
अज्ञानाद्वैपरीत्यं चेत्सर्वसंपद्विनाशनम् ४३

तस्मात्परिहरेच्छिल्पी सर्वदारु योगतः
दारुयोगक्रमं प्रोक्तं दारुसन्धिरिहोच्यते ४४

यथारहितसन्धक्यं तथा योग्यं विचक्षणैः
स्तम्भानां दारुयोगेन चोक्तवच्चैव सन्धयः ४५

स्तम्भदारु त्रिभागैकं तन्मध्ये तु शिखां भवेत्
तुङ्गतारसमं कुर्यादूर्ध्वे कर्णं शिखान्वितम् ४६

अधः कर्णं मध्ये छिद्रं मेषयुद्धं हि योजयेत्
विस्तारे सप्तभागेन त्रिभागाधिकमायतम्  ४७

अथवा सार्धमायामं विस्तारद्विगुणं तु वा
अथवा कर्णमानं वा सन्धिरेतत् फणायतम्  ४८

सर्वेषामपि दारुणां सन्धेः प्रान्ते तु योजयेत्
यथेष्टफणसंग्राह्यं चोदयेद्विस्तृतार्थकम्  ४९

मूलाग्रे कीलकं युक्तं अर्धप्राणमिति स्मृतम्
तदेव द्विललाटे च विस्तारार्धार्धचन्द्रवत्  ५०

मध्ये च दन्तसंयुक्तमग्रमूले तु योजयेत्
शेषं तु पूर्ववत्कुर्यान्महावृत्तमिति स्मृतम्  ५१

एतत्स्व वृत्तपादानां त्रिकर्णं वक्ष्यतेऽधुना
तदेवं  च त्रिकर्णं स्यात्तत्त्रिचूलिकमेव च  ५२

स्वस्त्याकृतिं समायुक्तं बलात्कीलकसंयुतम्
त्रिकर्णाभमिति प्रोक्तं शेषं प्रागुक्तवन्नयेत्  ५३

मेषयुद्धे चतुर्दिक्षु चतुःशूलं तु संयुतम्
चतुरश्राङ्घ्रिमध्ये तु पट्टयुक्तं सपट्टवत्  ५४

दन्तसंयुक्तं सन्धिश्च सर्वतोभद्रमीरितम्
एतत्सन्धिविधिश्चाङ्घ्रिं यथाशक्ति यथाबलम्  ५५

स्तम्भमध्या यथोत्सेधं कुर्यादूर्ध्वे विशेषतः
यथालङ्कारया प्रान्ते युक्त्या तत्रैव सन्धयः  ५६

शिलास्तम्भं तु सर्वेषां मेषयुद्धं प्रकल्पयेत्

पादायामविशालैश्च पूर्ववत् परिकल्पयेत् ५७

पादमूलविशाले तु षट्सप्तांश विभाजिते
एकैकमाधिकं वापि पादमूलविशालकम् ५८

कुर्याद्विंशविशालं स्याद्दारुवंशोन्मनस्तथा
समं वाथ त्रिपादं वा चार्धं वा कुटचचोत्तरे ५९

विस्तारं तद्यथा कुर्यात्तुङ्गं प्रागुक्तवन्नयेत्
कुटचवंश प्रतिर्वंशं तुङ्गं यत्तु समं भवेत् ६०

तुङ्गस्याधिकहीनं चेद्विपङ्क्तिं नित्यमावहेत्
पूर्वोक्तसन्धिदीर्घेषु यन्मानोरम्यसंग्रहम् ६१

कुटचस्योत्तरसन्धीनां प्रतिवंशविशालके
सन्ध्यायामं तु संग्राह्यं कुर्यात्प्रागुक्तवत्सुधीः ६२

शङ्कराणिं च शल्यं च कीलं तु पर्याय च
वृद्धं शूलं च दन्तं च शिखापर्यायवाचकाः ६३

सन्ध्या पादविष्कम्भं वसुसप्तषडंशकम्
तदेकांश किलविस्तारं शूलं तारं च मानयेत् ६४

शूलकीलद्वयोस्तेषां समतारमुदाहृतम्
दीर्घतारमिदं तं समताराग्रकीलकम् ६५

शल्यायामं तु सर्वेषां यथायुक्तं यथाबलम्
कुर्यात्तु सन्धिमध्यस्य कीलपार्श्वं तु कीलयेत् ६६

फणायामं तु तन्मध्ये पश्चात्कीलं प्रयोजयेत्
कीलात्फणमूलान्तं कीलतारं समेन च ६७

ऊर्ध्वं तत्फणप्रान्ते छेदयेत्तक्षकोत्तमः
कीलतारसमं कुर्यात्कीलं तु तत्फणाग्रके ६८

दन्तत्रयसमायुक्तं मूलान्तं तत्फणाग्रयोः
अधोदन्तस्य यं छेद्यं चोर्ध्वदन्तस्य चोर्ध्वके ६९

छेदयेद्वेशनं मूलौ तच्छिखे तत्प्रकीर्तितम्
विस्तारात्तुङ्गदेशे वा तत्तदर्धांश तत्क्षणात् ७०

पूर्ववच्छिख संयुक्तं मध्यकीलकं योजयेत्
ईषुदन्तमिति प्रोक्तं यथाशक्तिबलं न्यसेत् ७१

कर्कटाङ्घ्रिवत्कृत्वा पोत्रनासाङ्घ्रिं वेशयेत्
मध्यकीलं तु संयोज्यं युक्त्या बलवशान्न्यसेत् ७२

सूकरं घ्राणमित्युक्तं वंशदण्डाग्रमूलयोः
संकीर्णकीलकं वक्ष्ये यथायुक्ति यथाबलम् ७३

नानाशूलैश्च कीलैश्च संयुक्तं खलु दारुषु
एतत्संकीर्णसन्धि स्यात्सर्वहर्म्येषु योग्यकम् ७४

वज्राकृतिषु शूलं स्याद् ब्रह्मस्तकसन्धिकम्
एतत्पञ्चविधः सन्धिः सर्वेषां साधितेष्वपि ७५

कुर्यात्कुड्यस्य चैतेषु चाग्रदन्तं बहिर्भवेत्
मूलदन्तोपदन्तं स्यादाधाराधेय योजयेत् ७६

पार्श्वयोर्योजितं दारु कुलीराग्रोपरि न्यसेत्
पार्श्वे दार्वार्थमन्तश्चेद्वाह्यमूलं च मङ्गलम् ७७

दारुशैले यथामूलं पादमूलं तथा भवेत्

एकरूपा च पङ्क्तं च सन्धिः स्यादेकरूपकम् ७८

ऊर्ध्वोर्ध्वेषु तलेष्वेवं सर्वं कुर्याद्विचक्षणः
तत्तदङ्गानि सर्वाणि परितोऽपि विनश्यति ७९

स्तम्भानामपि सर्वेषां दीर्घस्योर्ध्वशिखान्वितम्
मनसान्तः शिखैर्युक्तं पुत्रपौत्रविनाशनम् ८०

स्तम्भमध्ये शिखायुक्तं मध्यपार्श्वशिखं तु चेत्
कर्तॄणां शोकवृद्धिं स्यात्सन्ध्यङ्घ्रिबाह्यकं चेत् ८१

तथा सन्ध्यङ्घ्रिमध्यं चेत्सर्वसंपद्विनाशनम्
तस्मात्तत्स्तम्भमध्यं तु त्यक्त्वा तत्सन्धिमध्यमे ८२

रेखामात्राङ्घ्रि तन्मध्ये त्यक्त्वा कीलं प्रदक्षिणे
दण्डकारदार्वोङ्गं सन्धिरेषां प्रकथ्यते ८३

यत्कर्णदारुयोगेषु सन्धिस्तेषां तु नामतः
आदित्यो धर्मराजश्च जलेशश्च निशाधिपः ८४

एतच्चतुष्टयं दिक्षु विदिक्षु च तथोच्यते
वह्निर्नैर्ऋतिर्वायुश्च चैशश्चेशे पृथक् तथा ८५

दारुसन्धोक्तसर्वेषां न कुर्याच्छित्पिवित्तमः
गृहक्षतपदे चैव पुष्पदन्तस्य पदे तथा ८६

भल्लाटस्य पदे चैव महेन्द्रस्य पदे तथा
एतेषां तु गृहद्वारं कुर्यात्सन्धिं न कारयेत् ८७

तद्दण्डते तद्विधाने तु विस्तारायामतो गृहे
मध्यकर्णद्वयोर्मध्ये वस्तु यन्मध्यमे तथा ८८

दन्तकीलं च संयुक्तं सन्धिरेतन्न कारयेत्
अन्यसर्वेषु सन्धीनां वास्तुमध्ये न कारयेत् ८९

प्रतिवंशं दारुवक्त्रं ज्ञात्वा सव्यापसव्यकम्
सव्यमूले शिखं कुर्याद्वामे चाग्रशिखान्वितम् ९०

तच्छिखं मध्ययुक्तं चेत्सर्वसंपद्विपत्करम्
दारुमूलाग्रयोः सर्वं सन्धौ युक्ततर भवेत् ९१

मूलेन वेदनं दन्ते धर्मकामार्थनाशनम्
परितो दारुसन्धौ च युक्तं सन्धिं न विद्यते ९२

गृहान्तं चैकदारुं चेत्सन्धिभेदोऽपि नास्ति चेत्
वास्तुप्रदक्षिणं दारुकीलं चापि तथा न्यसेत् ९३

बाह्यावृतदारूणि युद्धायुद्धं विचार्यते
युद्धभावं विदित्वाथ चान्तदारु भवन्ति च ९४

तच्चतुर्दिशि दारूणि तत्तत्सन्धौ च शल्यकम्
प्राक् प्रत्यक् च युद्धं चेत्स्वामिनो मरणं ध्रुवम् ९५

दक्षिणोत्तरयोर्युद्धं पूर्वं तद्दोषमावहेत्
नूतनानि च दारूणि नूतनैरेव संयुजेत् ९६

पुराणानि च दारूणि पुराणैरेव संयुजेत्
नूतनं च पुराणेन पुराणं नूतनेन च ९७

न युज्यं च कृतेश् चेत्तु राष्ट्रो दुर्भिक्षमावहेत्
मध्योर्ध्वे दारुमध्यात्तु दण्डादीनि त्रयान्तकम् ९८

दण्डपादेन वृद्धिः स्यात्स्थापयेत्कुलयादिनाम्

कुलादिमूलद्रव्येषु यथाशक्ति यथारुचि ९९

कुर्यात्तु चोक्तवत्सन्धिं विना चोक्तं पुरातनैः
शैलजैः शयितैः सर्वैर्निशिखमेषयुद्धकम् १००

अथवा शक्तिरूपं स्यादर्धादर्धमथापि वा
सर्वतोभद्रः सन्धिः स्याद्भद्रवद्युक्तितो न्यसेत् १०१

शिलाहर्म्यादिसर्वेषां प्रथमे वास्त्मेव च
प्रत्यगूर्ध्वे ततः प्रान्ते नन्द्यावर्ताकृति न्यसेत् १०२

वस्तुमध्यचरणस्य मध्यमे सन्धिकीलयुत कर्तृनाशनम्
भक्तिपादबहिष्कीलमूलकम् चार्थनाशजनवेदनाहकम् १०३

उपरि संस्थितदारुसमस्तकैः अथवा तत्रस्थितवाजनमाद्यकैः
सशिखरैरशिखोऽपि सर्वत स्त्वपि च युक्तिवशादिभिर्योजयेत् १०४

अपि च युक्तिवशादपि योजयेत् त्वपि च युक्तिरनुक्तिरनर्थकम्
न च दररहितं शिखया तु चेत् क्रमविहीनं हि लक्षणमन्यथा १०५

कृतधनक्षयकर्तृविनाशनम् तस्मात्सर्वं चोक्तवत्सन्धिराद्यैः
दारोमूलं चाग्रयोक्ताननं च पार्श्वे चैतच्छिल्पिभिर्ज्ञाप्य कुर्यात् १०६

एवं संपदामास्पदं स्यात् १०७
इति मानसारे वास्तुशास्त्रे सन्धिकर्मविधानं नाम सप्तदशोऽध्यायः

## विमानलक्षणम्

विमानलक्षणं चैव संक्षेपाद्वक्ष्यतेऽधुना
तैतिलानां द्विजातीनां वर्णानां वासयोग्यकम् १

एकभूमिविमानादिरविभूम्यवसानकम्

भक्तिसंख्या तदाकारं स्थूपिकाद्यैश्च लक्षणम्  २

लुपमानक्रमं सर्वं स्तूपिकास्थापनं क्रमात्
खानयेत्भूतलं श्रेष्ठं पुरुषाञ्जलिमात्रकम्  ३

जलान्तं वा शिलान्तं वा पूरयेद्वालुकैर्जलैः
हस्तिपादाकृतिं दारुस्तम्भेन प्रहारयेत्  ४

एवं दृढकरं चोर्ध्वे यथाशास्त्रं तु कारयेत्
एकभूमिविमाने तु चोक्तवत्करसंग्रहम्  ५

एवभक्त्या द्विभक्त्या वा त्रिचतुष्पञ्चभागिकम्
षड्भागं षड्विधं प्रोक्तं क्षुद्रमेकतलं भवेत्  ६

पञ्चषट्सप्तभागं स्यान्मध्यममेकतलं भवेत्
षट्सप्ताष्टविभागं स्यात् श्रेष्ठमेकदलं भवेत्  ७

पञ्चषट्सप्तभक्त्या च क्षुद्रं च द्वितलं भवेत्
षट्सप्ताष्टभक्त्या च मध्यमं द्वितलेन च  ८

सप्ताष्टनवभागं स्यादुत्तमं द्वितलं न्यसेत्
सप्ताष्टभक्तिकं कुर्यात्क्षुद्रं च त्रितलं भवेत्  ९

नन्दपङ्क्त्यंश तेनैव मध्यमं त्रितलं भवेत्
एकपङ्क्त्यर्कभागेन चोत्तमं त्रितलं भवेत्  १०

अष्टनन्ददशांशं स्यात्क्षुद्रमाने चतुस्तले
नन्दपङ्क्तिरुद्रभागं स्यान्मध्यमे च चतुस्तले  ११

पङ्क्तिरेकादशार्कं स्याद्भागं श्रेष्ठे चतुस्तले
नन्दपङ्क्त्येकादशार्कं भागं सद्मविशालकम्  १२

कुर्यात्तु शिल्पविद्द्भिः क्षुद्रपञ्चतले न्यसेत्
पङ्क्त्येकपङ्क्तिरर्कांशः द्वादशांशे विशालके १३

एतत्तु मध्यमं पञ्चतलं हर्म्ये व कारयेत्
ईशद्वादशकैकार्कं मनुभागं तथैव च १४

एतद्भागविशाले तु श्रेष्ठं पञ्चतलं भवेत्
अर्कसैकार्कभागं तु मनुपञ्चादशांशकम् १५

एतद्वै पूषके कुर्यात्क्षुद्रषट्तलहर्म्यकम्
सैकार्कांशं मुनिं चांशं तिथिषोडशभागिकम् १६

षट्तलं मध्यमं प्रोक्तं कुर्याद्धर्म्यविशालके
त्रिचतुः पञ्चषट्सप्तैकाधिकं दशभागिकम् १७

श्रेष्ठं षट्तलमित्युक्तं यथा कुर्याद्विचक्षणः
चतुर्दशांशकं पञ्चदशांशं षोडशांशकम् १८

सप्तदशाष्टपङ्क्त्यंशं क्षुद्रसप्ततलं तु वा
पञ्चादशांशकं चैव षोडशांशकमेव वा १९

सप्तादशांशकं भागं चाष्टपङ्क्त्यंशभागिकम्
एतन्मध्यममाने तु कुर्यात्तु सप्तभूमिके २०

विस्ताराष्टद्विभागं च तत्सप्तदशभागिकम्
तदष्टादशभागं स्यान्नन्दपङ्क्त्यंशमेव वा २१

श्रेष्ठं सप्ततलं प्रोक्तं कुर्यात्तत्र विचक्षणः
सप्तादशांशकं चैव विस्ताराष्टादशांशकम् २२

नवपङ्क्त्यंशकं चैव विशाले द्विदशांशकम्

क्षुद्रमष्टतलं ह्येवं हर्म्यं कुर्यात्तु भागतः २३

नवमेव द्विभागं स्यान्नन्दपङ्क्त्यंशकं तथा
विंशत्यांशकमाधिक्यं भागं हर्म्यविशालके २४

मध्यमाष्टतलं कुर्याद्भागमानविमानके
नवाधिकदशांशं स्याद्विंशतिश्चैकविंशतिः २५

द्वाविंशतिश्च भागं च श्रेष्ठमष्टतलं तथा
विंशत्यंशं विशाले तु चैक हस्तं तथैव च २६

द्वाविंशतिं च भागं च त्रयोविंशतिभागिकम्
क्षुद्रं नवतलं ह्येवं कुर्याद्भागं विमानके २७

एकविंशतिभागं च तद्द्वाविंशतिभागिकम्
त्रयोविंशतिभागं स्याच्चतुर्विंशतिभागिकम् २८

मध्यमं नवतलं कुर्यान्मध्यमे तद्विशालके
द्वाविंशतिं च भागं स्यात्त्रयोविंशतिभागिकम् २९

चतुर्विंशतिकं च पञ्चविंशतिकांशकम्
श्रेष्ठं नवतलं प्रोक्तं कुर्यात्तु शिल्पवित्तमः ३०

त्रयोविंशतिभागं स्याच्चतुर्विंशतिभागिकम्
पञ्चविंशतिभागं च षड्विंशतिभागिकम् ३१

क्षुद्रं दशतलं कुर्याद्भागं समविशालके
चतुर्विंशतिकं चैव पञ्चविंशतिक तथा ३२

षड्विंशतिश्च भागं च सप्तविंशतिभागिकम्
मध्यमं दशतलं कुर्याद्विमानस्य विशालकम् ३३

पञ्चविंशतिभागं स्यात्षडविंशतिभागिकम्
सप्तविंशतिभागं स्यादष्टाविंशतिभागिकम् ३४

श्रेष्ठं पङ्क्तितलं कुर्याद्भागं हर्म्यविशालके
षड्विंशतिश्च भागं स्यात्सप्तविंशतिभागिकम् ३५

अष्टाविंशतिभागं स्यान्नवविंशतिभागिकम्
क्षुद्रमेकादशतलं भागमानविशालके ३६

सप्तविंशतिभागं च अष्टाविंशतिभागिकम्
नवविंशतिकं चैव त्रिंशद्भागविशालकम् ३७

एकादशतलं प्रोक्तं मध्यमं तद्विमानके
अष्टाविंशतिभागं स्यान्नवविंशतिभागिकम् ३८

तत्तत्त्रिंशतिकं चैव चैकत्रिंशांशकं तथा
एकादशतलं श्रेष्ठं हर्म्यमूलविशालके ३९

नवविंशतिभागं स्यात्त्रिंशदंशविशालके
एकत्रिंशद्विभागं स्याद्द्वात्रिंशांशकं भवेत् ४०

क्षुद्रद्वादशभूमिः स्याद्भागमेवं प्रकल्पयेत्
विशाले त्रिंशदंशं स्यादेकत्रिंशं च भागिकम् ४१

द्वात्रिंशद्विभागं चैव त्रयस्त्रिंशद्विभागिकम्
मध्यमं द्वादशभूमिं भागमानं विशालके ४२

द्वात्रिंशतिभागं स्यात्त्रयस्त्रिंशच्च भागिकम्
चतुस्त्रिंशतिभागं च पञ्चत्रिंशद्विशालके ४३

श्रेष्ठद्वादशभूम्याश्च भागं कुर्याद्विचक्षणः

कर्णपादस्य बाह्ये तु मध्यपादस्य मध्यमे ४४

एवं भागावसानं स्याद्युक्तियुक्तं प्रयोजयेत्
मूलादिस्तूपिपर्यन्तं वेदाश्रं चायताश्रकम् ४५

द्व्यश्रं वृत्ताकृतिं वाथ ग्रीवादिशिखराकृतिः
स्तूपिकात्रयसंयुक्तं द्वयं वा चैकमेव वा ४६

चतुरश्राकृतिं यस् तु नागरं तत्प्रकीर्तितम्
मूलाग्रं वृत्तमाकारं तद्वृत्तायतमेव वा ४७

ग्रीवादिस्तूपिपर्यन्तं युक्ताथो तद्युगाश्रकम्
वृत्तस्याग्रे द्व्यश्रकं दद्वेसरीनामकं भवेत् ४८

मूलाग्रात्स्तूपिपर्यन्तं अ्रष्टाश्रकं वा षडश्रकम्
तदग्रं चायतं वापि ग्रीवस्याधो युगाश्रकम् ४९

पूर्ववच्चोर्ध्वदेशं स्याद्द्राविडं परिकीर्तितम्
समाश्रकशिखायुक्तं चायामे तच्छिखात्रयम् ५०

द्व्यश्रवृत्तोपरि स्तूपि वृत्तं वा चतुरश्रकम्
पद्मादिकुड्मलान्तं स्यादुक्तवद्वाकृति न्यसेत् ५१

सपादरत्निमारभ्य षडङ्गुलिविवर्धनात्
चतुर्हस्तावसानं स्यात्प्रत्येकं तु चतुर्विधम् ५२

कन्यसादुत्तमान्त स्यादेकाद्यर्कतलान्तकम्
एतेषां स्तूपिकोत्तुङ्गमथजातीवशोच्यते ५३

शूद्राणां चैकहस्तं स्याद्द्विहस्तं वैश्यजातिनाम्
सार्धद्विहस्तमानेन युवराजस्य योग्यकम् ५४

त्रिहस्तं भूपतीनां च सार्धत्रि तु भूसुराम्
तैतलानां चतुर्हस्तं स्तूपितुङ्गं प्रकल्पयेत्  ५५

षोडशैकांशकं कृत्वा पालिकाकुड्मलं कृतम्
सार्धांशं पालिकोच्चं स्यादर्धांशं वाजनं भवेत्  ५६

पद्मतुङ्गं त्रिभागं च कन्धरं चैकभागिकम्
अर्धेन कम्पपद्मं स्यात्कुम्भतुङ्गं द्वयांशकम्  ५७

ऊर्ध्वे च सार्धभागेन दलं पद्मं प्रकल्पयेत्
तदूर्ध्वे च त्रिभागेन तद्दण्डोदयमीरितम्  ५८

अर्धांशं कम्पपद्मं स्याद्वाजनं चोपभागिकम्
तदूर्ध्वे कम्पपद्मं च सार्धभागेन योजयेत्  ५९

द्विभागं कुड्मलोत्तुङ्गं दण्डतुङ्गस्य मध्यमे
यथालङ्कारयुक्तं चेत्पद्मकेसरमावृतम्  ६०

अथवा स्तूपिकोत्तुङ्गं दण्डमानेन कारयेत्
पालिकोत्तुङ्गं दण्डेन पद्मतुङ्गं त्रिदण्डकम्  ६१

कन्धरं चैकदण्डं स्यात् कुम्भोच्यार्धद्विदण्डकम्
एकदण्डोर्ध्वषट्टं स्याद्द्विदण्डं कुड्मलोदयम्  ६२

शेषं तन्मध्यदण्डं स्यात्पूर्ववत्समलङ्कृतम्
शिरतारे तु भूतांशं वह्न्यंशं पालिकायतम्  ६३

तद्विशाले तु भूतांशं सार्धवेदांश विस्तृतम्
अब्जतारं त्रिभागैकं तत्त्रिभागैकभागिकम्  ६४

पद्मस्योपरि कर्णं स्यात्तत्त्रिधा कुम्भविस्तृतम्

कुम्भतारं नवांशैकं भाग दराडविशालकम् ६५

दराडतारं त्रिधा पालि तत्र भागैक कुड्मलम्
महाब्जाष्टदलं कुर्याच्छेषं युक्त्या प्रयोजयेत् ६६

तद्वयो विहृतं चाधस्तदर्धाधारपट्टिका
तदर्धं च तथा पट्टं स्यात्तद्द्वयं पद्मं तस्याथ ६७

शेषं तु कुड्मलं कुर्याद्विस्तारं युक्तितो न्यसेत्
शिला वा चेष्टकं दारु लोहं चैव प्रकल्पयत् ६८

शुद्धं मिश्रं च संकीर्णं विमानं त्रिविधं भवेत्
एकद्रव्यं तु शुद्धं स्याद्द्विद्रव्यं मिश्रहर्म्यकम् ६९

त्रिद्रव्यं हर्म्य संकीर्णं शिलांचेष्टकदारुणाम्
एकद्रव्येण युक्तं च कुर्याच्छिल्पिवित्तमः ७०

स्तूपिकीलम्
स्तूपिकीलायतं तारं लक्षणं वक्ष्यतेऽधुना
ऊर्ध्वभूम्या यथापादं तस्यायाम समं तु वा ७१

गलोच्चाध्यर्धतुङ्गं वा स्तूपिकीलायतं तथा
तद्विष्कम्भसम व्यासं स्तूपिकीलस्य मूलके ७२

अथवाङ्गुलमानेन कीलमूलविशालकम्
त्रिचतुर्विंशाङ्गुलं लोहे दारुकीलं तु पूर्ववत् ७३

कीलायामं त्रिभागैकं मूले वेदाश्रमीरितम्
मध्ये चाष्टाश्रसंयुक्तं चाग्र वृत्ताकृतिस्तथा ७४

एकाङ्गुलाग्रविस्तारं मूलाग्रान्तं क्षयं क्रमात्

अथवा शिखराकारं कीलं मध्याकृतिस्तथा ७५

स्तूपिकीलविधृता त्रिगुणा स्यात्
बहिश्चरणाद्दैर्घ्यमुक्तम्
कीलाधारविस्तृतार्ध तद्घनं
तत्कीलमूलमथ तत्र योज्यम् ७६

ताम्रजं चायसं दारु लभेत कीलं प्रकल्पयेत्
खदिरं खादिरं चैव तिन्त्रिणी खारमेव च ७७

उक्तवद्दारु संगृह्य स्थपतिः स्थापकैः सह
तत्काले ज्ञापयेद्विद्वान् स्तूपिकीलस्य वक्त्रकम् ७८

ऋज्वङ्गं च न भिन्नानि तल्लक्षणात्तल्लकेण तु
स्तूपिकीलमिदं प्रोक्तं तदूर्ध्वेष्टकलक्षणम् ७९

मानं प्रागुक्तवत्कुर्यात्पुंस्त्री चेष्टकां विदुः
मूलाग्रं च समतारं तु चेष्टका पुरुष स्मृतम् ८०

आनुपूर्व्यं कृशं तारं वनिता चेष्टका तथा
शिलाहर्म्ये शिलायुक्तं चेष्टके चेष्टका तथा ८१

पुंविमानाच्च पुरुषं वनिता वनितां क्षिपेत्
शिलासंग्रहकाले तु ज्ञापयेत्पुंस्त्रियं तथा ८२

एषा मूर्ध्नीष्टका प्रोक्ता लुपालक्षणमुच्यते
लुपालक्षणम्
स्तूपितुङ्गद्वयं वाथ विमानं च वशोदयम् ८३

एतत्तु शिखरोत्तुङ्गं तदर्धं गलतुङ्गकम्
लुपारूपं शिखरं स्याद्ग्रीवान्तं तल्पवासनम् ८४

उत्तरादिमृणालान्तं प्रस्तरस्योक्तवद्गले
तदूर्ध्वे दण्डकं कुर्याल्लुपमानमिहोच्यते ८५

देवानां मानुषाणां च लुपमानं यथाक्रमम्
अम्बरं च व्ययं ज्योतिर्गगनं च विहायसि ८६

अनन्तं चान्तरीक्षं च पुष्कलं चाष्टधालुपाः
देवानां हर्म्यके कुर्यादुक्तमेवं पुरातनैः ८७

मही ज्या काश्यपी क्षौणी चोर्वी गोत्रा वसुंधरा
वसुधा चाष्टधा प्रोक्ता कारयेन्मानुषालये ८८

सर्वेषां देवतायोग्यं नराणां चोक्तयोग्यकम्
सुराणामुक्तमानं यन्मर्त्यैस्तन्नेष्य यत्नतः ८९

शिखरोदयतत्तुल्यं विस्तारोन्नतमम्बरम्
अष्टांशं चैकहीनं तु विस्तारोन्नतो वियत् ९०

सप्तभागैकहीनं तु विस्तृतं ज्योतिर्मानतः
षट्भागैकहीनं तु विस्तारं गगनस्य स्मृतम् ९१

पञ्चभागैकहीनं तु विस्तारं तद्विहायसि
चतुर्भागैकहीनं तु चानन्ते तद्विशालकम् ९२

उत्तुङ्गं त्रित्रिभागैकहीनं तारान्तरिक्षकम्
तुङ्गे द्व्यंशैकहीनं स्याद्व्यासं पुष्कलमीरितम् ९३

तुङ्गद्वयान्तं यत्कर्णं मानं हस्तायतं तथा
अथवा शिखरोत्तुङ्गमष्टभाग विभाजिते ९४

एकांशाधिकविस्तारमुक्तमेतन्मही बुधैः

तुङ्गे सप्ताङ्ग चाष्टभागाद्यं ज्या चेति स्मृतम् ९५

तुङ्गे षड्भागविस्तारे सप्तांशं काश्यपी तथा
तुङ्गे पञ्चांश षड्भागं व्यास क्षौणिरिति स्मृतम् ९६

तुङ्गे वेदांशकं व्यासं पञ्चांशं चोर्वी कथ्यते
तुङ्गे गुणांश वेदांशं विस्तारं गोत्रमीरितम् ९७

तुङ्गे द्व्यंशं च विस्तारं त्र्यंशमेव वसुधरा
तुङ्गमेकांशकं व्यासं द्विभागं वसुधा भवेत् ९८

पूर्ववत्कर्णमानेन हस्तदीर्घमुदीरितम्
शिखरे चावृते पारे सभामण्डपगोपुरे ९९

शाला च नासिकाभद्रे कूटनीयैस्तु तोरणैः
कपोतो पञ्जरं चैव मुष्टिबन्धादि सर्वशः १००

हस्तिहस्तादिमानानां मानयेच्छिल्पिवित्तमः
एतत्तु मध्यदेशे तु तस्मात्कर्णावसानकम् १०१

क्रमात्सोपानवत्कुर्यात्तन्मानं वक्ष्यतेऽधुना
मध्यकर्णद्वयोर्मध्ये विकल्पं कल्पयेत्सुधीः १०२

एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टकरत्निकम्
दशमेकादशं चैव द्वादशं च लुपान्वितम् १०३

केचित्त्वेकेन वृद्ध्या तु एकपञ्चलुपान्तकम्
यत्सोपानक्रमं कुर्यादेतच्छायालुपादिकम् १०४

देवानां चक्रवर्तीनां विकल्प योग्य सावरः
तस्माद्विद्वान् लुपेनैव हीनं शूद्रतः क्रमात् १०५

मुख्यं हर्म्यमिदं कुर्यात्क्षुद्रहर्म्ये विशेषतः
एकादशविकल्पान्तं भूसुराणां तु योग्यकम् १०६

नवान्तं भूपतीनां चैकाद्विकल्पमीरितम्
एकाद्यष्टविकल्पान्तं युवराजस्य योग्यकम् १०७

एकात्सप्तविकल्पान्तं वैश्यानां च प्रकीर्तितम्
एकात्पञ्चविकल्पान्तं शूद्राणां तु योग्यकम् १०८

अन्यदितरजातीनां विकल्पत्रय पूर्ववत्
एवमुक्तं लुपाश्रेणीं कुर्यात्तु शिल्पिवित्तमः १०९

मध्ये लुपायतं मानं कर्णविस्तारमिष्यते
मध्यादि चान्यथा सर्वं विकल्पं तद्विभाजितम् ११०

तत्तत्कर्णस्य मानेन विशालं स्यात्पूर्ववत्
तत्तत्कर्णस्य मानेन लुपादीर्घमुदीरितम् १११

तत्समं वा सपादं वा सार्धार्धकमेव वा
दीर्घत्वमालम्बनं लम्ब्य विस्तारस्य तु निर्गमम् ११२

तस्य मानं यथाभागं युक्त्या तत्रैव योजयेत्
त्रिचतुष्पञ्चषण्मात्रं लुपामूलविशालकम् ११३

समं वाथ त्रिपादं वा चार्ध वालम्बनान्तकम्
एकद्वित्र्यङ्गुलं वापि घनं सूर्याङ्गसंमतम् ११४

अन्यत्सर्वाङ्गविस्तारं यथायुक्तिवशान्नयसेत्
एकद्वित्र्यवसानान्तं स्तम्भस्योपरि विन्यसेत् ११५

लुपां प्रागुक्तविस्तारं तत्तद्वंशाङ्घ्रिकान्तकम्

अधः पादस्य लुपाद्यैश्च तत्र दोषो न विद्यते ११६

कर्णात्कन्या वसानं स्यान्नवसूत्रं प्रसारयेत्
तत्सूत्रादधोदेशे कुक्षि ज्ञात्वा पुरोर्ध्वके ११७

लुपाकुक्षिप्रदेशे तु चत्वासूत्रावसानकम्
अर्धचन्द्रवदाकारं युक्त्या चन्द्रं यथेष्टकम् ११८

मूलादिवासनान्तं स्याच्छिद्रमेकं द्वयं तु वा
चन्द्रान्ते क्षेपणं युक्तं छिद्रं सूत्रादधो न्यसेत् ११९

तच्छिद्रे वेत्रसंयुक्तं लुपाधारात्तु वित्तमः
श्रेण्यां मध्यलुपाः सर्वे लुपासंख्या यथेष्टका १२०

करवीरबहुवर्णा संपुटाभं विकल्पयेत्
एककुड्मलयुग्येन कर्णायां च लुपान्वितम् १२१

अग्रं विकासिताभं स्यान्मूलं च निविडान्वितम्
कर्णे चैकलुपा पार्श्वे लुपाबहुल योजयेत् १२२

ह्रस्वदीर्घायतः सर्वं नालिकेरदलान्वितम्
बहुवाहुलुपाकर्णेषु बहुकुड्मल योजयेत् १२३

एवं च लक्षणं प्रोक्तं कटकाकारं तु योजयेत्
दण्डकोर्ध्वे वाजनं स्याल्लुपान्तस्योपरि न्यसेत् १२४

क्षेपणेन रूषाकारं वामावामं तु योजयेत्
एतत्तु ममला वृत्तं देवानां हर्म्यके न्यसेत् १२५

वृत्तं वाथ षडश्रं वा अष्टाश्रं वा तदायते
कुर्यात्तत्तल्लुपामानं पूर्ववत्परिकल्पयेत् १२६

अ्रहमेतं चैकपञ्चांशं लुपा वर्णयथाक्रमम्
तस्माद्विहस्तहीनेन सत्रि चत्वारिकान्तकम्  १२७

देवानां मानुषाणां च शूद्रजात्यावसानकम्
मध्यकर्णलुपान्येतत्सर्वं सोपानवत्कुरु  १२८

शङ्खतुण्डवदाकारं शङ्खावर्तविकल्पकम्
प्रगुक्तदक्षिणावर्तं कुर्यात्तु बहुवाजनम्  १२९

शङ्खावर्तमिदं प्रोक्तं देवहर्म्ये तु योजयेत्
सर्वेषां च लुपानां च ऋजुवक्रं तु वा पुनः  १३०

बहुचित्रं बहुच्छिद्रं बहुवेत्रं यथाबलम्
यथाशोभं तथा कुर्याच्छेषं युक्त्या प्रयोजयेत्  १३१

एवमुक्तं लुपा चोर्ध्वं शिखरे वाम्बरेऽपि वा
फलकाक्षेपणं वापि ताम्रं वायसा कीलयेत्  १३२

हेमजेन करोटी वा मृत्करोटी विधानयेत्
गुडोदकसुधायुक्तं युक्त्या च लेपयेत्सुधीः  १३३

अ्रन्तर्वापि बहिर्वपि चोर्ध्वे च प्रतिसंयुत
प्रस्तरस्योक्तवत्कुर्याच्चोपपीठमिति स्तथा  १३४

कुर्यत्तु लुपमूले तु यत्तद्बलार्थ शोभितम्
उक्तादनुक्तमानं चेद्विपत्ती हित्यमावहेत्  १३५

तस्मादा चोक्तवत्सर्वं कुर्यात्तु संपदास्पदम्
कम्पवृत्तं च लुपामूले शोभार्थं तु बलार्थकम्  १३६

मुखभद्रम

सर्वेषां मुखभद्रं स्याल्लक्षणं वक्ष्यतेऽधुना
शिखरालम्बनं चादौ तत्पालिकावसानकम्  १३७

अथवा प्रस्तरोर्ध्वादौ चोत्तरावनितं तदा
मुखभद्रोदयमेवं चोक्तवद्विस्तृतं भवेत्  १३८

सप्तदशांशकं तुङ्गे द्विभागं प्रस्तरोदयम्
एकंशं वेदिकोत्तुङ्गं गलतुङ्गं गुणांशकम्  १३९

तद्द्वयं तलतुङ्गं स्यात्तस्मादूर्ध्वे शिखान्तकम्
वेदांशं तच्छिखांशेन गल वक्त्रं गुणांशकम्  १४०

शेषं तु मौलिकान्तं च पञ्चदशांशमेव च
प्रस्तरस्य कुर्यादन्यच्छेषं प्रागुक्तवन्नयेत्  १४१

नासिकं लम्बनं चैकं लम्बनं तद्द्वयं तु वा
पञ्चांशद्विंशतारं स्यात्तदर्धं कुक्षिविस्तृतम्  १४२

कुक्ष्यन्तस् सद्मसंयुक्तं वातायनमथापि वा
गवाक्षाकारपत्रं वा पट्टिकास्पदपत्रयुत्  १४३

अथवा चित्रसंयुक्तं सर्वालङ्कारसंयुतम्
नासिकावृतबाह्ये तु गवाक्षाकारं तु पत्रयुक्  १४४

तस्मादन्तर्गताश्वादिदेवभूतादिरूपकैः
व्यालसिंहादिहंसाद्यैर्द्रुमवल्यादिभूषितम्  १४५

तदूर्ध्वे कीर्तिवक्त्रं तु निर्गमाकृतिं भावयेत्
तन्नोडलम्बनं पार्श्वे तद्वक्षस्थलपार्श्वयोः  १४६

विद्याधरादिसंयुक्तं ग्रहपत्रैर्विभूषितम्

दीर्घनेत्र विशालं स्याद्वृत्त गण्डस्थलं तथा १४७

गजश्रोत्राकृति श्रोत्रं गण्डं चा तरङ्गवत्
आस्याग्रे तद्द्विदन्तं स्याद्वेदपादं मृगाङ्घ्रिवत् १४८

नेत्राधो वशगादूर्ध्वे चोर्ध्वमेवं त्रिवक्त्रकम्
अब्जमत्स्याननाकारं क्षुद्रदन्ते च जिह्वयुक् १४९

वक्त्रपार्श्वादि सर्वाङ्गं पत्रवल्यादिभूषितम्
मानं युक्त्या प्रकुर्वीत ग्राहमेवमुदीरितम् १५०

कीर्तिवक्त्रं हरिर्वक्त्रं चोक्तवत्कारयेत्सुधीः
कर्णमूले कपोलाग्रे स्तूपिके शृङ्गदेशके १५१

वक्त्रयुङ्नेत्रयोर्मध्याच्छिखिमूलं तु विन्यसेत्
मन्दस्मिताननाकारं सर्वं दृष्ट्वा कृतिं दृशि १५२

वराहश्रोत्रवत्कर्णौ शृङ्गौ मेषस्य शृङ्गवत्
दन्तैक करालदन्ताभाद् दंष्ट्रादथ तदन्तयुत् १५३

पार्श्वके सस्मृते गण्डं अग्रयोर्‍ऋजुगायतम्
वेगादूनं च कुर्यात्तु उग्रदृष्टिं पुटोज्ज्वलम् १५४

श्यामवर्णं मुखं सर्वं किंबरीमकराननम्
दन्तौष्ठ धवलवर्णं स्याद्धास्येऽक्षे श्रोत्रमत्रयुक् १५५

मकरस्य तु निष्क्रम्य भुजपुच्छादि सर्वशः
ग्रामश्यामा कृतिव्यालैः स्तूपिशृङ्गयुतोक्तवत् १५६

ग्रीवे च लम्बकेशं स्याच्चतुर्थ्या दीर्घपुच्छकम्
श्यामवर्णनिभं सर्वं हंससिंहोक्तवत् कुरु १५७

गजमश्वादिसर्वेषां शिल्पिर्युक्त्या प्रयोजयेत्
देवभूतादिरूपैस्तु यक्षविद्याधरस्तथा १५८

उक्तवत्कारयेद्देवीं भूपतीनां च हर्म्यके
अन्येषां चालयं सर्वे देवैर्भूतैर्विना न्यसेत् १५९

सरस्वत्या च लक्ष्म्या च सर्वहर्म्येषु कारयेत्
प्रासादे मण्डपे सर्वे गोपुरे द्वारके तथा १६०

देवानां भूसुरादीनां वर्णानां सर्वहर्म्यके
कुर्यात्तन्मुखभद्रं स्यात् सर्वालङ्कारसंयुतम् १६१

नीडस्य चाधो ग्रीवो वातायनं कारयेद्बुधः
मध्ये च द्वारसंयुक्तं वातायनं कवाटयुक् १६२

प्रधानोर्ध्वतले वापि शिखरे वाथ कल्पयेत्
मध्ये तु चाग्रके वापि चान्तरालैरलङ्कृतम् १६३

लुपाकारादि जडानां मानयेन्मानवित्तमः
अम्बराद्यष्टधामानि नीढानां लुप मानयेत् १६४

विना कर्ण लुपायुक्तं युक्त्या संख्यामजा लुपा
यत्र हर्म्येषु संकल्प्य तत्र दोषो न विद्यते १६५

शालाकुटे च नीढे च शिखरे चोर्ध्वकूटके
लुपायुक्तभ्रमाकारे तत्तदुष्णीषदेशिके १६६

स्थूलवस्तु तदग्रार्धं स्तूपिकावाहनं भवेत् १६७

विंशोत्सैकं तैतलानां सर्वेषां
भूपालानां वैश्यकानां परेषाम्

सैकाकान्तं युग्मयुक्तं त्यजेत्
तद्धर्म्योर्ध्वके कल्पकं तद्विकल्पकम्  १६८

स्तूपिकीलम्
स्तूपिकीलप्रतिष्ठा च लक्षणं वक्ष्यतेऽधुना
प्रासादाभिमुखो वापि चोत्तरे चैशके वापि  १६९

यागमण्डप संकल्प्य चोक्तवल्लक्षणान्वितम्
अङ्कुरार्पणमादौ च कारयेदधिवासनम्  १७०

मण्डपे स्थण्डिलं कृत्वा शालिभिश्च स्थलं न्यसेत्
पञ्चविंशत्पदं न्यस्य शुद्धतण्डुलरेखया  १७१

दर्भैरास्तीर्य तत्पश्चात्पादप्रक्षालनं कुरु
ततश्चाचमनं कुर्यात्सकलीकरणं कुरु  १७२

पुण्याहं वाचयित्वा तु स्थपतिर्ब्राह्मणैः सह
ब्रह्मादिदेवतानां च गन्धपुष्पादिधूपकैः  १७३

स्तूपिकीलं समुद्धृत्य स्थण्डिलोपरि विन्यसेत्
कीलस्य परितो देशे निक्षिपेच्चतुरिष्टका  १७४

तद्बहिः परितः शुद्धतोयपूर्णान्घटान्न्यसेत्
ईशस्यान्तः प्रदेशे तु मूलकुम्भं विनिक्षिपेत्  १७५

ससूत्राङ्ग सवस्त्रं च सकुर्चान् रुद्रपल्लवान्
सविधानफलं युक्तं परितोऽष्टघटान्न्यसेत्  १७६

कीलस्य पूर्वदिग्देशे रत्नलोहैश्च निक्षिपेत्
नववस्त्रे सकुर्चं च आच्छाद्य रत्नपात्रकम्  १७७

स्तूपिकीलं च संछाद्य नववस्त्रेण कूर्चकम्
आराध्य मूलकुम्भे तु भुवनाधिपतिं जपेत् १७८

गन्धपुष्पैः समभ्यर्च्य नैवेद्यानि निवेदयेत्
धूपदीपं दद्येत्पश्चान्नृत्तगीतादिघोषणैः १७९

इन्द्रादि चाष्टकुम्भानामष्टशक्तीः प्रपूजयेत्
प्रणवादि नमोऽन्तेन तत्तन्नाम्ना प्रपूजयेत् १८०

स्तूपिकीलं समभ्यर्च्य गन्धपुष्पैश्च धूपकैः
कुण्डे वा स्थण्डिले वापि होमं कुर्यात्तदग्रके १८१

समिदा चरुं लाजान्प्रत्येकं पञ्चविंशति
हृल्लेखाबीजमुच्चार्य प्रणवादिनमोऽन्तकम् १८२

व्याहृत्यान्ते ततः शिल्पी स्थण्डिले प्रान्तमाश्रयेत्
यद्यद्देवालये कीलं ध्यात्वा तत्पररुपकम् १८३

तत्तन्मन्त्रं समुच्चार्य चार्चयेत्स्तूपिकीलकम्
तत्तद्देवासनं ध्यात्वा चतुर्मूर्ध्नेष्टकान् सुधीः १८४

नववस्त्रेण गोप्याङ्गमिष्टकैरक्षरं लिखेत्
प्रागाद्य सहकारादि शस्त्रेण रेखयेत् १८५

स्तूपिकीलं चतुर्दिक्षु सूत्रं प्रागादि लेखयेत्
श्रीवत्साकारमग्रे तु वक्त्रं धृत्वा लिखेद्बुधः १८६

स्वस्तिवाचकघोषेण जयशब्दादिमङ्गलैः
गैरिकं वै मधुक्षीरं स्वर्णतूलिकया लिखेत् १८७

वस्त्रमाच्छादनं तत्र वत्सगोकन्यकैः सह

मधुसर्पिर्धान्यराशिं दर्शयेच्छिल्पिवित्तमः १८८

आराध्य गन्धपुष्पैश्च सर्वमङ्गलघोषणैः
नानावस्त्रेण संवेष्टय पुष्पमाल्यैरलङ्कृतम् १८९

लम्बकूर्चं समभ्यर्च्य ग्रामादीनां प्रदक्षिणम्
स्तूपिकीलं समादाय आरुरोह विमानकम् १९०

पालिकोपरि तत्प्रान्ते नासिकोपरि प्रान्ते च
रत्नगर्तं तु संकल्प्य कीलं प्राग्दर्शनं न्यसेत् १९१

नवरत्नानि लोहैश्च तत्तन्मन्त्रेण चार्चयेत्
त्रित्रिकोष्ठे तु तद्गर्भे तन्मध्ये स्वर्णं विनिक्षिपेत् १९२

इन्द्रे ताम्रं विनिक्षिप्य याम्ये निक्षिप्य चायसम्
पश्चिमेऽत्र प्रविप्रवालं न्यस्य चोत्तरे रजतं क्षिपेत् १९३

मध्ये तु पद्मरागं तु वज्रं चैवेन्द्रकोष्ठके
विद्रुमं चाग्निकोणे तु याम्ये नीलं तु विन्यसेत् १९४

नैर्ऋत्ये पुष्परागं तु प्रत्यङ्गरतकं क्षिपेत्
गोमेदकं न्यसेद्वायौ सौम्ये मौक्तिक विन्यसेत् १९५

ईशे स्फाटिक निक्षिप्य तत्तद्देवान्स्वनामतः
प्रणवादिनमोऽन्तेन चोच्चरन् रत्नं विन्यसेत् १९६

स्थपतिर्वरवेषाढ्यः प्राप्तपञ्चाङ्गभूषणः
सुमुहूर्ते सुलग्ने च जयशब्दादिमङ्गलैः १९७

ब्राह्मणैश्च यथाशक्त्या वाचयेत्स्वस्तिवाचनम्
स्तूपिकीलं समुद्धृत्य स्थपतिः स्थापकैः सह १९८

एतद्गर्तोपरि स्थाप्य मूलमन्त्रं समुच्चरन्
स्तूपिकीलस्य परितः स्थापयेच्चतुरिष्टकम् १९९

पूर्वादि च शकारादीन्नन्द्यावर्तं क्रमान्नयसेत्
प्राक् मूलकुम्भमुद्धृत्य चालयद्भिः प्रदक्षिणम् २००

स्थपतिः स्तूपिमूर्धाग्रे तज्जलेनाभिषेचयेत्
इन्द्रादिकुम्भतोयेन पूजयेच्चतुरिष्टकान् २०१

शुद्धतोयेन संपूर्य गन्धपुष्पैः समर्चयेत्
पूर्ववत्समलङ्कृत्य नैवेद्यादि निवेदयेत् २०२

षोडशोपचारांश्च कुर्याद्गन्धाक्षतैः सह
स्तूपिहर्म्ये मूर्ध्नस्तु हंसपादः स्थितो भवेत् २०३

नमस्ते कर्तृराज्यादि ग्रामं रक्षतु सर्वदा
सुधागुलोदकं चापि इष्टकैर्बदुभिस्ततः २०४

स्तूपिकीलं दृढीकृत्य पश्चात्प्रागुक्तवत्कुरु
ब्रह्माविष्णुमहेश्वरस्य स्तूपिप्रतिष्ठां कुरु २०५

कुर्वन्तद्यजमानगृहे नृपालये भुक्तिं मुक्तिमावहेत्
यस्मादकुर्वन्नारदनरनृपतयोः कर्ताश्च पीडा भवेत् २०६

तस्मात्सर्वसुखप्रदं नृपगृहे कुर्यात्स देवालये
विप्रवाहनयुतं च सद्गुरुं शिल्पिनान्दिगजवाजनस्तथा २०७

नृत्तगीत सह सर्वघोषणैः सेवितानि स्वगृहं प्रवेशयेत् २०८

इति मानसारे वास्तुशास्त्रे विमानविधानं नाम अष्टादशोऽध्यायः

एकतलविधानम्

एकभूमिविधिं वद्त्ये लद्तणं वद्त्यतेऽधुना
जातिश्छन्दं विकल्पं तु चाभासं तु चतुर्विधम्  १

पूर्वहस्तेन संयुक्तं हर्म्यं जातिरिति स्मृतम्
छन्दं त्रिपादहस्तेन विकल्पं स्यात्तदर्धकम्  २

आभासं चार्धहस्तेन हर्म्यादीनां तु मानयेत्
एतदायादिशुद्ध्यर्थं स्थानकादि त्रिधा भवेत्  ३

उत्सेधे मानं गृह्यं चेत्स्थानकं तत्प्रकथ्यते
विस्तारे मानं संकल्प्य चासनं तदुदीरितम्  ४

परिणाहे पदे वापि मानं शयनमीरितम्
आसनं संचितं प्रोक्तं स्थानकं स्यात्त्वसंचितम्  ५

अपसंचित शयनं चेत्तत्त्रिविधहर्म्यके
स्थानकादि यस्य मूलं बिम्बहर्म्यं यथाक्रमम्  ६

कुर्यात्तत्तद्विमानं स्याद्विपरीतं विनाशनम्
समाश्रं समवृत्तं यत्पुरुषं चेति कथ्यते  ७

आयताकारधिष्ण्यं वा वनितेति प्रकीर्तितम्
पुंविमाने पुरुषं वनितायां वनितां न्तिपेत्  ८

शक्तीनां वनितं वापि पुरुषं वापि कल्पयेत्
विस्तारोत्सेधभक्तिश्च पूर्ववच्चोक्तवत्क्रमात्  ९

कुर्यात्तदेकभौमस्य कन्यसादीनि तुङ्गकम्
आगम्यमष्टधा हर्म्यं गण्यमानमिहोच्यते  १०

उत्सेधे चाष्टभागे तु चैकांशेन मसूरकम्

द्विभागं चाङ्घ्रिकोत्तुङ्गं मञ्चमेकेन कारयेत् ११

कन्धरं तत्समं कुर्यात्तद्द्वयं शिखरोदयम्
तदर्धं स्तूपिकोत्तुङ्गं वक्त्रं षड्विधमीरितम् १२

हर्म्यताराष्टभागैकं हीनं वेदिविशालकम्
तच्चतुर्भागमेकांशं हीनं ग्रीवविशालकम् १३

शिखरालम्बनान्तं च वेदितारसमन्वितम्
लम्बनं त्रिभागैकं मध्यनासिविशालकम् १४

तत्समं च त्रिपादं वा चार्धं वा निर्गमं भवेत्
मध्यनासिविशाले तु चतुस्त्रिंशद्विभाजिते १५

तत्त्रिभागं तु तुङ्गं स्यात्पञ्चांशं त्र्यंशमेव वा
स्थितस्य लुपमूलं तु तदूर्ध्वे नासिकन्धरम् १६

तदर्धं च त्रिभागं च कन्धरं मूर्ध्नि तत्समम्
तत्तुल्यं मौलितुङ्गं स्याद्युक्त्या तत्पालिकान्तकम् १७

मध्यनास्यर्धमानेन सान्तरं नासिमानकम्
नासिकाग्राननं सर्वं किम्बरीसमलङ्कृतम् १८

नासितारं त्रिभागैकं कुद्मितारमिति स्मृतम्
भूतादिचित्रसंयुक्तं सर्वालङ्कारसंयुतम् १९

लम्बनोर्ध्वे दलं बध्वा सर्वालङ्कारसंयुतम्
ग्राघ्राणं पत्रसंयुक्तं भूष्यै पट्टैरलङ्कृतम् २०

करोटीवदलङ्कृत्य लम्बने पत्रसंयुतम्
पालिके लम्बनं तत्र श्रेण्या दर्पणवृत्तवत् २१

युक्त्यालङ्कारसंयुक्तं शेषं प्रागुक्तवन्नयेत्
ग्रीवोच्चं त्रिभागैकं वेदिकोदयमीरितम्  २२

तत्समं तु गलाग्रे तु चोत्तरादीनि वर्गकम्
तदेवालम्बनं तत्र गोपानादिश्रियान्वितम्  २३

वेदितुङ्गसमं कुर्यात्क्षुद्रनासिविभूषितम्
अथवा तुङ्गमाने तु दशभागं विभाजिते  २४

सपादांशमधिष्ठानं तद्द्वयं पादतुङ्गकम्
तदर्धं प्रस्तरोच्चं तु चाश्विन्यंशे गलोदयम्  २५

तत्समं शिखरोत्तुङ्गं तदर्धं तच्छिखोदयम्
प्रस्तरोपरि चैकांशं कर्णहर्म्यं प्रकल्पयेत्  २६

तदूर्ध्वे पूर्ववद्ग्रीवं युक्त्या चांशेन योजयेत्
कर्णहर्म्यस्य विस्तारं षड्भागं तु विभाजिते  २७

एकांशं कर्णकूटं स्यान्मध्ये शाला द्वयांशकम्
एकं वा द्वित्रिदण्डेन निर्गमं भद्रमेव वा  २८

शालाकूटद्वयोर्मध्ये चैकहारा सपञ्जरम्
तत्तुङ्ग सप्तभागं स्यादेकांशं वेदिकोदयम्  २९

तदूर्ध्वेऽध्यर्धभागेन गलं त्र्यंशकं मस्तकम्
तदर्धं स्तूपिकोत्तुङ्गं कर्णहर्म्यमिति स्मृतम्  ३०

तदेवाधिष्ठानसंयुक्तं कर्णहर्म्यं विना तथा
तदूर्ध्वे वेदिकांशेन कर्णकम्पाब्जकम्पयुक्  ३१

अथवा वेदिकोत्तुङ्ग शेषं भागमिहोच्यते

तदेव वेदिकाशेन नवभाग विभाजिते ३२

द्विभागं वाजनं मूले चोर्ध्वे कर्णं गुणांशकम्
तदूर्ध्वे कम्पमेकांशं दल द्व्यंशेन वाजनम् ३३

वेदितारं चतुर्भागं मध्यकोष्ठं शिवांशकम्
नासिकायुक्तकोष्ठं वा नासिकापञ्जरान्वितम् ३४

शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्
अथवा हर्म्यतुङ्गे तु द्वादशांशं विभाजिते ३५

सार्धतुङ्गमधिष्ठानं पाददीर्घं गुणांशकम्
तदर्धं प्रस्तरोत्सेधं ग्रीवोच्चं तु गुणांशकम् ३६

शिखरोच्चं द्विभागं स्यात्स्तूपिकोच्चं शिवांशकम्
प्रस्तरोर्ध्वे द्विभागेन चान्तरं प्रस्तरान्वितम् ३७

उत्सेधदशभागे तु वेदितुङ्गं शिवांशकम्
पादतुङ्गं गुणांशं स्यात्त्रिपादांशकमञ्चकम् ३८

वेदिकोच्चं तु पादांशं कन्धरोच्चं शिवांशकम्
शिरस्तुङ्गाश्विनीभागे चोर्ध्वं कुम्भं शिवांशकम् ३९

तदूर्ध्वे ग्रीवमंशेन पूर्ववत्समलङ्कृतम्
अथवा मनुभागं तु हर्म्यतुङ्गं विभाजिते ४०

सत्रिपादमधिष्ठानं तद्द्वयं चाङ्घ्रिहि भाजिते
तदर्धं प्रस्तरोत्सेधं युगांशांघ्रि तुङ्गकम् ४१

तदर्धं शिखरोत्तुङ्गं तदूर्ध्वे स्तुपिकमंशकम्
ग्रीवमञ्चोर्ध्वमंशेन यथेष्टाधिष्ठानसंयुतम् ४२

तदूर्ध्वे च द्विभागेन कर्णहर्म्यादिमण्डितम्
शेषं च कन्धरं प्रोक्तं पूर्ववत्समलङ्कृतम् ४३

अथवा हर्म्यतुङ्गे तु षोडशांशं विभाजिते
अधिष्ठानं द्विभागं स्यात्पादतुङ्गं युगांशकम् ४४

प्रस्तरं चाश्विनीभागं चोर्ध्वे भागं विशेषतः
मनुभागं युगांशं स्यात्प्रस्तरं च द्विभागिकम् ४५

तत्समं ग्रीवतुङ्गं स्याद्युगांशं शेखरोदयम्
तदर्धं स्तूपिकोत्तुङ्गं चाष्टवर्गमिति स्मृतम् ४६

मूलहर्म्यविशाले तु चाष्टभागं विभाजिते
षड्भागमूर्ध्वतले कुर्यात्तद्विस्तारमिति स्मृतम् ४७

ऊर्ध्वाङ्गं पूर्ववत्कुर्यात्सर्वालङ्कारसंयुतम्
तदेवाष्टांशकं चोर्ध्वे पादतुङ्गं द्व्यंशकम् ४८

तदर्धं मञ्चतुङ्गं स्यात्तत्समं कन्धरोदयः
द्व्यर्धांशं शिखरोत्तुङ्गं चाध्यर्धांशं शिरोदयः ४९

ऊर्ध्वे पादोदये बन्धुभागमेकांश वेदिकम्
शेषं पूर्ववत्कुर्यादष्टवर्गविदो विदुः ५०

वेदवृद्ध्याष्टभागं स्याज्जन्मादिस्तूपिकान्तकम्
अधिष्ठान युगांशं स्यात्पादाधिक पालकांशकम् ५१

प्रस्तरोच्चं युगांशं स्यादूर्ध्वे पादं शरांशकम्
तदूर्ध्वे द्व्यंशमञ्चं स्याद्वेदिकोच्चं शिवांशकम् ५२

ग्रीवतुङ्गं द्विभागं स्याच्छिखरोच्चं वेदभागिकम्

स्तूपिकोच्चं द्विभागं स्यात्कर्णहर्म्यादिमण्डितम् ५३

एतदष्टविधं प्रोक्तमेकभूमिविधानके
विमानं समयं हर्म्यं चालयं वा चाधिष्ण्यकम् ५४

प्रासादं भवनं क्षेत्रं मन्दिरायतनं तथा
वेश्म च गृहमावासं क्षयं धाम सनातनम् ५५

वासं गेहमागारं वा सदनं वसितं गृहम्
निलयं तल कोष्ठं च स्थानं पर्यायवाचकम् ५६

विमानस्य तु विस्तारे त्रिभागं चांशकं गृहम्
हर्म्यतारे तु भूतांशं त्रियंशं गर्भगेहकम् ५७

गेहतारे तु सप्तांशं नालीतारं युगांशकम्
नालीतारं युगांशं स्याच्छरांशं गृहविस्तृतम् ५८

क्षयं व्यासं च रुद्रांशं षड्भागं कोष्ठविस्तृतम्
सैकार्कभागविस्तारे सप्तांशे नालिके गृहम् ५९

पञ्चादशांशकं तारे साष्टांशं गर्भगेहकम्
विस्तारे च द्विभागे तु चैकांशं तुङ्गविस्मृतम् ६०

शेषं कुटय विशालं स्याद्गर्भगेहावृतं तथा
अदातलभूरपि कोस्तास वितलान्तं मूलगृहम् ६१

अत्रगृह विमानविधिमाशाप गृहं नालिकाविक
विमानमिदमुक्तं स्याद् यमागतारानां गृहतारम् ६२

यत्तत्कुटयविशालं तु द्वादशांश विभाजिते
पञ्चांशं तु बहिःकुर्यात् सान्त सप्तांशकं त्यजेत् ६३

तद्द्वयोर्मध्यदेशे तु वारथास्य मध्यमे
एतद्बहि स्थितस्तम्भं तदुच्चान्तरितोच्यते ६४

तत्पादमध्यमोच्यान्तमङ्गुलादङ्घ्रिमध्यमम्
एवं तु मध्यमं श्रेष्ठं हर्म्ये द्वारस्य योगतः ६५

क्षुद्रहर्म्ये तु युक्त्या च कुर्यात्तु शिल्पिवित्तमः
अन्तस्तम्भ विना वापि कुर्याद्बाह्यस्तु पादकम् ६६

विभजेत्पञ्चषष्टाष्टहर्म्यपादोदयं तथा
तत्तदेकांशहीनं स्याच्छुद्धद्वारोदयं भवेत् ६७

तदर्धं द्वारविस्तारं देवाणां हर्म्यमध्यमे
नागनन्दाङ्गुलारभ्य द्विद्व्यङ्गुलविवर्धनात् ६८

एकहस्तावसानान्तं कन्यसादि त्रयं त्रयम्
द्वारपादस्य विस्तारं क्षुद्रहर्म्येषु योग्यकम् ६९

चतुर्विंशाङ्गुलं पञ्चविंशत्यङ्गुलमारभेत्
द्विद्व्यङ्गुलेन वृद्धिः स्यात्कन्यसादीनि पूर्ववत् ७०

चत्वारिंशाङ्गुलं चैकचत्वारिंशाङ्गुलान्तकम्
मध्यमं मानहर्म्ये तु द्वारपादस्य विस्तृतम् ७१

द्विहस्तं तु समारभ्य त्रित्र्यंङ्गुलविवर्धनात्
तत्रिहस्ताविधिर्यावदधमादि त्रयं त्रयम् ७२

एवं तु द्वारपादं स्याद्विस्तारं चोत्तमालये
केचित्तु द्वारपादोच्चवशाद्द्वाराङ्घ्रिविस्तृतम् ७३

द्विहस्तं तु विशालं स्यात्समं वा बहुलं भवेत्

तदर्धं वा त्रयांशैकं द्वारपादस्य तत्तथा ७४

द्वारायामसमं पादौ चोर्ध्वयो पट्टिकाघनौ
सहैव विस्तृतं दीर्घं पादयुक्त्या प्रयोजयेत् ७५

देवभूसुरभूपानां सामन्तप्रमुखादीनाम्
योन्यं कवाटयुग्मं च श्रेष्ठं मध्यं च हर्म्यके ७६

अन्तर्वापि बहिर्वापि घाटनं कीलसंयुतम्
द्वारपादं च बाह्ये तु सर्वालङ्कारसंयुतम् ७७

द्वारोर्ध्वे द्वारपार्श्वे तु कुर्यात्तु द्वारदेवताम्
कवाटद्वारदेवानां स्पृष्टदोषं समावहेत् ७८

तस्मात्परिहरेच्छिल्पी चान्तस्तम्भं प्रयोजयेत्
जन्मादि पट्टिकान्तं च पञ्चांशं तु यथाविधि ७९

देवतास्थापनं कुर्याद्बाह्ये नालं प्रयोजयेत्
मसूराणां स्थानं स्यादनर्थं विप्रनालिका ८०

विस्तारायाममुत्सेधं लम्बनं वक्ष्यतेऽधुना
अष्टपङ्क्तिस्तथा भानुर्मनु षोडशकाङ्गुलम् ८१

पञ्चधा रुचितं नालं विस्तारं परिकीर्तितम्
वितस्त्याः स्तूपिहस्तान्तं पञ्चधायाममीरितम् ८२

एतत्क्षुद्रा विमाने तु मध्यदेशस्य वामके
पूर्वदिक्चोत्तरे वापि युक्त्या नालं प्रयोजयेत् ८३

यथापुर्वोक्तमाने तु तदूर्ध्वे च गुणांशकम्
मध्यमे चोत्तमे हर्म्ये दन्तनालं प्रमाणकम् ८४

यथाधिष्ठानतुङ्गं तत्समं नालोदयं भवेत्
उत्सेधे च त्रिभागैकं तस्याधो चाग्रलम्बनम्  ८५

नालमूलविशाले तु भूतभागं विभाजिते
त्रयांशं चाग्रविस्तारं लम्बनं पञ्चभागिकम्  ८६

कुड्मलोच्च त्रिभागं स्यात्पद्ममेकेन कारयेत्
तदूर्ध्वे वाजनं चांशं युक्त्या च समलङ्कतम्  ८७

धराय वाध वृत्तं वा भद्रतारं स्वलङ्कतम्
एकद्वित्र्यङ्गुलं वापि चतुष्पञ्चाङ्गुलेन वा  ८८

मूलविस्तारमुत्सेधं युक्त्याच्छिद्रं प्रकल्पयेत्
मूलपादत्र्यंशेन चाग्रे छिद्रं विशालकम्  ८९

मूले तुङ्गं स वक्त्रं स्यात्तदा स्यान्निर्गमोदयम्
रम्भानालं प्रसूनाभं कुर्यात्तच्छिल्पिवित्तमः  ९०

शीर्षं च शिखा ग्रीवं वृत्तं स्याद्वैजयन्तिकम्
तदेव कर्णकूटं चेद्वा भोगमिति कीर्तितम्  ९१

तन्मध्ये भद्रसंयुक्तं श्रीविशालमिति स्मृतम्
तदष्टाश्रं शीर्षं स्यात्स्वस्तिबन्धमिति स्मृतम्  ९२

तदवं चतुरश्रं चेच्छिखरं श्रीकरं भवेत्
तद्द्व्यश्रवृत्तसंयुक्तं हस्तिपृष्ठमुदाहृतम्  ९३

शिरो ग्रीवे षडश्रं स्यात्स्कन्धतारमिहोच्यते
मध्ये भद्र विशालं स्यात्कर्ण कूटोपसंयुतम्  ९४

तच्छालाभद्रनास्यङ्गं शिरो ग्रीवं तु वृत्तकम्

अथवा चतुरश्रं स्यात्केसरं तत्प्रकथ्यते ९५

तदेवाकारमायामं तत्तन्नाम्ना प्रकीर्तितम् ९६

एवं प्रोक्तं हर्म्यके मध्यभद्रं
शालाकोष्ठं दिग्विदिक् कूटयुक्ता
हारा श्रान्ता नासिका पञ्जराढ्यं
कुर्यात्सर्वं वेदिकाभद्रयुक्तम् ९७

हर्म्यतारसमं चतुरंशकं तत्त्रिपादमर्धमथापि च
कुड्यतारसमादि यथाक्रमम्
कन्यसं त्रिविधं मुखमण्डपम्
तन्मुखमण्डप मुख्यविमाने ९८

मध्यविमानस मण्डपपार्श्वे
अम्बरं दण्डमथ द्वयदण्डम्
हर्म्यवशादुपवेशनयुक्तम्
यत्तत्क्षुद्रविमाने तन्मुखे मण्डपं स्यात् ९९

तद्द्वयोर्मध्यदेशे चैकाद्यर्धं हस्तविस्तारम्
अथवा त्रिपादहस्तं स्यात् प्रासादार्धमथ कथितम् १००

एकद्वित्रिदण्डं वा चान्तरालस्य वेशनं स्यात्
कुम्भे स्तम्भसहितनासिका पञ्जरयुक्तमेव वा १०१

शालापञ्जरयुक्तं तोरणैः समलङ्कृत्य युक्त्या
एकद्वित्रिचतुर्हस्त्या स्तम्भयुक्तमिति कथितम् १०२

अथवा द्वारयुतं पूर्ववद्द्वारमानेन कुर्यात्
तद्द्वारमुखसोपानं हस्तिहस्तेन भूषितं सम्यक् १०३

युग्ममण्डपदेशे तत्सममूलेवमलङ्कृत्य
अन्यमण्डपदेशे यन्मानोरम्यमलङ्कृत्य १०४

मण्डपे प्रस्तरस्योर्ध्वे कर्णहर्म्यादिमण्डितम्
यत्तन्नामान्तरालं चोर्ध्वे नासिकाजालपञ्जरं वापि १०५

तत्तन्मण्डपमध्ये प्रासादवशाद्द्वारं संकल्प्यम्
पूर्ववत्कवाटयुक्तं मण्डपस्यान्तः सकीलयुक्तम् १०६

तत्तद्बहिर्द्वारदेवा न्यसेदेतद्द्वारपार्श्वयोश्चैव
नन्दिमहाकालादौ चोक्तवद् द्वारदेवा न्यसेत् १०७

मण्डपे दक्षिणे कोष्ठे नृत्तयुक्तैव विनायकमुक्तम्
मण्डपसौम्यकोष्ठे स्थानदुर्गयुक् स्थापयेत्तत्स्थम् १०८

प्रासाददक्षिणे मध्यकोष्ठे व्यानदक्षिणामूर्तिम्
तदूर्ध्वे ग्रीवकोष्ठे गेयमूर्तिं वीरभद्रं वापि १०९

पश्चिममूलतले मध्ये कोष्ठे लिङ्गमुद्भूतम्
अथवार्धनारीश्वर स्थानकं विष्णुं स्थापयेद्वापि ११०

तदूर्ध्वे ग्रीवकोष्ठे तु केशवनृसिंहाच्युतासीनम्
सौम्यके मूलतले कोष्ठे स्थानकं चतुर्मुखं स्यात् १११

तदूर्ध्वे ग्रीवकोष्ठेऽथ नदं कमलं वापि
पूर्वे गलदेशे मध्यकोष्ठे गुहं गजारूढम् ११२

निशापतिं वाथ सर्वया तत्तद्देव्या सहासनमुक्तम्
इन्द्रस्य दक्षिणद्वारात्परितः षोडशविग्रहं कुर्यात् ११३

प्रस्तरोपरि देशे कोणे कोणे स्थापयेद्वृषभम्

कर्णैकमेकमूर्ध्वं च द्वयं वाथ वृषभसंयुक्तम् ११४

एकानेकतलं सर्वमेतद्देवान्पुराणसंयुक्तम्
एवं शिवहर्म्याणां योग्यं विनोदमन्यदेवानाम् ११५

तत्तद्द्वारमुक्तं एकानेकतलोपेतं सर्वम्
अथवा विष्णुविमाने देवस्थापनं वक्ष्यामः ११६

द्वारे चण्डप्रचण्डौ च मण्डपयाम्ये वनितम्
प्रागुक्तवत्सौम्यदेशे विमाने पूर्ववद्देवतां वापि ११७

हरिं वा गरुडं वा कुर्यात्पुरतोक्तचतुष्कोणे
शयनं वासनं सिंहं तार्क्ष्यं कृताञ्जल्यासनयुक्तम् ११८

पोत्री नृसिंहमथ केशवमश्वत्थं कर्णात्पूर्वादिदिक्षु चतुर्षु
पूर्वकान्तहर्म्यैकभूमिगलदेशमिति प्रतिष्ठां कुर्यात् ११९

दुर्गमभिमथासनमच्युतं वा
प्राच्यां दिशि द्वितलहर्म्ये गलप्रदेशे
श्रीमाधवं नरहरिं कृत दक्षिणे च
नारायणं चाथ पश्चिमदिक् प्रदेशे १२०

क्रोडं चोत्तर जनार्दनहर्म्यके तत्
त्रितले पूर्वदिग्देशे ग्रीवे तच्छ्रीधरं न्यसेत् १२१

उत्तरे वासुदेवं चाथवान्यसंकर्षणं स्मृतम्
अनिरुद्धं पश्चिमदेशे चोर्ध्वे वा तदधो तले १२२

एवं तु चोक्तवत्कृत्वा बौद्धादिजिनकालयम्
तत्तद्विमानयोर्ध्वे तु तत्तद्देवान्न्यसेत्क्रमात् १२३

अन्येषां देवदेवीनां विमाने तत्तद्विधानतः
सर्वेषां हर्म्यके कुर्यात्तत्तद्वाहनमीरितम्  १२४

शयनं वासनं वापि प्रस्तरस्योपरि न्यसेत्
एवं तत्प्रोक्तवत्कुर्याद्धर्म्यं तत्सम्पदांपदम्  १२५

एकभूमिं कुर्यादधिकं चोपपीठ रुचिरार्थं संयुतम्
सोपपीठभवनैर्युतं तु वा कारयेत्तु कथितं पुरातनैः  १२६

एवं सर्वहर्म्यालङ्कारयुक्त्या
नानापादैर्वेदिकातारमञ्चम्
हीनाधिक्यं चेद्विनाशनं तस्मात्
कुर्यात्सर्वं चोक्तवत्सम्पदार्थम्  १२७

इति मानसारे वास्तुशास्त्रे एकभूमिविधानं नाम एकोनविंशोऽध्यायः

## द्वितलविधानम्

द्वितलानामलङ्कारं वक्ष्ये संक्षिप्यतेऽधुना
विस्तारोत्सेध हर्म्ये वा पूर्ववत्परिकल्पयेत्  १

उपानादिस्तूपिपर्यन्तं अष्टाविंशद्विभाजिते
अधारोच्चं गुणांशं स्यात्पादतुङ्गं षडंशकम्  २

बन्ध्वशं प्रस्तरोत्सेधं चोर्ध्वे पादं शराशकम्
तदूर्ध्वे पादमञ्चोर्ध्वे शिवांशं वेदिकोदयम्  ३

तद्द्वयं कन्धरोत्सेधं वेदांशं शिखरोदयम्
तदूर्ध्वे स्तूपियुग्मांशं तुङ्गं तु परिकल्पयेत्  ४

एकत्रिंशांशकं तुङ्गं सार्धबन्ध मसूरकम्
सप्तांशं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम्  ५

तदूर्ध्वेऽर्धमधिष्ठानं द्व्यंश वेदाङ्घ्रितुङ्गकम्
तदर्धं प्रस्तरोत्सेधं तदर्धं वेदिकोदयम् ६

तद्द्वयं वेदितुङ्गं स्याच्छिखरोच्चं युगांशकम्
स्तूपितुङ्गं द्व्यांशं स्याद्द्वितले तद्द्वितीयकम् ७

तदेवोर्ध्वमधिष्ठानं विमानांशे कवितस्तिकम्
तदूर्ध्वेऽङ्घ्रि शरांशं स्यात्कर्णहर्म्यादिमण्डितम् ८

शेषं तु पूर्ववत्कुर्यात्तृतीयद्वितलं भवेत्
तुङ्गे द्विरष्टभागं स्यादध्यर्धांशं मसूरकम् ९

गुणांशं चाङ्घ्रितुङ्गं स्यात्प्रस्तरं सार्धभागिकम्
तदूर्ध्वमंशमधिष्ठानं तदूर्ध्वे द्व्यंशकाङ्घ्रिकम् १०

शिवांशं प्रस्तरोत्तुङ्गं त्रिपादं वोर्ध्वमसूरकम्
पादांशं वेदिकोत्तुङ्गं सपादांशं गलोदयम् ११

द्व्यर्धांशं शिरतुङ्गं स्यात् पादांशं शिखरोदयम्
चतुर्थं द्वितलं प्रोक्तं तदेव शिखरं विदुः १२

लम्बनं सार्धभागेन गोपानादि क्रियान्वितम्
शेषं प्रागुक्तवत्कुर्यात्पञ्चधा द्वितलं विदुः १३

एकादशांशकं तुङ्गमेकांशेन मसूरकम्
अग्निकाङ्घ्रितुङ्गं स्याच्छिवांशं प्रस्तरोदयम् १४

तदूर्ध्वे चोपपीठं स्यात्तत्समं च मसूरकम्
तद्द्वयं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम् १५

तत्समं वेदितुङ्गं स्याच्छिवांशं गलतुङ्गकम्

शिखरोच्चं द्विभागं स्यादेकांशं स्तूपिकोदयम्  १६

षष्ठमं द्वितलं प्रोक्तं सप्तमं वक्ष्यतेऽधुना
एकादशांशकं तुङ्गे चैकांशेन मसूरकम्  १७

द्विभागं पादतुङ्गं स्यात्प्रस्तरं चाम्बरांशकम्
कुर्यात्तत्र वनं चोर्ध्वे त्रिपादांश मसूरकम्  १८

तद्द्वयं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम्
तदूर्ध्वेऽङ्घ्रि सपादांशं एकांशं प्रस्तरोदयम्  १९

पादांशं वेदिकोत्तुङ्गं तद्द्वयं गलतुङ्गकम्
शिखरोच्चं शिवांशं स्यात्तदर्धं तच्छिखोदयम्  २०

द्वितले सप्तकं प्रोक्तं त्रयाङ्घ्रिकर्णहर्म्यकम्
तदेवांशाधिकं तुङ्गे तन्मूले प्रस्तरोर्ध्वके  २१

त्र्यंशेन चोपपीठं स्यादधिकं द्वितलं स्मृतम्
एवं दण्डवशात्कुर्यान्निर्गमं तदिहोच्यते  २२

प्रागुक्तविस्तृतं बाह्ये निर्गमं परितस्तथा
एकदण्डं द्विदण्डं वा त्रिदण्डं निर्गमं स्मृतम्  २३

एकहस्तं द्विहस्तं वा त्रिहस्तं वाथ निर्गमम्
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात्  २४

एकादशार्कहस्तान्तं पञ्चधा निर्गमं भवेत्
पञ्चषट्करमारभ्य द्विद्विहस्तविवर्धनात्  २५

सैकार्कमनुहस्तान्तं निर्गमं पञ्चधा भवेत्
क्षुद्राल्पमध्यमुख्यानां युक्त्या तत्रैव योजयेत्  २६

अथ हर्म्यविशालार्धं तत्समं निर्गमं तु वा
यत्तद्भक्तिविशले तु कूटमेकैकभागिकम् २७

एकं वाथ द्विपादं वा तस्य हारा विशालकम्
द्विभागं वा त्रिभागं वा मध्यशालाविशालता २८

हर्म्ये चोर्ध्वतले पादं बाह्यकूटादि विन्यसेत्
कर्णहर्म्याकृतिं वाथ चान्तरं प्रस्तरं तु वा २९

त्रिचतुः पञ्चाङ्गुलं वापि द्वितलेऽङ्घ्रि विशालकम्
तच्चतुः पञ्चषट्सप्तसाष्टांशाङ्घ्रिविशालके ३०

तत्तदेकांशहीनं स्यादूर्ध्वे पादविशालकम्
शाला कूटश्च पादौ च बाह्ये मध्यान्तरालकम् ३१

नासिकापञ्जरैः शालाकुम्भपादादिभूषितम्
तोरणैर्नीडभद्रादि मूले चोर्ध्वे च भूषितम् ३२

नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम्
नानागोपानसंयुक्तं क्षुद्रनास्यैर्विभूषितम् ३३

अर्धशालाविशेषोऽस्ति चोर्ध्वशालासमन्वितम्
तदूर्ध्वे प्रस्तरान्तः स्यान्नासिकाभिरलङ्कृतम् ३४

कूटानां चतुरश्रं स्यान्मध्ये मध्यं तु नासिका
एकद्वित्रिचतुर्दण्डं मध्यभद्रैस्तु निर्गमम् ३५

चतुःशाला चतुःकूटं चाष्टभारं सपञ्जरम्
एकदण्डार्धदण्डं वा चोर्ध्वकूटादिवेशनम् ३६

मध्यकोष्ठे द्विपार्श्वे तु चार्धशालासमन्वितम्

तदूर्ध्वे मध्यमे नासि तत्पार्श्वे वक्त्रनासिकम्  ३७

तत्पार्श्वं शालयोः पार्श्वे क्षुद्रनास्यैर्विभूषितम्
कूटकोष्ठादिसर्वाङ्गं युक्त्या तु समलङ्कृतम्  ३८

शेषं तु पूर्ववत्कुर्यात्कर्णहर्म्यादि चोक्तवत्
सप्ताष्टक द्विभूम्ये तु शेषाणां वक्ष्यतेऽधुना  ३९

विस्तारार्धद्विगुणं वा त्रिगुणं वा तदुच्छ्रयम्
तन्मुखे मण्डपाग्रे तु कुर्यदधिकमण्डपम्  ४०

तत्पुरे मध्यमे द्वारं गवाक्षं वाथ कल्पयेत्
दक्षिणे मध्यमे द्वारं स्यादग्रे मध्यमण्डपम्  ४१

चतुर्द्वारसमायुक्तं पूर्वे सोपानसंयुतम्
तद्धनं तलसर्वाङ्गं कूटकोष्ठादिभूषितम्  ४२

सोपपीठमधिष्ठानं सोपपीठ मसूरकम्
तदूर्ध्वे पादमञ्चं च संयुक्तं तत्त्रिबर्हकम्  ४३

पूर्ववन्मानयुक्त्या च विमानान्तस्य निर्गमम्
कुर्यात्तत्पादतुङ्गेषु षड्भागांशविहीनकम्  ४४

प्रस्तरस्योपरि न्यस्य चान्तर्मण्डलकुटचकम्
कर्णहर्म्यादिसंयुक्तं सर्वालङ्कारसंयुतम्  ४५

आरोप्यं प्रदक्षिणं सौम्यमेवं प्रकल्पयेत्
शेषं तु पूर्ववत्कुर्यात्सर्वदेवांश्च सद्मके  ४६

श्रीकरं विजयं सिद्धं पौष्टिकान्तकं प्रभूतकम्
स्वस्तिकं पुष्कलं नाम प्रथमाद्यष्टसद्मके  ४७

पूर्ववच्चोक्तदेवानां सर्वहर्म्येषु योजयेत्
अथवा विष्णुहर्म्ये तु गले पूर्वे जनार्दनम् ४८

दक्षिणे दक्षिणामूर्तिं नारसिंहमथापि वा
पश्चिमे केशवं प्रोक्तं चोत्तरे श्रीधरं भवेत् ४९

अथवा पितामहं स्यान्नागरादौ च हर्म्यके
द्वारदेवादि सर्वेषां पूर्ववत्कल्पयेत्सुधीः ५०

तदेव शिवहर्म्ये तु मण्डपे तु विशेषतः
सौम्ये तु कालरूपं वा प्रोक्तवांस्तत्रदैवतम् ५१

स्थापयेत्क्षेत्रपालानां षण्मुखं चापि कल्पयेत्
आरोग्यं हर्म्यमूले तु कर्णहर्म्यात्प्रवेशयेत् ५२

सर्वेषां देवताहर्म्ये पूर्ववद्देवता न्यसेत्
उक्तवच्छाखमार्गेण ऊहापोहेन योजयेत् ५३

वेदाश्रान्तं वर्तुलाभं गजाश्रं
वृत्ताश्राभं द्व्यश्रवृत्तं तमेव च
तद्दीर्घं तच्छिरोग्रीवयुक्तम्
उक्तं प्रागवद्भूषणादि द्विभूमौ ५४

हाराप्रान्ते द्व्यंशकैकांशमलिन्दम्
मञ्चस्योर्ध्वे चावृत प्रस्तरं च
आरुह्य सार्धहर्म्यमूलं यद्
युक्त्या भक्त्या यन्मानोरम्यम् कुर्यात् ५५
इति मानसारे वास्तुशास्त्रे द्वितलविधानं नाम विंशोऽध्यायः

त्रितलविधानम्
त्रितलस्य विधानं च लक्षणं वक्ष्यतेऽधुना

विमानतुङ्गं षदंशे तु सार्धांशेन मसूरकम् १

तद्द्वयं पादतुङ्गं स्यात्तर्धं प्रस्तरोदयम्
मूलपादोदयेऽष्टांशमधिकं चोर्ध्वाङ्घ्रितुङ्गकम् २

तदर्धं प्रस्तरोच्चं तु पादमूलद्विगुणाङ्घ्रिकम्
तदर्धं चोर्ध्वको पादं तस्यार्धं वेदिकोन्नतम् ३

तद्द्वयं चोर्ध्वकम्पं स्याद्ग्रीवतुङ्गं द्वयांशकम्
शेषं चोर्ध्वे शिखोत्तुङ्गं सर्वालङ्कारसंयुतम् ४

प्रच्छादनोपरि स्तम्भं कर्णहर्म्यादिमण्डितम्
विस्तारोत्सेधभक्तमेषां यत्तत्प्रागुक्तवन्नयेत् ५

श्रीकान्तं हर्म्यकं प्रोक्तं क्षुद्रं त्रितले विदुः
अथवा सप्तसप्तांशं विभजेत्त्रितलोदये ६

चतुर्भागमधिष्ठानं तद्द्वयं पादतुङ्गकम्
अधिष्ठानसमं मञ्चं मञ्चोर्ध्वेऽर्धेन वप्रयुक् ७

सत्रिपादषडंशेन चोर्ध्वे पादोदयं भवेत्
तदूर्ध्वे प्रस्तरोत्तुङ्गं सत्रिपादं त्रिपादकम् ८

तदूर्ध्वेऽर्धेन वप्रं स्यात्तदूर्ध्वेऽङ्घ्रि षडंशकम्
सार्धद्विभाग मञ्चं स्यादर्धांशमूर्ध्वपट्टिकम् ९

एकांशं वेदिकोत्तुङ्गं ग्रीवतुङ्गं गुणांशकम्
तद्द्वयं शिखरतुङ्गं स्याद्गुणांशं तच्छिखोदयम् १०

शेषं प्रागुक्तवत्कुर्यादासनं परिकीर्तितम्
अथवा त्रितलोत्तुङ्गं द्वादशांशं विभाजिते ११

तदेकांशमधिष्ठानं द्विभागं पाददीर्घकम्
तदर्धं प्रस्तरोत्सेधं त्रिपादं चोर्ध्वपीठकम् १२

तत्समोर्ध्वे त्वधिष्ठानं तद्द्वयं पाददीर्घकम्
तदर्धं प्रस्तरं चोर्ध्वे सार्धांशेन मसूरकम् १३

एकांशं पाददीर्घं स्यादर्धांशं मञ्चतुङ्गकम्
तदर्धं वेदिकोत्तुङ्गं तद्द्वयं ग्रीवतुङ्गकम् १४

ग्रीवतुङ्गद्वयं चोर्ध्वे मस्तकमर्धं शिखोदयम्
एवं सुखालयं प्रोक्तं शेषं पूर्ववदाचरेत् १५

तस्योपपीठदेशेतु चोद्धृता हरितान्वितम्
एतत्तु केसरं प्रोक्तं कमलाङ्गमिहोच्यते १६

चतुर्विंशांशकं तुङ्गे श्रीकान्तस्याकृतिस्तथा
सर्वाङ्गकं गवाक्षं स्यात् कर्णहर्म्यं विना तथा १७

नानावेदिकया युक्तं नानास्तम्भैरलङ्कृतम्
चतुर्दिग्वारणं कुर्यात्संकीर्णं द्रव्यसंयुतम् १८

आदिभूतं तु कुटचं स्यात्तदूर्ध्वेत्यङ्घ्रिसंयुतम्
सर्वालङ्कारसंयुक्तं कमलाङ्गमुदीरितम् १९

तदेव कर्णहर्म्यादियुक्तं वेद्यादिभूषितम्
सर्वालङ्कारसंयुक्तं ब्रह्मकान्तमिति स्मृतम् २०

अथवा तुङ्गमाने तु त्रिंशदंशं विभाजिते
अधिष्ठानं द्विभागं स्यात्तद्द्वयं पादतुङ्गकम् २१

तदर्धं प्रस्तरोत्तुङ्गं चोर्ध्वमञ्चं तु तत्समम्

सार्धवह्न्यंशकं चोर्ध्वे पादं सार्धांश मञ्चकम्  २२

तत्समं चोर्ध्वमञ्चं स्यादूर्ध्वे पादं गुणांशकम्
सपादांशं प्रस्तरं स्यात्तत्समं चोर्ध्वमञ्चकम्  २३

तदर्धं वेदिकोत्तुङ्गं तत्समं कन्धरोदयम्
ग्रीवद्वयं शिरोत्तुङ्गं शेषं तु स्तूपितुङ्गकम्  २४

कर्णहर्म्यादिसंयुक्तं मेरुकान्तमिति स्मृतम्
तदेवैकांशमाधिक्यं मूले वह्न्यंशमासनम्  २५

तद्द्वयं पाददीर्घं स्यात्तदर्धं प्रस्तरोदयम्
ऊर्ध्वाङ्गं पूर्ववत्कुर्यादेतत्कैलासमीरितम्  २६

आरुह्य प्रदक्षिणं कुर्याद्धर्म्यमेवं तु पूर्ववत्
एतदष्टविधं प्रोक्तं त्रितले चोत्तमं मतम्  २७

विशाले तु यथाभागं कूटानां चैकभागिकम्
मध्ये द्वित्रिचतुर्भागं शालाकोष्ठं प्रकल्पयेत्  २८

एकद्वित्र्यंशकेनैव हारां सपञ्जरान्वितम्
परितश्चैकभागेन कूटशालादिभूषितम्  २९

तस्यान्तश्चावृतांशेन चोर्ध्वदेशे जलस्थलम्
एकं वा द्वित्रिदण्डेन भद्रनिर्गममीरितम्  ३०

हारा च तत्त्रिभागैकं मध्यशालाविभूषितम्
अष्टकूटसमायुक्तं कोष्टकं चाष्टसंयुतम्  ३१

षोडशाहार संयुक्तं सर्वालङ्कारसंयुतम्
नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम्  ३२

नानातोरणैर्नीडैर्नानावेद्यैरलङ्कृतम्
त्रितले कूटकोष्ठादि हारादीन् गलदेशके ३३

मूलपादप्रदेशे तु कुर्यात्तु सर्वदेशताः
देवादीनां पुराणैश्च देवतानां च विग्रहम् ३४

युक्त्या सर्वप्रयत्नेन विन्यसेल्लक्षणोक्तवत्
ग्रीवादिसचिवान्तश्च पूर्वोक्तानां च संमतम् ३५

ग्रीवमस्तकशिखाप्रदेशके
नागरादिसमलङ्कृतोक्तवत्
देवता दिशि चाष्टतो न्यसेद्
विष्णु रीश्वरजिनादिरालये ३६

इति मानसारे वास्तुशास्त्रे त्रितलविधानं नाम एकविंशोऽध्यायः

## चतुस्तलविधानम्

चतुस्तलविधानस्य लक्षणं वक्ष्यतेऽधुना
विस्तारोत्सेधभित्तीश्च पूर्ववत्परिकल्पयेत् १

तुङ्गे चैकोनविंशांशमत्यर्धांश मसूरकम्
तद्द्वयं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम् २

सत्रिपदं च भागं वा तदूर्ध्वे पादोदयं भवेत्
प्रस्तरोच्चं शिवांशं स्यात्सत्रिपादांशमङ्घ्रिकम् ३

ऊर्ध्वमञ्च त्रिपादं स्यात्तद्द्वयं चोर्ध्वपादकम्
तदर्धं प्रस्तरोत्सेधं वेदिकार्धेन योजयेत् ४

त्र्यंशेन गलतुङ्गं स्यात्तद्द्वयं शिरतुङ्गकम्
तदर्धं स्तूपिकोत्तुङ्गं मूलतः परिकल्पयेत् ५

विष्णुकान्तमिति प्रोक्तं कर्णहर्म्यादिभूषितम्
चत्वारिंशद्द्वयाधिक्यं भागतुङ्गे विभाजिते ६

अधिष्ठानं त्रिभागं स्यात्तद्द्वयं पादतुङ्गकम्
प्रस्तरोच्चं गुणांशं स्यादूर्ध्वे पादं रसांशकम् ७

सार्धद्विभागमञ्चं स्यात्सार्धवेदाङ्घ्रितुङ्गकम्
तदर्धं प्रस्तरोत्सेधं पादोनं चतुरङ्घ्रिकम् ८

प्रस्तरं च त्रिभागं स्यात्तदर्धं वेदिकोन्नतम्
गलोच्चं तद्द्विभागं स्याद्युगांशं मस्तकोदयम् ९

द्वयांशं स्तूपिकोत्तुङ्गं तस्य मूले विशेषतः
विस्तारे भागिकांशेन चावृतालिन्दमेव च १०

तद्बहिश्चैकभागेन मूलपादाग्रकान्तकम्
अधिष्ठानादिवर्गाढ्यं कर्णहर्म्यादिमण्डितम् ११

एतच्चतुर्मुखं प्रोक्तं सर्वालङ्कारसंयुतम्
पञ्चषट्त्रिंशदंशं स्यात्तुङ्गार्धांश मसूरकम् १२

पञ्चांशं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम्
ऊर्ध्वे वेदांशकं पादं प्रस्तरं च द्विभागिकम् १३

सार्धबन्धांशपादोर्ध्वं तदर्धं प्रस्तरोदयम्
तदूर्ध्वाङ्घ्रि गुणांशं स्यादत्यर्धं चोर्ध्वमञ्चकम् १४

वेदिकोच्चं शिवांशं स्यात्तद्द्वयं ग्रीवतुङ्गकम्
शिरीषं च युगांशं स्याच्छेषांशं तच्छिखोदयम् १५

मूले तु पूर्ववत्कुर्याच्चतुर्द्वारसमन्वितम्

एवं सदाशिवं प्रोक्तं सर्वालङ्कारसंयुतम् १६

भागेन चतुरष्टांशं हर्म्यतुङ्गं विभाजिते
द्विभागाधिष्ठानतुङ्गं तद्द्वयं पादतुङ्गकम् १७

युगांशं मञ्चतुङ्गं स्यादंशं चोर्ध्वमसूरकम्
तदूर्ध्वे पाद बन्धांशं गोपानोच्चं तदर्धकम् १८

तदूर्ध्वे कुट्टिमं चांशं सार्धपद्माङ्घ्रितुङ्गकम्
सपादांशं प्रस्तरोत्तुङ्गं त्रिपादूर्ध्वे मसूरकम् १९

सपादद्विशकं चाङ्घ्र चांशेन प्रस्तरोदयम्
तदर्धं वेदिकोत्तुङ्गं सार्धभागं गलोदयम् २०

शिखरोच्चं गुणांशं स्यात्तदर्धं तच्छिरोदयम्
रुद्रकान्तमिति प्रोक्तं कर्णहर्म्यादिभूषितम् २१

तदेव हर्म्यमूले तु पूर्ववत्परिकल्पयेत्
तच्चतुर्द्वारसंयुक्तं चांशेन भद्रसंयुतम् २२

एवमीश्वरकान्तं स्यादधिष्ठानादि क्रमान्नयेत्
तुङ्गे पञ्चदशांशं स्याद्द्व्यंशक मसूरकम् २३

पादतुङ्गं षडंशं स्यात्प्रस्तरोच्चं गुणांशकम्
तत्समं चोर्ध्वमञ्चं स्यात्तदूर्ध्वे पञ्जरांशकम् २४

तदर्धं प्रस्तरोत्सेधमूर्ध्वमञ्चं द्विभागिकम्
वेदिकोच्चं शिवांशं स्यात्सार्धद्विशं गलोदयम् २५

युगांशं चोर्ध्वपादं च द्व्यंशेन प्रस्तरोदयम्
तदूर्ध्वे त्वर्धमञ्चं स्यात्सार्धबन्धांशकाङ्घ्रिकम् २६

तदर्धं प्रस्तरोत्सेधं पादभागोर्ध्वमञ्चकम्
वेदिकोच्चं शिवांशं स्यात्सार्धद्विंशं गलोदयम् २७

मस्तकोच्चं शरांशं स्याच्छेषं कुम्भोदयं भवेत्
मञ्चकान्तमिति प्रोक्तं कर्णहर्म्यादिमण्डितम् २८

तदूर्ध्वे च विमानं च वेदिका वेदिकं तथा
सर्वालङ्कारसंयुक्तं शेषं पूर्ववदाचरेत् २९

तुङ्गे षड्विंशमंशेन चात्यर्धांशमसूरकम्
रुद्रात् पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम् ३०

सपादांशमधिष्ठानं द्व्यर्धांशमङ्घ्रितुङ्गकम्
तदर्धं प्रस्तरोत्सेधं तदूर्ध्वेऽशं मसूरकम् ३१

पादतुङ्गं द्विभागं स्यान्मञ्चतुङ्गं शिवांशकम्
पादोनद्विंशपादं स्यात्तदर्धं प्रस्तरोदयम् ३२

सपादांशाङ्घ्रितुङ्गं स्यात्तदर्धं प्रस्तरोदयम्
तदूर्ध्वे पादमेकांशं सार्धांशं प्रस्तरोदयम् ३३

तत्समं वेदितुङ्गं स्याद्ग्रीवतुङ्गं शिवांशकम्
शिखरोच्च द्विभागं स्याच्छेषं तत्स्तूपिकोदयम् ३४

मूले च मध्यमे चाग्रे देवतास्थापनं भवेत्
तदूर्ध्वे शिखराकारं कल्पयेत्तु चतुस्स्थले ३५

युक्तं विस्तार तत् बाह्ये वेदांशावृत मूलके
विस्तृतार्धं समं वापि यथायुक्तिवशान्न्यसेत् ३६

अधिष्ठानं च पादं च प्रस्तरं च त्रिवर्गिकम्

शालाकूटं च हारं च युक्त्या तत्रैव योजयेत् ३७

सर्वालङ्कारसंयुक्तं मूले प्रासादतो न्यसेत्
तदूर्ध्वे द्व्यंशमाश्रित्य कर्णहर्म्यादिमण्डितम् ३८

अथवा विस्तृतार्धेन प्राकाराकृतिरावृतम्
एकेन कर्णहर्म्यादि तस्यान्तर्जलतत् स्थलम् ३९

अथवा द्विंशमाश्रित्य लिङ्गं कुर्याद्विचक्षणः
तदूर्ध्वे विस्तृता बाह्ये द्विंशेनावृत पूर्ववत् ४०

तस्यान्तश्चोक्तवत्कुर्याद्भागमेवरलङ्कृतम्
एकेन कर्णहर्म्यादिमण्डितं चावृतं न्यसेत् ४१

भागेन परितोऽलिन्दं चोर्ध्वे तद्वज्जलस्थलम्
तत्तद्बाह्येऽपि सर्वाङ्गं कर्णहर्म्यादिमण्डितम् ४२

द्विभागेन तु मध्ये तु शालायामं तु विन्यसेत्
कूटानामेकभागेन शेषं हार सपञ्जरम् ४३

इन्द्रकान्तमिति प्रोक्तं क्षुद्र मध्ये च मुख्यके
तन्मुखे मण्डपं युक्तं तद्दक्षिणे मण्डपं स्यात् ४४

प्राग्दिशि सोपानमध्यानामूर्ध्ववासनराननम्
सालामूलस्य तन्मध्ये चोर्ध्वं तत्र समायुतम् ४५

शेषं पूर्ववदुद्दिष्टं चाष्टधा विधमीरितम्
क्षुद्रं मध्यं मुखं च कुर्याद्धर्म्यं सर्वदेवतानाम् ४६

अन्येषामुक्तमानं युक्त्या कुर्यात्पुरातनैः कथितम्
नानाधिष्ठानपादैश्च वलभिश्च बहुविधैः ४७

कूटनीडैश्च शालैश्च भद्रैर्दाष्टपादगर्भबहुतारैः
क्षुद्रैश्च नासागणैर्नानापञ्जरवेदितोरणमहानासैश्च वातायनैः ४८

कोष्ठैर्विद्याधराद्यैर्गर्भाधिपतिसुरान्भूषणं कुर्वते स्म ४९

क्षुद्रमन्यमथ मुख्य भौमके
रुद्रविष्णुजिनकादिहर्म्यके
दक्षिणामूर्तिनरसिंहमूर्तितत्त्वादि
मूर्तिपुरतोक्तदेवानाम् ५०

एवं मूर्तिं दक्षिणादिक्रमेण
एकानेकभौमतलस्थलादीन्
कुर्यात्सर्वं ग्रीवदेशे पतित्वाद्
युक्त्या धीमान् देवतां विन्यसेत्तत् ५१

इति मानसारे वास्तुशास्त्रे चतुस्तलविधानं नाम द्वाविंशोऽध्यायः

## पञ्चतलविधानम्

पञ्चभूमिविधानस्य लक्षणं वक्ष्यतेऽधुना
क्षुद्र मध्यं च मुख्यं च विशालं भागमुच्छ्रयम् १

प्रागुक्तवत्प्रगृह्यं तु कुर्यात्पञ्चतलं बुधः
चतुर्विंशांशकं तुङ्गं सात्यर्धांशमसूरके २

बन्धांशं पादतुङ्गं स्यादत्यर्धं प्रस्तरोदयम्
सपादद्विंशकं पादं मञ्चोर्ध्वं सशिवांशकम् ३

तदूर्ध्वेऽङ्घ्रि द्विभागं स्यात्प्रस्तरोच्चं शिवांशकम्
सत्रिपादांशकं पादं प्रस्तरोच्चं शिवांशकम् ४

तदर्धं वेदिकोत्तुङ्गं चन्द्रांशं च गलोदयम्
मस्तकं चार्धभागं स्याच्छेषं तु तच्छिरोदयम् ५

कर्णहर्म्यादिसंयुक्तं सर्वालङ्कारसंयुतम्
ऐरावतमिति प्रोक्तं गन्ध स्कन्धोच्चसंवृतम् ६

तदेव विस्तृतार्धेन चतुर्दिक्षु समन्वितम्
निर्गमं तु यथायुक्तं चतुर्दिक्षु तलं भवेत् ७

एतत्तु भूतकान्तं स्यात्पञ्चभौमविदो विदुः
विशालेन त्रिपादेन पूर्ववद्भद्रसंयुतम् ८

चतुर्दिक्षु तलं कुर्यात्कर्णहर्म्यादिमण्डितम्
विश्वकान्तमिति प्रोक्तमेवं पञ्चतलं विदुः ९

अथवा विस्तृतं तुल्यं चतुर्दिक्ष्वालयं स्मृतम्
तस्मात्त्रिभूलहर्म्यान्तं तद्द्वयोर्मूलदेशके १०

अन्तरालं प्रकुर्वीत पार्श्वे सोपानसंयुतम्
सर्वं प्रदक्षिणं कुर्याद्युक्त्या द्वारं प्रकल्पयेत् ११

मध्ये पञ्चचतुस्तद्द्वितलं पञ्चतलं भवेत्
मूर्तिकान्तमिति प्रोक्तं पूर्ववत्परिकल्पयेत् १२

तदेव हर्म्ये विदिक्ष्वेच तत्तन्मौलालयं भवेत्
गृहकान्तमिति प्रोक्तं पूर्ववत्परिकल्पयेत् १३

तद्बहिः परितो देशे कुर्यात्षोडशालयम्
गृहकान्तादिहर्म्येषु चतुर्दिक्षु समालयम् १४

पञ्चविशत्युपपीठं प्रोक्तं यमकान्तमेव प्रकथ्यते
तदेवं परितो बाह्ये चतुर्विंशतिरालयम् १५

गृहकान्तादिहर्म्येषु चतुर्दिक्षु समालयम्

महाकान्तमिति प्रोक्तमेतत्पञ्चतलं भवेत् १६

गृहकान्तादिहर्म्येषु चतुर्दिक्षु समालयम्
कुर्यात्तत्कल्याणमेतदिदं पञ्चतलान्वितम् १७

प्रासादार्धं समं वापि त्रिपादं वा समं तु वा
अन्तरालं विशालं स्यादथवा हस्तमानतः १८

त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात्
नवपङ्क्तिकरान्तं स्यादन्तरालविशालकम् १९

अन्तराले यथायुक्त्या मण्डपाकारं विन्यसेत्
अथवा त्रिकूटयुक्तं वा मूलस्य मुखपार्श्वयोः २०

यज्ञकान्तमिति प्रोक्तमेकानेकतलान्वितम्
पञ्चषट्स्वेकभूमि स्याद्द्वितलं त्रितलं तु वा २१

पञ्चब्रह्ममिति प्रोक्तं सर्वालङ्कारसंयुतम्
एतदष्टविधं प्रोक्तं शेषं प्रागुक्तवन्नयेत् २२

शिखरादि यथाकारं चैकाकारं तु योजयेत्
सर्वेषां देवतानां च हर्म्यमेवं प्रकल्पयेत् २३

एतत्सर्वं हर्म्यके दिक्षु कूटम्
शालानासिकापञ्जराढ्यम्
नानारङ्गान्वितालिन्दयुक्तम्
पूर्वोक्तानां युक्तितः कारयेत्तत् २४

इति मानसारे वास्तुशास्त्रे पञ्चतलविधानं नाम त्रयोविंशोऽध्यायः

## षट्तलविधानम्

अधुना षट्तलं सम्यग्लक्षणं वक्ष्यतेऽधुना

विस्तारं च विभागं च पूर्ववत्परिकल्पयेत् १

सप्ताधिकं तु पञ्चाशद्भागं कुर्यात्तदुच्छ्रये
सार्धबन्धमधिष्ठानं सप्तांशं पाददीर्घकम् २

तदर्धं प्रस्तरोत्सेधमूर्ध्वपादं षडंशकम्
तदूर्ध्व मञ्च त्रियंशं स्यादूर्ध्वपादं शरांशकम् ३

तदर्धं प्रस्तरोत्सेधं सार्धवेदांशकाङ्घ्रिकम्
प्रस्तरं च द्विभागं स्यात्सार्धबन्धां शमङ्घ्रिकम् ४

प्रस्तरं सार्धभागं स्याद्वेदिकांशेन योजयेत्
ग्रीवतुङ्ग युगांशं स्याच्छिखरो युगांशकम् ५

शेषं तु स्तूपिकोत्तुङ्गं युक्त्या तत्रैव योजयेत्
एतत्तु पद्मकान्तं स्यात्सर्वोलङ्कारसंयुतम् ६

तदेवाधिष्ठानमंशेन तले तले विशेषतः
एतत्कान्तारमित्युक्तं कर्णहर्म्यादिमरिडतम् ७

अथ वापि च दिक्कुर्यात् सुन्दरं चेति कीर्तितम्
अथवा चोपपीठं स्यादुपकान्तमिति स्मृतम् ८

अथवा चोर्ध्वतले सर्वे वेदि कुर्यात्समञ्चकम्
कमलाख्यमिति प्रोक्तमन्तरप्रस्तरान्वितम् ९

तृतीये मञ्चसंयुक्तं रत्नकान्तमिहोच्यते
चतुर्थं प्रस्तरैर्युक्तं विपुलाङ्कमिति स्मृतम् १०

पञ्चमं मञ्चयुक्तं स्याज्ज्योतिकान्तमिति स्मृतम्
तदेव भद्रसंयुक्तमेतत्प्रोक्तं सरोरुहम् ११

तद्ग्रीवादि शिखान्तं च विपुलाकृतिकं भवेत्
तदेव शिखरोस्वश्रं स्वस्तिकान्तमिति स्मृतम् १२

तदेव चतुरश्रं स्यान्नन्द्यावर्तमिहोच्यते
तदेव गल वस्वश्रमिन्दुकान्तमिति स्मृतम् १३

एवं त्रयोदशं नाम्ना प्रोक्तं षट्तलहर्म्यके
त्रिचतुष्पञ्चषट्सप्त मध्यकोष्ठं विशालकम् १४

एकद्वित्रिचतुष्पञ्चभागं हारं सपञ्जरम्
एकं वाथ द्विभागं वा कर्णकूटविशालकम् १५

तले तले कर्णकूटं कोष्ठहारादिभूषितम्
एकद्वित्रिविभागं च हारमध्ये तु भद्रकम् १६

एकद्वित्रिचतुष्पञ्च कोष्ठमध्ये तु भद्रकम्
कर्णकूटविशाले तु त्रिभागैकं मध्यभद्रकम् १७

भद्रशाला महानासी चार्धशालाद्यलङ्कृतम्
आदिभूमिक्रियायुक्त्या चोर्ध्वोर्ध्वतला न्यसेत् १८

वितलात्षट्तलान्तं स्यादेवं युक्त्या समलङ्कृतम्
नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम् १९

नानापञ्जरशालानां नासिकापञ्जरान्वितम्
प्रस्तरादिकपोतान्तं क्षुद्रनास्या विभूषितम् २०

शिखरे च मध्यनास्यैः क्षुद्रकपोतनासिकाः
विंशनासिकायुक्तं सर्वालङ्कारसंयुतम् २१

ग्रीवे च क्षुद्रपादानां युक्त्या च समलङ्कृतम्

कर्णहर्म्यादिसंयुक्तं यत्तलोपरिदेशके २२

एकभाग द्विभागं वा मूलव्यावृतालिन्दकम्
ऊर्ध्वोर्ध्वतलानां तु चैकभागेन लिन्दकम् २३

एतत्षट्तलं प्रोक्तं शेषं युक्त्या च पूर्ववत्
पूर्वोक्तसकलानामपि देवानां तत्राखिलसौधकोष्ठकेषु २४

ब्रह्म विष्णुशिवानारदैः सह सङ्कलैः कुरुते शिल्पिवित्तमः २५
इति मानसारे वास्तुशास्त्रे षट्तलविधानं नाम चतुर्विंशोऽध्यायः

## सप्ततलविधानम्

सप्तभूमिविधानस्य लक्षणं वक्ष्यतेऽधुना
विस्तारोत्सेधमानं च पूर्ववत्परिकल्पयेत् १

जन्मादिस्तूपिपर्यन्तं समानानि विभाजिते
भागोनषट्षडंशं स्याद्विंशाधिष्ठानोच्छ्रयम् २

तद्द्वयं पादतुङ्गं स्यात्प्रस्तरोच्चं कलांशकम्
तदूर्ध्वे सार्धबन्धांशं तदर्धं प्रस्तरोदयम् ३

गुणांशं पादतुङ्गं स्यात्सार्धभागोर्ध्वमञ्चकम्
सार्धयुग्मांशपादोच्चं सपादांशं प्रस्तरोदयम् ४

वेदिकोच्चार्धभागं स्यात्सपादांशं गलोदयम्
वरणोर्ध्वं त्रिभागं स्यान्मञ्चोर्ध्वमम्बरांशकम् ५

पादोनद्विशपादोच्चं शिवांशं प्रस्तरोदयम्
अत्यर्धं पादतुङ्गं स्यान्मञ्चोर्ध्वं तु तदर्धकम् ६

वेदिकोच्चार्धभागं स्यात्सपादांश गलोदयम्

तद्द्वयं शिरतुङ्गं स्याच्छेषं तु तच्छिखोदयम्  ७

पूर्ववद्भक्तिमानेन विस्तारे तत्प्रकल्पयेत्
क्षुद्रे च मध्य मुख्ये च कूटशालादिभागता  ८

एकं वाथ द्विभागं कर्णकूटविशालकम्
षट्सप्ताष्टनवांशं वा शालायामं तु मध्यमे  ९

शालाकूटद्वयोर्मध्ये शेषांशं चान्तरालकम्
तन्मध्ये द्वित्रिभागैकं क्षुद्रशालाविशालता  १०

तत्तत्पार्श्वद्वयोर्हारि शेषभागं विधीयते
तदूर्ध्वे चैकभागेन कुर्यादावृतालिन्दकम्  ११

तले तले च पादौ च कर्णहर्म्यादिमण्डितम्
पुण्डरीकमिदं प्रोक्तं सर्वालङ्कारसंयुतम्  १२

मध्ये तु भद्रशालं च श्रीकान्तमिति स्मृतम्
ऊर्ध्वशाला च संयुक्तं श्रीभोगमिति कथ्यते  १३

शालापार्श्वे तु कूटं स्याद्धारणं तत्प्रकथ्यते
गलकूटसमायुक्तं पञ्जराख्यमुदीरितम्  १४

तले तले भद्रकोष्ठाश्रमागारं परिकीर्तितम्
मञ्चयुग्मं तु संयुक्तं हर्म्यकान्तमिति स्मृतम्  १५

ऊर्ध्वकूटसमायुक्तं हिमकान्तमिति स्मृतम्
एतदष्टविधं प्रोक्तं सप्तभूमिविधानके  १६

तले तले तु कोष्ठं स्यात्कर्णकूटाद्यलिन्दकम्
क्षुद्रशालादिसर्वेषां वेदिकाभिरलङ्कृतम्  १७

तोरणैर्नासिकैर्युक्तं क्षुद्रनास्यैश्च भूषितम्
नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम् १८

नानाप्रस्तरसंयुक्तं जालकाभिरलङ्कृतम्
एकाङ्गं च त्रयाङ्गं वा पञ्चसप्ताङ्गमेव वा १९

एवं सप्ततलं प्रोक्तं शेषं प्रागुक्तवन्नयेत्
देवानां पूर्ववत्कुर्यात्तए तले विमानके २०

इति मानसारे वास्तुशास्त्रे सप्ततलविधानं नाम पञ्चविंशोऽध्यायः

## अष्टतलविधानम्

अष्टतलविमानस्य लक्षणं वक्ष्यतेऽधुना
पूर्ववत्तुङ्गमानेन कुटयमाद्यङ्गं मानयेत् १

पूर्ववद्भक्तिमानेन कूटशालादि मानयेत्
भूकान्तं भूपकान्तं च स्वर्गकान्तं तथैव च २

महाकान्तं जनकान्तं च तपकान्तं सत्यकान्तकम्
देवकान्तमिति प्रोक्तमष्टधा नाममेव च ३

षोडशांशकमाधिक्यं भागं हर्म्यविशालकम्
एकांशं कर्णकूटं स्याद्धारान्तर शिवांशकम् ४

विभागेनानुशाला च तदर्धं चान्तरालकम्
सप्तांशेन महाशाला हर्म्यमेतत्तु विन्यसेत् ५

चतुष्कोणे चतुष्कूटं कोष्ठे हारादिरष्टधा
क्षुद्रशालाष्टधा प्रोक्तं कोष्ठशाला चतुष्टयम् ६

मध्यशालात्रिभागेन भद्रशाला च मध्यमे
तत्तत्पार्श्वद्वयो द्विद्विभागार्ध शालयेत् ७

एव मूलतलाद्यैश्च चोर्ध्वेऽर्ध्वतला न्यसेत्
अथवाष्टादशांशे तु कूटहारा च पूर्ववत्  ८

षड्भागेन महाशाला चतुःशाला त्रिभागिकम्
मध्यशालैर्युगांशेन भद्रशाला च मध्यमे  ९

अनुशाला च मध्ये च एकभागेन भद्रकम्
शेषं पूर्ववत्कुर्याद् भूकान्तमुदीरितम्  १०

एकोनविंशदंशेन चाष्टभूमिविशालके
एकैक कूटविस्तारं महाशाला शरंशकम्  ११

अनुशाला त्रिभागा वा भारान्तर द्विभागिकम्
महाशाला त्रिभागेन भद्रशालाविशालता  १२

शेषं प्रागुक्तवत्कुर्याद्दिव भागाधिकं ततः
मध्यशालाशराशेन युक्त्या तन्मध्यभद्रकम्  १३

शेषं तु पूर्ववत्कुर्याद्भूपकान्तमिति स्मृतम्
एवं चाष्टतले क्षुद्रहर्म्यमेवं प्रकल्पयेत्  १४

एकविंशांशकं चाष्टतलहर्म्ये विशालके
मध्ये सप्ताष्टकं चैव महाशाला प्रकल्पयेत्  १५

तन्मध्ये भूतभागेन मध्यशाला सभद्रकम्
तद्बहिश्च त्रिभागेन भद्रशालाविभूषितम्  १६

शेषं प्रागुक्तवत्कुर्यात्स्वर्गकान्तमिति स्मृतम्
एवमष्टतलं कुर्यान्मध्यमालयमेव च  १७

द्वाविंशांशकं तारे च श्रेष्ठमष्टतलं भवेत्

तन्मध्ये चाष्टभागेन महाशालाविशालकम् १८

तन्मध्ये वेदभागेन कोष्ठशाला सभद्रकम्
महाकान्तमिति प्रोक्तं तन्मध्ये च द्विभागतः १९

भद्रशालासमायुक्तं जनकान्तमिति स्मृतम्
तच्छालाया द्विपार्श्वे तु नेत्रशाला सभद्रकम् २०

एतत्तु तपकान्तं स्याच्छेषं प्रागुक्तवन्नयेत्
तदेव मध्यशाले तु तत्पार्श्वे च विशेषतः २१

एकैकं कूटविस्तारं तत्समं हारसंयुतम्
एतत्तु सत्यकान्तं स्याच्छेषं पूर्ववदाचरेत् २२

तदेवमनुशाला च कुर्यान्मध्य सभद्रकम्
देवकान्तमिति प्रोक्तं चोर्ध्वोर्ध्वतलं न्यसेत् २३

एवं श्रेष्ठं त्वष्टतले सर्वालङ्कारसंयुतम्
जन्मादिस्तूपिपर्यन्तं चाङ्गमानमिहोच्यते २४

सैकाष्टपञ्चसैकांशं हर्म्ये तुङ्गं विभाजिते
आधारं चाष्टभागेन वेदांशं चरणायुतम् २५

तदर्धं वलभ्युत्सेधं सार्धवह्न्यंशमङ्घ्रिकम्
सत्रिपादांशकं मञ्चमूर्ध्वे पादं गुणांशकम् २६

तदर्धं चोर्ध्वमञ्चं स्यात्त्रिपादाद्याङ्घ्रितुङ्गकम्
सपादांशं प्रस्तरोत्तुङ्गं द्व्यर्धांशं चरणायुतम् २७

तदर्धं प्रस्तरोत्सेधं जङ्घायामं च सार्धकम्
प्रस्तरं चैकभागेन द्व्यंशपादाधिकमङ्घ्रिकम् २८

ऊर्ध्वमञ्च त्रिपादं स्यात्सभागं पादतुङ्गकम्
एकांशं प्रस्तरोत्सेधं तदूर्ध्वे च त्रिभागिकम्  २९

तत्त्रिभागैकवेदिं स्याद्द्विभागं गलतुङ्गकम्
सपादं चांशकं चोर्ध्वे शिर शेषं शिखोदयम्  ३०

केचित्तदेव तुङ्गे तु सप्तभागाधिकं तथा
ऊर्ध्वोर्ध्वपादमूले तु युक्त्यांशेन मसूरकम्  ३१

तलानां चैकभागेन कर्णहर्म्यावृता न्यसेत्
अन्तर प्रस्तरोपेतं सर्वालङ्कारसंयुतम्  ३२

तस्यान्तस्यैकभागेन कुर्यादावृतालिन्दकम्
मूले भागे पदांशेन चोर्ध्वोर्ध्वतलांशकम्  ३३

नेत्रशालार्धशाला च भद्रशालादिभूषितम्
तोरणैस्तलशालादिनासिकाभिरलङ्कृतम्  ३४

कोष्ठेशाला च मध्ये च चोर्ध्वशाला च मण्डितम्
नासिकापञ्जराढ्यं च भद्रनास्यैरलङ्कृतम्  ३५

क्षुद्रशालाप्रदेशे तु सर्वालङ्कारसंयुतम्
कर्णकूटाङ्गमध्ये तु नासिकापञ्जरान्वितम्  ३६

सर्वाङ्गं क्षुद्रनास्याङ्गं प्रस्तरालङ्कृतिक्रिया
नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम्  ३७

नागरद्राविडादीनां वेसरादीन् शिखान्वितम्
सर्वालङ्कारसंयुक्तं पूर्ववत्परिकल्पयेत्  ३८

इति मानसारे वास्तुशास्त्रे अष्टतलविधानं नाम षड्विंशोऽध्यायः

## नवतलविधानम्

नवभूमिविधानस्य लक्षणं वक्ष्यतेऽधुना
विस्तारोत्सेधमानादिसर्वं प्रागुक्तवन्नयेत् १

सौरं च रौरवं चैव चण्डितं भूषणं तथा
विवृतं सुप्रतीकान्तं विश्वकान्तं यथाक्रमम् २

विस्तारो विंशदंशेन कूटमेकैकभागिकम्
मध्यशाला षडंशं स्यात्तत्संश्रं चान्तरालकम् ३

तन्मध्ये च विभागेन क्षुद्रशालैर्विभूषितम्
तत्पार्श्वे हारसंयुक्तं द्विद्विभागेन कारयेत् ४

सौरकान्तमिति प्रोक्तं शेषं प्रागुक्तवन्नयेत्
महाशालैश्चतुर्भागं मध्ये भद्रं तु रौरवम् ५

तदेव भद्रशालैश्च वेदभागविशालकम्
द्विभागं भद्रसंयुक्तं चण्डितं परिकीर्तितम् ६

तदेव मध्यशाले तु द्विंशेन भद्रकोष्ठकम्
भूषणं च मेति प्रोक्तं सर्वालङ्कारसंयुतम् ७

एतच्चतुर्विधं प्रोक्तं नवभूम्यल्पहर्म्यके
अथवा चाल्पहर्म्ये तु मध्यकोष्ठं गुणांशकम् ८

अथवा चतुरंशेन मध्यभद्रविशालकम्
अथवा पञ्चभागं स्यात्पूर्ववन्नाममीरितम् ९

चतुर्विंशति विस्तारं कूटानां पूर्ववद्भवेत्
महाशालानुशाला च साष्टांशकगुणांशकम् १०

महाशालायते मध्ये वेदभागैर्भद्रकम्
सर्वालङ्कारसंयुक्तं विवृतं चेति कथ्यते  ११

पञ्चविंशतिभागेन मध्यभद्रं शरांशकम्
तत्पार्श्वे कर्णकूटौ च नराणां चैकभागिकम्  १२

अनुशाला त्रिभागैकं मध्यभद्रं तु संयुतम्
सुप्रतीकान्तनामाख्यं शेषं प्रागुक्तवन्नयेत्  १३

षड्विंशतिविभागेन मध्यमं तु युगांशकम्
मध्यमं हर्म्यके कुर्यात्सर्वालङ्कारसंयुतम्  १४

श्रेष्ठं नवतलं हर्म्ये सप्तविंशतिभागिकम्
शालापार्श्वे द्विभागैकं हारकूटसपञ्जरम्  १५

कूटशालैश्च सप्तांशं मध्यभद्रं शरांशकम्
भद्रकोष्ठं त्रियंशं स्याच्छेषं पूर्ववदाचरेत्  १६

श्रेष्ठं नवतलं प्रोक्तं विश्वकान्तमुदीरितम्
तदूर्ध्वे द्विंशमानेन वक्ष्ये चोर्ध्वे जलस्थलम्  १७

जन्मादिस्तूपिपर्यन्तं गणयमानमिहोच्यते
हर्म्यमष्टतले तुङ्गे साष्टभागाधिकं तथा  १८

सार्धद्व्यंशमधिष्ठानं तद्द्वयं पादतुङ्गकम्
तदर्धं प्रस्तरोत्सेधं शेषमष्टतलोक्तवत्  १९

एवं नवतलोत्सेधं सर्वालङ्कारसंयुतम्
नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम्  २०

कर्णाहर्म्यादिसंयुक्तं द्वारं तत्प्रस्तरान्वितम्

भद्रकूटादिशालानां नासिकापञ्जरान्वितम्  २१

युक्त्या हारादि यथा सर्वे चानुकूलानुनासिका
तोरणाद्यङ्गनीडैश्च जालकादिविभूषितम्  २२

शेषं तु पूर्ववत्कुर्याद्दिक्षु देवान्न्यसेत्क्रमात्
तले तले विमाने तु चोक्तवत्कारयेद्बुधः  २३

एवं नवतलं प्रोक्तं शेषं युक्त्या प्रयोजयेत्  २४
इति मानसारे वास्तुशास्त्रे नवतलेविधानं नाम सप्तविंशोऽध्यायः

## दशतलविधानम्

दशभूमिविधानं च लक्षणं वक्ष्यतेऽधुना
विशालोत्सेधभक्तिश्च दशभूम्यास्तु पूर्ववत्  १

भूकान्तं चन्द्रकान्तं च भवनं चान्तरिक्षतः
मेघकान्ताब्जकान्तं च एवं षड्विधमीरितम्  २

एवं नामवशाद्धर्म्यविस्तारं परिकल्पयेत्
भूकान्तं चन्द्रकान्तं दशतलहर्म्ये भागमानेन  ३

नवतलहर्म्यवशात्पुरोक्तवत्कूटशालादीन्
क्षुद्रमध्यममेवं युक्त्या दशतले सङ्कल्प्य  ४

उक्तहर्म्यविशाले अष्टाविंशत्यंशकं कृत्वा
एकैकं कूटविस्तारं मध्ये द्वादशकं तु शालभम्  ५

अनुशाला गुणांशेन तत्पार्श्वे द्विद्विभागेन हराः
महाशाला मध्यदेशे षड्भागेन भद्रसंयुतम्  ६

एवं तु भवनं कान्तं श्रेष्ठं हर्म्य दशतले कुर्यात्

तदेव सौष्ठिकविस्तारं हारानुशाला द्विद्विभागेन कुर्यात्  ७

पूर्ववच्छेषं चान्तरिक्षकान्तमिदमुदितम्
तदेव शालापार्श्वे चैकं चैकेन सौष्ठिकहाराः  ८

षड्भागेन महाशाला चैतन्नाम्ना मेघकान्तं स्यात्
तन्मध्ये चतुरंशेन शालाभद्रयुक्तमब्जकान्तकम्  ९

शेषं पूर्ववदुद्दिष्टं कुर्याद्दशतलहर्म्यविस्तारे
जन्मादिस्तूपिपर्यन्तं तुङ्गे गरायं चाधुना वक्ष्यामः  १०

तुङ्गे त्र्यंशषष्ट्यंशं गुणांश मसूरकोत्तुङ्गम्
तद्द्वयं पादतुङ्गं तदर्ध प्रस्तरोर्ध्वदेशे तु  ११

तदूर्ध्व पादतुङ्गं भूतं तदर्धं प्रस्तरोत्सेधं
सार्धवेदांशकं पादमूर्ध्वमञ्चं द्वंशकं कुर्यात्  १२

वेदांशं चाङ्घ्रितुङ्गं चार्धं प्रस्तरोत्सेधम्
तद्द्वयमायिक पादं सार्धांशं प्रस्तमुत्तुङ्गम्  १३

तदूर्ध्वाङ्घ्रि गुणांशं तदर्धमूर्ध्वमञ्चोच्चम्
द्व्यर्धांश पादतुङ्गं सपादांशं प्रस्तरोत्तुङ्गम्  १४

पादं द्वयमप्युच्च शिवांशं प्रस्तरमुत्सेधम्
तद्द्वयं चोर्ध्वपादं तदर्धमूर्ध्वमञ्चतुङ्गं स्यात्  १५

द्विभागं चोर्ध्वपादं चैकांशं चोपरि मञ्चं स्यात्
तत्समं वेदिकोत्सेधं ग्रीवतुङ्गं कलांशकं स्यात्  १६

वेदांशं शिखरोत्तुङ्गं शेषांशं शिखरोदयं कथितम्
ऊर्ध्वे चोर्ध्वतले सर्वे कर्णहर्म्यादिमण्डितम्  १७

एकभाग द्विभागं वा चान्तश्चावृतालिन्दकम्
अधिष्ठानोपपीठे वा महावेद्यादिमेव व १८

ऊर्ध्वे चोर्ध्वतले कुर्यात्सर्वालङ्कारसंयुतम्
नानालङ्करसर्वाङ्गं युक्त्या प्रागुक्तवन्नयेत् १९

पञ्जरं शिखरं पादं मसूरं प्रस्तरं वलभीतोरणनीडं कल्पयेत्
दशतलाख्यविमाने चित्रकल्पमत्र महदल्पनासिकम् २०
इति मानसारे वास्तुशास्त्रे दशतलविधानं नाम अष्टाविंशोऽध्यायः

## एकादशतलविधानम्

एकादशतलं सम्यग् लक्षणं वक्ष्यतेऽधुना
शम्भुकमीशकान्तं च चक्राख्यं यमकान्तकम् १

वज्रकान्तार्ककान्तं चक्र माद्धर्म्यनामकम्
रुद्रहर्म्ये तले तारे चैकोनविंशदंशकम् २

कूटानां च द्विभागं स्यान्महाशाला नवांशकम्
अनुशाला युगांशं स्याद्धारा च द्विद्विभागिकम् ३

महाशाला च मध्ये तु भद्रशालैः शरांशकम्
शम्भुकान्तमिति प्रोक्तं सर्वालङ्कारसंयुतम् ४

तदेव नासिकामध्ये तु द्विभागं भद्रसंयुतम्
ईशकान्तमिति प्रोक्तं क्षुद्रहर्म्यादिमीरितम् ५

मध्यमेकादशतले त्रिंशद्भागविशालकम्
महाशाला दशांशं स्यान्मध्यभद्रं शरांशकम् ६

तत्पार्श्वे एकैकभागेन कूटं हारा सपञ्जरम्
तदेव वेदभागेन भद्रशाला च मध्यमे ७

शेषं प्रागुक्तवत्कुर्याच्चन्द्रकान्तमिति स्मृतम्
तदेव कूटैकभागं स्यादनुशाला पञ्चभागिकम् ८

त्रिपादं भद्रसंयुक्तं तत्त्रिभागैकभागिकम्
यमकान्तमिति प्रोक्तं सर्वालङ्कारसंयुतम् ९

श्रेष्ठहर्म्यविशालेतु चैकविशति भाजिते
द्विद्विभागेन कूटं स्याद्धारं च द्विद्विभागतः १०

हारा च तद्द्वयोर्मध्ये चानुशाला शरांशकम्
तन्मध्ये कूर्मभागेन भद्रं कुर्याद्विचक्षणः ११

महाशालानवांशेन मध्ये भद्रं शरांशकम्
तन्मध्ये भद्रशाला च बन्धभागेन योजयेत् १२

एवं तु वज्रकान्तं स्यादर्ककान्तमिहोच्यते
तदेव शालाप्रान्ते तु पार्श्वे चैकेन सौष्टिकम् १३

तद्द्वयोरन्तरे देशे तत्समं क्षुद्रहारयोः
पूर्ववत्कूटविस्तारं शेषं हारं सपञ्जरम् १४

तन्मध्ये तु त्रिभागेन क्षुद्रशालाविशालतः
तत्पार्श्वे त्रित्रिभागेन हारमध्ये सभद्रकम् १५

क्षुद्रशालात्रिभागेन मध्यभद्रं समन्वितम्
क्षुद्रहारा च सर्वेषां नासिकापञ्जरान्वितम् १६

मध्ये मध्ये महानासि नेत्रशाला च पार्श्वयोः
सर्वालङ्कारसंयुक्तं षड्विधं परिकीर्तितम् १७

शेषभागं तु सर्वेषां युक्त्या तत्रैव योजयेत्

एवं विस्तारगरयं स्यात्तुङ्गगरयमिहोच्यते १८

जन्मादिस्तूपिपर्यन्तं त्तवत्संग्रहं विदुः
एकादशांशभागेन दशतलोदयाधिकम् १९

तदेव सार्धबन्धांशं मसूरकोत्तुङ्गमिष्यते
सप्तांशं पाददीर्घं स्यात्तदर्धं प्रस्तरोदयम् २०

शेषं प्रागुक्तवद्गरयमेकादशतलोदये
तलोर्ध्वोर्ध्वतले सर्वे कर्णहर्म्यादिमरिडतम् २१

एकभाग द्विभागं वा परितोऽलिन्दमिष्यते
नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम् २२

शालाकूटैश्च हारैश्च उक्तवत्समलङ्कृतम्
हारान्तरे तु कूटशाला च ग्रीवदेशोक्तदेवतान् २३

अनुशालाष्टदिक्पालांस्तत्तद्वाहनसंयुतम्
यक्षविद्याधरादीनां गरुडादीनि विन्यसेत् २४

गणाधिपगणैश्चैव सर्वहर्म्येषु निक्षिपेत् २५
इति मानसारे वास्तुशास्त्रे एकादशतलविधानं नाम नवविंशोऽध्यायः

## द्वादशतलविधानम्

अन्यभूमिविधानस्य लक्षणं वक्ष्यतेऽधुना
भूमिलम्बविधाने तु विस्तारोत्सेधमुक्तवत् १

क्षुद्राल्पमध्यमुख्ये तु यन्मानोरम्य मानयेत्
विमानस्य विमाने तु चोक्तवद्धक्तिसंग्रहम् २

पाञ्चालं द्राविडं चैव मध्यकान्तं कलिङ्गकम्

वरातं केरलं चैव वंशकं मागधं तथा ३

जनकं स्फूर्जकं चैव दशकान्तं प्रकीर्तितम्
रविभूमिविशाले तु चाष्टविंशांशकं भवेत् ४

महाशाला दशांशं स्याच्छेषं पूर्ववदाचरेत्
पाञ्चालं द्राविडं चैव रविभूम्यल्पहर्म्यके ५

मध्यमालयविस्तारे त्रयस्त्रिंशद्विभाजिते
त्रिभागं कूटविस्तारं मध्यभद्रैकभागिकम् ६

महाशाला नवांशं स्याच्छेषं पूर्ववदाचरेत्
मध्यकान्तमिति प्रोक्तं तस्य कूटद्विभागिकम् ७

अनुशाला षडंगं स्यात्तस्याङ्गं पूर्ववद्भवेत्
एवं कालिङ्गकान्तं स्यान्नानालङ्कारसंयुतम् ८

चतुराधिकत्रिदशभागं हर्म्यविशालके
अष्टांशेन महाशाला पार्श्वे शाला शिवांशकं ९

द्व्यंशानुपञ्जरशाला तदर्धं चान्तरालकम्
अनुशाला त्रिभागं स्यादेकांशमन्तरालकम् १०

द्विंशं पञ्जरशाला च पार्श्व हारं शिवांशकम्
कूटानां च द्विभागं स्यात्सर्वं युक्त्यं सभद्रकम् ११

महाशाला युगांशेन मध्यमत्रप्रकारयेत्
तले तले विमाने तु शालापञ्जरषोडशम् १२

क्षुद्रशाला द्विहारा च तन्मध्ये चाष्टकं भवेत्
चतुर्दिक्षु महाशाला चतुष्कूट तले तले १३

एवं वराटकान्तं स्याच्छेषं भागं तु पूर्ववत्
तदेव भूतभागेन क्षुद्रशालाविशालकम् १४

हारा च तत्त्रिभागेन युक्त्या च समलङ्कृतम्
शेषं प्रागुक्तवत्कुर्यात्तदेव केरलकान्तकम् १५

तदेव हारां तन्मध्ये चैकभागेन सौष्ठिकम्
वंशकान्तमिति प्रोक्तं शेषं पूर्ववदाचरेत् १६

तदेवानुशालामध्ये भद्रशालैकभागिकम्
एवं मागाधकान्तं स्यात्कर्णकूट सभद्रकम् १७

तदेव महाशाला तु द्विभागं मध्यभद्रकम्
जनकान्तमिति प्रोक्तम् श्रेष्ठो रवितलान्वितः १८

एकादशतलोत्तुङ्गे त्रयोदशाशमाधिकम्
तद्भागेन युगांशं तु कुट्टिमोदयमीरितम् १९

अष्टांशं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम्
अर्धांशं तु शिखोपेतं शेषांशं प्राग्वदुच्छ्रयम् २०

एवं द्वादशतलं स्यात्तुङ्गं युक्त्या समाचरेत्
एकेन परितोऽलिन्दं तदूर्ध्वोर्ध्वतलानि च २१

एकानेकतलान्ते च चादिभूमिवशाद्विदुः
अनादृत्यंशकं कृत्वा तदूर्ध्वोर्ध्वतला न्यसेत् २२

एकद्वित्रित्रिदण्डं वा मध्यशालाच निर्गमम्
अर्धमेक द्विदण्डं वा क्षुद्रशालादिनिर्गमम् २३

एकांशात्यर्धदण्डं वा सर्वेषां भद्रनिर्गमम्

तले तले च पादादि बहुकूटं चालिन्दकम्  २४

सर्वाङ्गं कर्णहर्म्यादि सान्तरप्रस्तरान्वितम्
विनाभद्रं महाशाला चैकशाला समन्वितम्  २५

एकभद्रोर्ध्वशाला च मध्यकोष्ठसमन्वितम्
द्विभद्रं चेन्महाशाला मूर्ध्निशाला प्रकल्पयेत्  २६

सभद्र महाशाला भद्रशाला समन्वितम्
ऊर्ध्वशाला सभद्राढ्यं प्रस्तारं समलङ्कृतम्  २७

निर्गमाङ्गं महाशाला क्षुद्रशाला सवेशनम्
यत्तत्प्रासादमध्ये तु महाशाला प्रकल्पयेत्  २८

सर्वेषां हारमध्ये तु क्षुद्रशाला प्रकल्पयेत्
यथा हर्म्ये द्वित्रिभूमे च कर्णकूटं विनिक्षिपेत्  २९

क्षुद्रशालां तु हारा च वेशनं युक्तितो न्यसेत्
नासिकापञ्जरादीनां तोरणाद्यं तु पञ्जरम्  ३०

सर्वेषां हर्म्यके हारं चोक्तवत्समलङ्कृतम्
एकद्वित्रिद्विभागं वा प्रासादनिर्गमं भवेत्  ३१

अथवा हस्तमानेन चैकानेकेन वर्धयेत्
द्विभूम्यान्ततलान्तं चैकादशकरान्तकम्  ३२

क्रमात्तु निर्गमं कुर्याद्युक्त्या तत्रैव शिल्पिभिः
अनाख्यातानि चाङ्गानि यस्मिन् हर्म्येषु चोक्तवत्  ३३

तत्तदङ्गानि सर्वाणि सर्वहर्म्येषु योजयेत्
नानाधिष्ठानसंयुक्तं नानापादैरलङ्कृतम्  ३४

नानापञ्जरादीनां नानावर्णैश्च तोरणम्
नानानासिकाकूटं नानाहारैरलङ्कृतम् ३५

नानाप्रस्तरसंयुक्तं नानागलविभूषितम्
नानावेदिका कुर्यान्नानालङ्कारभूषितम् ३६

नानापालिकादीनां नानाङ्गैस्तूपिकान्वितम्
नानाकारं तु पद्मं स्यान्नाना पालिकादिभिः ३७

कुर्यात्तु सर्वहर्म्याणां शिल्पिभिः समलङ्कृतम्
तले तले विमानादि दिक्षु दिक्ष्वादिकोष्ठके ३८

तत्तद्देवालये देवांस्तत्तत्प्रागुक्तवन्नयेत्
यक्षविद्याधरादीनां गणभूतादिराक्षसान् ३९

जन्मादिसप्तमात्रं च रोहिण्या चापरस्त्रियः
विश्वकर्माद्यगस्त्यादिनारद श्रुतिधोषकान् ४०

सालोक्यादिपदैः सर्वभक्तांश्च लक्षणोक्तवत्
असंख्यातस्त्रयस्त्रिंशद् ब्रह्मादीनां च सर्वशः ४१

हर्म्यमूले तले चोर्ध्वे सर्वत्र परिकल्पयेत्
अन्यान्यनुक्तमानानां चाङ्गं युक्त्या प्रयोजयेत् ४२

सोपानलक्षणम्
देवानां मानुषाणां च हर्म्यादीनां च सर्वशः
आरोहावरोहार्थं च सोपानलक्षणं तथा ४३

हर्म्यादिमण्डपादीनां प्राकारादि च गोपुरे
तथा पर्वतदेशे तु वापीकूपतटाकके ४४

नगरग्रामादिसर्वेषां कल्पयेच्छिल्पिवित्तमः
अचलं च चलं चैव द्विधा सोपानमीरितम्  ४५

शिलाभिश्चेष्टकैर्वापि दारुभिः सचलं मतम्
सर्वैश्चैवाचलं प्रोक्तं क्षुद्रसोपानसंयुतम्  ४६

सर्वेषां मुखभद्राणां पार्श्वे सोपानसंयुतम्
पार्श्वयोर्द्वारदेशे तु मुखसोपानमेव वा  ४७

आरोथ सर्वहर्म्ये दक्षिणद्वारभद्रके
तत्पार्श्वे पूर्वदिग्देशे सोपानं कारयेच्छुभम्  ४८

गुह्यान्तद्वारदेशे तु वामे सोपानसंयुतम्
आराध्यदेवदेवस्य प्रदर्शनमगर्हितम्  ४९

तस्मात्तु मुखभद्रे तु पार्श्वे सोपान कारयेत्
पार्श्वयोः पृष्ठदेशे तु तत्पूर्वे पक्षपार्श्वके  ५०

यत्र देशे तु सोपानं तत्र दोषो न विद्यते
प्रमुखे मुखसोपानं न कुर्याच्छिल्पिवित्तमः  ५१

अपरे पार्श्वयोर्द्वारि भद्रहीनत्रयं तु चेत्
तत्पूर्वके तु सोपानं कुर्यात्सम्पत्प्रदायकम्  ५२

प्रपाङ्गे प्रमुखे भद्रे सोपानं पूर्वपार्श्वयोः
कुर्यात्तु तन्त्रविच्छिल्पी चोक्तमेवं पुरातनैः  ५३

तैतलानामिति प्रोक्तं कुर्यात्सोपानमुद्यताम्
नराणां सर्वहर्म्येषु वक्ष्ये सोपानलक्षणम्  ५४

तपस्व्यादिद्विजातीनां वर्णानां च विशेषतः

देवानामुक्तवत्कुर्याद्गेहं सर्वेषु योजयेत् ५५

द्विजानां भूपतीनां च सर्वेषां भद्रदेशके
पार्श्वे सोपानसंयुक्तं तत्पूर्वे वाथ प्रकल्पयेत् ५६

अलिन्दयुक्तं तद्द्वारे वामे सोपानसंयुतम्
विनालिन्दप्रदेशे तु प्रमुखे सोपानमेव च ५७

वैश्यानां शूद्रजातीनां सोपानं वक्ष्यतेऽधुना
यत्तद्द्वारादिभद्राणां युक्त्या सोपानसंयुतम् ५८

गोपुराणां तु तत्पार्श्वे सोपानं लक्षणान्वितम्
अद्रिदेशे समारोह्य यत्र तत्रैव कारयेत् ५९

वापीकूपतटाके वा परितः सोपानसंयुतम्
चतुर्दिक्षु चतुष्कोणे चान्तरालेऽथवा पुनः ६०

एवमेवं यथादेशे भद्रसोपानमेव वा
तत्रैव श्रेष्ठदिग्देशे कुलद्वारं प्रकल्पयेत् ६१

तत्पूर्वे च द्विपार्श्वे कुर्यात्सोपानमुक्तवत्
अचलं च इति प्रोक्तं चलं स्थाप्यं यथेष्टकम् ६२

द्वादशाङ्गुलमारभ्य त्रित्र्यङ्गुलविवर्धनात्
सार्धहस्तावसानं स्यान्नवधा विस्मृतं भवेत् ६३

सार्धद्विहस्तमारभ्य षट्षडङ्गुलवर्धनात्
सार्धवेदकरान्तं च फलमेकं तदायति ६४

एकहस्तं समारभ्य षट्षडङ्गुलवर्धनात्
तत्त्रिहस्तावसानं स्याच्च लसोपानविस्तृतम् ६५

द्विहस्तं तु समारभ्य चतुर्हस्तावसानकम्
त्रिहस्तादिपञ्चहस्तान्तं षट्षडङ्गुलवर्धनात् ६६

एतदचलसोपानं विस्तारं नवधा भवेत्
जन्मादिस्तूपिपर्यन्तं कुर्यात्तुङ्गं हि योजयेत् ६७

लुपमानोक्तवत्कुर्यात्सोपानायाममुह्यताम्
अद्रिसोपानदेशे तु दीर्घमानं यथेष्टकम् ६८

विस्तारं पूर्ववत्कुर्यादचलं चोक्तवद्भवेत्
परितः सोपानविस्तारं तटाकाद्याकारतत् तथा ६९

परितः सर्वसोपानं कुर्यात्प्रागुक्तवन्नयेत्
पट्टिकात्रयमारभ्य वर्धयेद्द्विद्विपट्टिका ७०

त्रयोविंशच्छतान्तं स्याद्देवानामिति कथ्यते
पट्टमद्रिमार्गपर्यन्तं तिर्यक् चोर्ध्वोर्ध्व चोक्तवत् ७१

मानुषाणां तु सोपानं पट्टिकायुग्मसंयुतम्
त्रिचतुष्पञ्चषण्मात्रं चलं सोपानपादके ७२

तद्घनं च विशाले तु समं वा पादमाधिकम्
अर्धाधिकं तु पादोनद्विगुणस्त्रिगुणं ततः ७३

दण्डद्वयसमायुक्तं चित्रयुक्तं तु पट्टिकाः
एकद्वित्र्यङ्गुलं वापि पट्टिकाघनमेव च ७४

द्वित्रिवेदशराङ्गुल्यं षट्सप्ताङ्गुलमेव वा
अष्टनन्ददशाङ्गुल्यं पट्टिकाविस्तृतं भवेत् ७५

एवं तु चलसोपानमचलं तत्प्रवक्ष्यते

पञ्चषडङ्गुलारभ्य द्विद्वयङ्गुलविवर्धनात् ७६

द्वादशैकार्कमात्रान्तं पट्टिकोत्सेधविस्तृतम्
आधिक्याङ्गुलविस्तीर्णं हीनमानोदयं भवेत् ७७

सोपानपार्श्वयोर्देशे हस्तिहस्तविभूषितम्
हस्तमूलविशाले तु चोक्ताङ्गुलीन मानयेत् ७८

मूलेन तत्त्रिभागैकं हस्ताग्रान्तं क्षयं क्रमात्
हस्तिहस्तवदाकारं द्वारयुक्तं मनोहरम् ७९

त्रिचतुष्पञ्चवक्त्रं वा मूलेन सिंहाननैर्युतम्
अग्राधो धारपट्टं स्यात्पट्टिका चोक्तमानकम् ८०

अग्राधारं पालिकाकारं पट्टिका वेदिकाकृतिः
सर्वालङ्कारसंयुक्तं सोपानं लक्षणान्वितम् ८१

अद्रिसोपानपार्श्वे तु न कुर्यात्पार्श्वयोङ्घ्रिकम् ८२

अनेकहर्म्यस्य विशालदेशके
सभूषणोन्मानं यथा प्रविश्यते
कुर्वन्ति दोषं किल भर्तृकर्तृणाम्
उक्ते मानं कुरुते तु सम्पत् ८३

जातिहर्म्यादि
वक्ष्येऽहं जातिहर्म्याणामायादिलक्षणं क्रमात्
पूर्वोक्तानां विमानानां विस्तरादिवशात् हि ८४

आय व्ययं च योनि च नक्षत्रं वारमंशकम्
तिथिर्वाथ षडेतानि तथायादिविदो विदुः ८५

सञ्चितासञ्चितानां च अंशैरायादिभिर्युतम्
अपसञ्चितहर्म्याणां तिथ्यन्तं षड्ग्रहीष्यते  ८६

एक त्रिपादमर्धं च पादहस्तं यथाक्रमम्
जातिश्छन्द विकल्पं च आभासं च चतुर्विधम्  ८७

एतत्तदेव संयुक्तं हर्म्याणां मानकल्पनम्
षट्सप्ताष्टकवृद्धिः स्याद्द्वादशान्तं क्षयं नयेत्  ८८

शेषं तदायमित्युक्तं सञ्चितादि यथाक्रमम्
सप्ताष्टनववृध्या तु हरेत्पङ्क्त्या व्ययं भवेत्  ८९

एकद्वित्रयवृध्या तु क्षपयेत्वष्टा च योनिकम्
षट्सप्ताष्टवृद्ध्या तु सप्तविंशक्षयो भवेत्  ९०

तच्छेषं चापि नक्षत्रं गणयेदश्विनीक्रिमात्
षडष्टनन्दवृद्ध्या तु सप्तभिः क्षपयेत्ततः  ९१

शेषं तद्वारेमित्युक्तं अर्कवारादिवारयुक्
त्रिभिर्वेदास्तु वृद्धिः स्यान्नन्दहानि नवांशकम्  ९२

तिथि रन्ध्रेण वृद्धिः स्यात्त्रिंशता क्षयो भवेत्
सिध्यादि द्वादशायः स्याच्छिखरादिव्ययं दश  ९३

ध्वजादिमष्टयोनिः स्यात्तस्करादिनवांशकम्
प्रथमादितिथिरित्येवं चोक्तवद्गणयेत्सुधीः  ९४

एवमायादिषड्वर्गं शुद्धिं ग्राह्यां शुभं त्यजेत्  ९५

आयादि षड्वर्ग सुरैर्विमाने
चायादिकं क्षीणव्ययं शुभं स्यात्

ग्रामादिकर्तृनृपतिकक्रयानाम्
सर्वं शुभं तत्कुरुते तु विद्वान् ९६
इति मानसारे वास्तुशास्त्रे द्वादशतलविधानं नाम त्रिंशोऽध्यायः

## प्राकारविधानम्

बलार्थं परिवारार्थं शोभार्थं रक्षणार्थकम्
पञ्चप्राकारहर्म्याणामधुना वक्ष्यते क्रमात् १

जात्यादिभेदहर्म्याणां तन्मानेन तु विन्यसेत्
जातिप्राकारसर्वेषां हस्तमानेन योजयेत् २

छन्दादि सर्वशालानां प्रासादांशेन मानयेत्
जातीनां जातिसालानां रस्यतारं विभाजिते ३

तदूर्ध्वे वेदिकादीनां ग्रीवमूर्ध्नि शिखान्तकम्
समकन्धरवृद्धिः स्यात्पञ्चसालावसानकम् ४

छन्दादिपञ्चसाला च छन्दाद्यंशेन मानयेत्
जातिप्रासादविस्तारे विन्यसेत्सकलं पदम् ५

आदिशालां ततः कुर्यादन्तर्मण्डलमीरितम्
द्वितीयमन्तहारा च मध्यहारा तृतीयकम् ६

प्राकारं तच्चतुर्थं च कथितं तन्मयाधिकम्
ततः पञ्चमशाला च महामर्यादमीरितम् ७

पञ्चशालामिति प्रोक्तं तन्त्रविद्भिः पुरातनैः
तत्पीठपादविन्यास चादिशालविशालके ८

तथा द्वितीयशाले तु स्थण्डिलं पदं विन्यसेत्
तत्तत्कुर्यात्तु शालायां तृतीये चोभयचण्डितम् ९

सुसंहितपदं मध्ये मर्यादाया विशालके
महामर्यादाविस्तारे पदमीश्वरकान्तकम् १०

एवं तु जातिशाला च कुर्याद्धर्म्यवशात्सुधीः
वेचकं मूलहर्म्ये तु छन्दादीनां प्रवक्ष्यते ११

प्रथमं तु महापीठं द्वितीयं चण्डितं पदम्
तृतीयं भद्रसंयुक्तं ततः शालाबहिस्तथा १२

चतुर्थं सुप्रतीकान्तं पञ्चमं चेन्द्रकान्तकम्
एतच्छन्दं प्रकर्तव्यं विकल्पं तदिहोच्यते १३

छन्दप्राकारविस्तारे सार्धार्धेन कराधिकम्
प्रथमात्पञ्चमानं स्यात्सार्धं युग्मकरान्तकम् १४

एवं विकल्पमानं स्यात्पञ्चशाला प्रकीर्तिताः
तदेव पञ्चशालानां षडङ्गुलविवर्धनात् १५

सप्तहस्तावसानं स्यात्प्रथमात्पञ्चमानकम्
एवमाभास कर्तव्यं हर्म्यपादं तु वर्धनात् १६

केचिच्छन्दकमाने तु त्रित्रिहस्तविवर्धनात्
प्रथमात्पञ्चमानं स्यात्पञ्चादशकरान्तकम् १७

एतत्क्षुद्रविमाने तु सालाच्छन्दविमानकम्
केवलहस्तमानेन जातिप्राकार मानयेत् १८

त्रिहस्तेनादिसालादि द्विद्विहस्तविवर्धनात्
प्रत्येकं पञ्चशालानां पञ्चपञ्चप्रमाणकम् १९

क्षुद्राल्पमध्यमुख्यानां जातिसालां प्रकल्पयेत्

प्रासादार्धविशालेन मध्यमुख्यांशमानके २०

सालानां पञ्चधाद्यन्तं मानयेत्पूर्ववद्भवेत्
हर्म्यपादस्य बाह्यात्तु सालं कुडयावसानकम् २१

अन्तर्वापि बहिर्वापि कुटय मध्यावसानकम्
उपपीठं चाङ्घ्रिकं वा हर्म्यपादं तु निर्गमम् २२

तत्कुडयवेदिकान्तर्वा सालं प्रागुक्तमानकम्
हर्म्यसार्धवृधामानं यद्वास्तयमतत्समम् २३

तच्चतुर्भागिकैकेन वर्धयेत्तन्मुखायतम्
विस्तारात्पञ्चधायामं पञ्चधा विस्तृतान्तकम् २४

पञ्चसालामुखायामं प्रत्येकं पञ्चधा ततः
एकैकं विंशदायामं पञ्चविंशमुखायतम् २५

षडङ्गुलं समारभ्य षट्षडङ्गुलवर्धनात्
रसहस्तावसानं स्यात्प्रथमात्पञ्चमान्तकम् २६

सालानां कुडयविस्तारं प्रत्येकं पञ्चधा मतम्
विशालोच्चसमं वापि तच्चतुर्थांशवर्धनात् २७

प्रत्येकं पञ्चसालानां कुडयानां पञ्चधोदयम्
अथवाधिष्ठानमानेन कुडयतुङ्गमिहोच्यते २८

कुट्टिमोच्चं समारभ्य पञ्चविंशोदयान्तकम्
अन्तर्मण्डलमारभ्य महामर्यादिकान्तकम् २९

पञ्चकुडयस्य चोत्सेधं प्रत्येकं पञ्चधा भवेत्
जन्मादि चोत्तरान्तं वा प्रस्तरान्तं तथोदयम् ३०

कुड्यस्यान्तप्रदेशे तु युक्त्या चावृतमालिकम्
वेदिका चोपपीठ च पादप्रस्तरभूषितम्  ३१

यथेष्टभागपदेन युग्मायुग्ममथापि च
तस्यान्तः परिवारार्थं भद्रं सोपानसंयुतम्  ३२

मालिकोपरि वप्र स्यादधिष्ठानं समोदयम्
अथवा द्विगुणोत्तुङ्गं त्रिगुणं वा यथेष्टकम्  ३३

वज्राकृति च वप्राग्रं छत्रकारमथापि वा
उत्तरं वाजनं चैव मुष्टिबन्धं त्रिधान्वितम्  ३४

अधिष्ठानादि वर्गाढ्यमथवा रज्जुभित्तिकम्
प्रस्तरस्योपरिदेशे कर्णहर्म्यादिमण्डितम्  ३५

शैले वा चेष्टके वापि दार्वे वाथ प्रकल्पयेत्
शुद्धं संकीर्णं मिश्रं वा यथाशोभं यथाबलम्  ३६

युक्त्या च प्रच्छादनं कुर्यात्सुधेष्टकादिगुलोदकैः
परिवारं विमानानां मानं तद्वक्ष्यतेऽधुना  ३७

मूलहर्म्ये समं वापि त्रिपादं वार्धमेव वा
एकभूमि द्विभूमिं वा मूलहर्म्याकृति तु वा  ३८

मूलस्थलसमं वापि तन्निम्नोन्नतमेव वा
चतुर्दिक्षु चतुर्द्वारैमुपद्वारमद्वारान्तरालके  ३९

देवानां चक्रवर्तिनां मध्ये द्वारं प्रकल्पयेत्
महद्द्वारमिति प्रोक्तमुपद्वारं तु चोक्तवत्  ४०

भूसुरादिनराणां च मध्ये द्वारं न योजयेत्

मध्यसूत्रंतु वामे तु महाद्वारं प्रकल्पयेत् ४१

तद्बहिः परितो देशे सप्तसालां प्रकल्पयेत्
नारावासार्थ रथ्या च प्राकारद्वयमरिडतम् ४२

तत्तद्विस्तारमानानि दराडमानेन मानयेत्
त्रिचतुर्दराडमारभ्य द्विद्विदराडविवर्धनात् ४३

नवपङ्क्तिदराडपर्यन्तं सान्तरादिमहान्तकम्
प्रत्येकं तत्त्रिधा मानं सप्तप्राकारमीरितम् ४४

शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कार संयुतम्
चतुर्द्वारसमायुक्तं महागोपुरमायतम् ४५

दैवानां मानुषाणां च गृहप्राकारमीरितम्
एकद्वित्रिचतुष्पञ्च सालं कुर्यात्सभित्तिकम् ४६

संकुलं चेत्तु सालानां सान्तरं भित्तिकं न्यसेत्
एतानि सालमानानि हीनाधिक्यं न कारयेत् ४७

द्विङ्गुलं च समारभ्य चैकाङ्गुलविवर्धनात्
षडङ्गुलावसानं स्यात्क्रमात्सर्वे जलस्थले ४८

केचित्वङ्गुलमारभ्य एकाङ्गुलवर्धनात्
षडङ्गुलावसानं स्याद्गोपुरापानतत्समम् ४९

प्रासादादन्यशालान्तं जलस्रावार्थनिर्गमम्
कुर्यात्तु भित्तिमूले तु जलद्वारं यथेष्टदिक् ५०

जातिप्रासादाद्बहिरथ परितः सालमानं कराभ्याम्
तस्मिन् विस्तारमानं प्रथम करयुगादेकमेकेन वृद्ध्या ५१

चत्वारिंशत्करान्तं महतिरिति तत्पञ्च पञ्चप्रमाणम्
कुर्यात्क्षुद्रं क्रमात्तत्कथितमिति बुधैर्भित्तिरत्यावसानम्  ५२
इति मानसारे वास्तुशास्त्रे प्राकारविधानं नाम एकत्रिंशोऽध्यायः

## परिवारविधानम्

सर्वेषामपि देवानां प्राकारान्तं प्रविष्टके
परितः परिवाराणां लक्षणं वक्ष्यतेऽधुना  १

इन्द्रादिसाष्टदिग्देशे सान्तर्मण्डलसालके
परितो भूतबल्यर्थं क्षुद्रपीठं विनिक्षिपेत्  २

अष्टकं परिवाराणां कृत्वा चान्तरिहारके
द्वितीये च तृतीये च षोडशपरिवारकम्  ३

द्वात्रिंशच्च तृतीये वा कल्पयेत्परिवारकम्
तृतीयात्पञ्चसालान्तं विनियोगाख्यमण्डपम्  ४

कुर्यात् शिल्पिभिः प्राज्ञैः परिवारमिहोच्यते
इन्द्रे च वृषभं स्थाप्य आग्नेये चार्यकस्तथा  ५

याम्ये तु सप्तमात्र च नैर्ऋत्ये तु गणेश्वरम्
पश्चिमे सुब्रह्मण्यं च ज्येष्ठादेवीं च वायवे  ६

सौम्ये तु केशवं स्थाप्य ईशान्ये भास्करं तथा
एवञ्चाष्टपरीवारं पूर्वद्वारालयं भवेत्  ७

पश्चिमद्वारहर्म्येषु पश्चिमे तु गुहं क्षिपेत्
अथवा विनायकं प्रोक्तं नैर्ऋत्ये स्थापयेत्सुधीः  ८

सोमईशानयोर्मध्ये दिविपञ्च विनिक्षिपेत्
वह्न्यन्तकद्वयोर्मध्ये सुब्रह्मण्यालयं भवेत्  ९

याम्ये कात्यायनी वाथ द्वारं वाथ प्रकल्पयेत्
याम्ये नैर्ऋत्ययोर्मध्ये वीरभद्रालयं भवेत् १०

नैर्ऋत्ये तु गजमुखं पश्चिमे तु पितामहम्
प्रत्यङ्नैर्ऋत्ययोर्मध्ये चैकपादेश्वरालयम् ११

पश्चिमोत्तरतः स्थाप्यं चाश्विनीदेवतालयम्
वायुकोणे प्रदेशे तु सरस्वत्यालयं भवेत् १२

वायुचन्द्रद्वयोर्मध्ये ममोन्मन्यालयं भवेत्
चन्द्रस्थाने धनेशस्य चालयं कल्पयेद्बुधः १३

सोमईशानयोर्मध्ये जनार्दनालयं भवेत्
ईशे च क्षेत्रपालं च वटुकं वा प्रतिष्ठयेत् १४

ब्रह्मा-ईशानयोर्मध्ये भास्करस्यालयं भवेत्
अथवा वायुकोणे तु षण्मुखालयं भवेत् १५

परिवारं षोडशकमेवं प्रोक्तं मुनीश्वरैः
द्वात्रिंशत्परिवारस्य लक्षणं वक्ष्यतेऽधुना १६

इन्द्रे च वृषभं स्थाप्य सत्यके नन्दिकेश्वरं
भृङ्गेशं भुवनेशं च कुर्यादन्तरिक्षके १७

आग्नेयं च धनस्थानं पूषा स्थाने तु चेन्दिराम्
विदधे चैकदन्तं स्यात् मुनेशं स्याद्गृहक्षते १८

याम्ये चामुण्डिकां स्थाप्य गन्धर्वे पुष्पमण्डलम्
भृङ्गराजपदे चैव नैवेद्यार्पणवेश्मकम् १९

मृषे च वस्त्रालयं स्यान्नैर्ऋत्ये तु विनायकम्

दौवारिकपदे चैव मूर्तिशूलं समर्चयेत् २०

सुग्रीवे च त्रिमूर्तिं स्यात्स्थापयेदेकहर्म्यके
पुष्पदन्तपदे चैव पुष्पबन्धनमण्डपम् २१

वरुणस्य पदे स्थाप्य चार्धनारीश्वरालयम्
असुरस्यपदे चैव कुर्यात्तु रत्नमण्डपम् २२

देवानां भूषणावासं स्थापयेच्छेषभागिके
पुस्तकावासनं कुर्याद् रोगस्य च पदे तथा २३

षण्मुखस्यालयं कुर्याद्वायुकोणे विचक्षणः
नागस्य च पदे चैव कुर्यात्तु रत्नमण्डपम् २४

देवानां भूषणावासं स्थाप्यं च मुख्यदेशके
अथवा पार्वतो स्थाप्या भल्लाटस्यपदेऽपि च २५

सोमे च विष्णुं संस्थाप्य मनोजस्यालयं तु वा
मृगे च स्थापनार्थं च गन्धद्रव्यादिमण्डपम् २६

अदिते दक्षिणामूर्तिमुदिते चान्तदानकम्
ईशे च स्थापयेदेकं रुद्रमूर्तेस्तथालयम् २७

अथवा यज्ञशालां च स्थापयेद् भोगमण्डपम्
पर्जन्ये मज्ञनार्थाय जलपूरितमण्डपम् २८

अथवा रुद्रदेवस्य यागमण्डपमेव च
जयन्ते भास्करं स्थाप्य चेशे पाशुपतं तथा २९

अथवा कामकोष्ठं स्यादालयं कल्पयेत्सुधीः
द्वात्रिंशन्मूर्तिरेवं स्यात्कुर्यात्तु परिवारकम् ३०

तृतीये सौम्यभागे तु पानीयस्य जलं क्षिपेत्
भृशे वाथ महेन्द्रे वा भक्तरूपं प्रतिष्ठयेत् ३१

छत्रं च चामराकारं जयन्तस्य पदे तथा
तगडुलं मगडपं याम्ये पावके पचनालयम् ३२

गृहक्षते धान्यशाला ईशे च यागमगडपम्
गन्धर्वे भृङ्गराजे च स्थापकान्वद्यायम् ३३

पूषे च वितथे चैवमालये परिवारकान्
सोमे भल्लाट मुख्ये च कल्पयेत्कोशमगडपम् ३४

पुष्पदन्ते सूकरौ च शस्त्रमगडपसंयुतम्
वरुणे वासुरे वापि वस्तुनिक्षेपमगडपम् ३५

नागे वापि मृगे वापि देवभूषणमगडपम्
अदितौ चोदितौ वापि शयनार्थं च मगडपम् ३६

आस्थानमगडपं चैव चतुर्दिक्षु विदिक्षु च
स्नापनार्थमगडपं चापि स्नानमगडपमेव च ३७

गृहक्षते यमे वापि वाहनस्थानमगडपम्
मर्यादि भित्तिकस्यान्तं मगडपं वा नरालयम् ३८

श्रद्धालिङ्गं तथा स्थाप्य यथा दिक्षु विदिक्षु च
अनलानिलकोणे वा स्थापत्यालयमेव च ३९

सत्यके वा चान्तरिक्षे वाद्यकरालयं भवेत्
पूषे च वितथे चापि नाट्या कारालयं भवेत् ४०

गृहक्षते मृषश्चान्तं गणिकादीनां तथालयम्

नैर्ऋत्यादावरुणान्तं च गणिकास्यालयं भवेत्  ४१

वरुणाद्वायुपर्यन्तमारामकारकालयम्
वायुकोणादिसोमान्तं नित्यकर्मकरालयम्  ४२

सोमादीशानपर्यन्तं गान्धर्वालयमेव च
ईशादेरिन्द्रपर्यन्तं संहितार्थं च मण्डपम्  ४३

तद्बाह्ये तत्प्रदेशे वा गोशालां परिकल्पयेत्
ईशस्थाने तु कूपं स्यात्तटाकं वा प्रकल्पयेत्  ४४

चतुष्कोणे तपस्वीनां सत्रावासमठं भवेत्
समीपे वीरभद्राणां गृहश्रेणीं च कल्पयेत्  ४५

महामर्यादि देशे तु वर्णानां वासयोग्यकम्
पश्चिमे विप्रसङ्घ स्याद्दक्षिणे क्षत्रियस्य च  ४६

उत्तरे वैश्यसङ्घः स्यात्पूर्वे तु शूद्रसद्मकम्
तद्बाह्ये सर्वजातीनामालयं कल्पयेत्सुधीः  ४७

द्वारस्य वामभागे तु गजाश्वादेस्तथालयम्
उदिते चेशकोणे तु कल्पयेदर्धमण्डपम्  ४८

वायुकोणे तु बाह्ये वा पुष्पोद्यानं तु कल्पयेत्
प्राकारद्वार सर्वेषां कल्पयेद् वृषभालयम्  ४९

वृषभस्योपरि भागे तु कल्पयेद् बलिपीठकम्
गोपुरस्य बहिर्वापि स्थापयेद् बलिपीठकम्  ५०

प्रासाददण्डमानेन चैकं वा द्वित्रिदण्डकम्
गोपुराद् बलिपीठान्तं सान्तरं मानयेत्सुधिः  ५१

एकद्वित्रिचतुष्पञ्चहस्तं पीठविशालकम्
प्रासादार्धं त्रिभागैकं पञ्चभागत्रिभागिकम् ५२

अथवा द्वित्रिभागं स्यात्पीठविस्तारमेव च
पीठतारसमोच्चं वा पादार्धाधिकमेव च ५३

उपानादिपट्टिकान्तं स्यात्पीठतुङ्गमुदीरितम्
पीठतुङ्गोदयार्धेन पद्मतुङ्गं प्रकल्पयेत् ५४

वप्रे वा पट्टिके वापि विस्तारं परिकल्पयेत्
विस्तारे पञ्चभागे तु वेदार्धं पद्मविस्तृतम् ५५

पद्मतारत्रिभागैकं कर्णिकाविस्तृतं भवेत्
विस्तारसममुत्सेधं वृत्तं वा पट्टमेव वा ५६

भद्रं वा पद्मसंयुक्तं तुङ्गं प्रागुक्तवन्नयेत्
वृत्तं वा चतुरश्रं वा मूलप्रासादवद् भवेत् ५७

अधिष्ठानाकारवत्पीठं हर्म्याधिष्ठानवद् भवेत्
द्वादशाङ्गुलविस्तारमुत्सेधं क्षुद्रविस्तरम् ५८

उपाब्जं करिकर्णयुक्तं कुर्यात्तत्क्षुद्रपीठकम्
वृषभस्यालयं मानं पूर्ववत्परिकल्पयेत् ५९

मण्डपाकारवत्कुर्याद्यन्मानोरम्यमानकम् ६०

विष्णवालयपरिवारम्
विष्णवालयपरिवारलक्षणं वक्ष्यतेऽधुना
पञ्चसालमहाद्वारे द्वारदेवान्प्रकल्पयेत् ६१

द्वारस्य दक्षिणे स्थाप्य चण्डराक्षसरूपकम्

वामे प्रचराडसंयुक्तं रूपं राक्षसमेव च ६२

दक्षिणे चक्रसंयुक्तं वामे तत्पाञ्चजन्यकम्
दक्षिणे च गणेशं च वामे कात्यायनीं तथा ६३

दक्षिणे भास्करं चैव वामभागे निशापतिम्
दक्षिणे च भुजङ्गं च द्वारवामे दिवः पतिम् ६४

प्रथमादिपञ्चमान्तं स्यात्स्थापयेद् द्वारपञ्चके
एवं तु दशधा देवान्द्वाराणामुदितं क्रमात् ६५

वैनतेयः स्यात्सालासालान्तरा भवेत्
प्रमुखे चोत्तरे देशे विष्वक्सेनालयं भवेत् ६६

अन्तर्मराडलदेशे तु पूर्ववद् बलिपीठकम्
द्वारस्य दक्षिणे पार्श्वे हर्म्यं कुर्याद्दिवस्पतेः ६७

यथैवाग्निकोणे तु मृगैः लयमेव च
याम्ये कात्यायनी प्रोक्तं नैर्ऋत्ये तु विनायकम् ६८

पश्चिमे दिक्ष्वनन्तं स्याद्वायौ वासिष्टकालयम्
उत्तरे धनदं चैव ईशान्ये भास्करं तथा ६९

कात्यायनी विना याम्ये कुर्याद्वाथ पितामहः
धनदं च विना सौम्ये शङ्करस्यालयं तु वा ७०

एवं चाष्टपरीवारं षोडशं परिवारकम्
पूर्वोक्तदेवतासङ्घैः किञ्चित्किञ्चिद्विशिष्यते ७१

आग्नेये च गणेशं स्यान्नैर्ऋत्ये तु गुहं क्षिपेत्
वायव्ये तु महालक्ष्मीं चैशान्ये च सुदर्शनम् ७२

सोमईशानयोर्मध्ये शङ्करालयमेव च
वायुसोमोभयोर्मध्ये विष्णुदुर्गं तथालयम्  ७३

प्रत्यङ्नैर्ऋृत्ययोर्मध्ये चक्रमूर्तेस्तथालयम्
याम्ये च बलभद्रं स्यादनन्तं च जयन्तके  ७४

नैर्ऋृत्ये तु बौद्धं स्याज्जयन्ते पौत्रिकालयम्
शेषं प्रागुक्तवत्स्थाप्य षोडशं परिवारकम्  ७५

द्वात्रिंशत्परिवारस्य लक्षणं वक्ष्यतेऽधुना
चतुर्विंशतिमूर्तीनां दिक्पालक सहैव च  ७६

एकानावरणैः स्थाप्य चावतारान्दशापि
मत्स्यः कूर्म विना कुर्यात्तत्फलानां विना तथा  ७७

पूर्वोक्तमण्डपानां च क्तदेवान् यथेष्टवत्
कुर्याद्विष्णुपरीवारं शेषं प्रागुक्तवन्नयेत्  ७८

बौद्धं च जिनकं चैव तत्तच्छास्त्रोक्तमार्गवत्
तत्तद्वाहनं स्थाप्यं बलिपीठं च पूर्ववत्  ७९

यक्ष यक्षीश्च तीर्थानि कुर्यात्तत्परिवारकम्
अन्याश्च क्षुद्रदेवाना देवीनां परिवारकम्  ८०

तत्तद्वाहनपूर्वा च भूतपैशाचकं तथा
गणेशं क्षेत्रपालादीन् कुर्यात्तत्परिवारकम्  ८१

अन्तर्बहिश्च बल्यर्थं कुर्यात्पीठं तु पूर्ववत्
चाभुण्डालय शङ्करालय महाविष्णोस्तथालये  ८२

बौद्धस्यालये तज्जिनालयमपि क्षुद्रालये सर्वशः

शास्त्रस्यालयतोरणे कथितं तत्परिवारक कुर्वीत ८३

श्रममनु ते क्वपि विना कृत्वा तु संपद् भवेत् ८४

यन्मूलहर्म्ये वृषभादि विष्णुरादि
मण्डपादि गरुडादि गोपुरादीन्
तन्मूलहर्म्यपरितः स्थित पश्यते अस्मिन्
कुर्यात्तु सर्वपरिवारमिदं प्रशस्तम् ८५
इति मानसारे वास्तुशास्त्रे परिवारविधानं नाम द्वात्रिंशोऽध्यायः

## गोपुरविधानम्

तैतलानां नृपाणां च गोपुराणां च लक्षणम्
मानानां सार संगृह्य शास्त्रे संक्षेपतः क्रमात् १

तैतलस्योक्तमानं यन्मानुषाणां न कारयेत्
नराणां योग्यमानं यत्तैतलानां तु योग्यकम् २

क्षुद्रे क्षुद्रमानोक्तं मुख्ये मुख्यं तु मानकम्
अज्ञानाद्विपरीतं चेत्स्थाननाशं धनक्षयम् ३

तस्मात्तु गोपुरैर्मनं परिहृत्योक्तवत्कुरु
आद्यके द्वारशोभं तु द्वारशाला द्वितीयके ४

द्वारप्रासाद मध्ये च द्वारहर्म्यं मयाधिके
महामर्यादि कुड्ये महागोपुरमीरितम् ५

एवं तु कारयेच्छिल्पी सालानां द्वारके तथा
त्रिपञ्चसप्तकरान्तादेकादशकरं तु वा ६

एवं तु द्वारशोभस्य विशालं पञ्चधा मृस्तम्
पञ्चारत्नि समारभ्य त्रयोदशकरान्तकम् ७

द्वारशालाविशालं च पञ्चधा परिकीर्तितम्
सप्तहस्तं समारभ्य पञ्चत्रिधाकरान्तकम्  ८

द्वारप्रासादविस्तारं पञ्चभेदविदो विदुः
नवहस्तं समारभ्य द्विद्विहस्तविवर्धनात्  ९

सप्तादशकरान्तं स्याद् द्वारहर्म्यविशालता
एकादशकरारभ्य नवपङ्क्तिकरान्तकम्  १०

पञ्चधा विपुलं प्रोक्तं महागोपुरमेव च
पादाधिकम तदाध पादोनं तत्समाधिकम्  ११

विस्तारायामा ते सर्वे गोपुराणां विशेषतः
अथवा द्विहस्तवृद्धिं स्याच्चत्वारिशत्करान्तकम्  १२

त्रिगुणोपरिहस्तान्तं विंशदायाम शोभके
शालाविशालतामारभ्य द्विद्विहस्तविवर्धनात्  १३

पञ्चाशत्करसीमान्तं पञ्चविंशतिमायतम्
द्वारप्रासादविस्तारात्पूर्ववद्वर्धयेत्क्रमात्  १४

षष्टिहस्तावसानं स्यात्त्रिंशदायाम पूर्ववत्
द्विद्विहस्तविवृद्धेन हस्तसप्ततिकान्तकम्  १५

द्वारहर्म्यविशालोर्ध्वे पञ्चत्रिंशदायतम्
महागोपुरविस्तारं द्विद्विहस्तविवर्धनात्  १६

अशीतिहस्तावसानं चत्वारिंशत्तदायतम्
अथवारत्निमानेन वर्धमानायतं मतम्  १७

विस्तारद्विगुणान्तं च एकभागेनवर्धनात्

शोभादिगोपुरान्तस्य तारो भित्ति वशोच्यते  १८

द्वित्रिवेदशरांशं च षड्भागं शोभविस्तृते
पञ्चषट्सप्तभागं च अष्टनन्द विभाजिते  १९

एवं तु द्वारशाले तु विस्तारे तत्प्रकल्पयेत्
सप्ताष्टनवभागं च पङ्क्तिरेकादशस्तथा  २०

द्वारप्रासादविस्तारे भागमेवं प्रकल्पयेत्
अष्टनन्दांशकांशं तु एकादशार्कभागिकम्  २१

एतेषां द्वारहर्म्ये तु विस्तारो युक्तितो न्यसेत्
नवपङ्क्तिसभागं तु सैकार्कमनुभागिकम्  २२

महागोपुरविस्तारे भागमेवं प्रकल्पयेत्
तद्विस्तारार्धमुत्सेधं त्रिपादं तत्समं तु वा  २३

एवं तु द्वारपादोच्चं जन्मपादाग्रसीमकम्
तदर्धं द्वारविस्तारं तद्विशालं तथोदयम्  २४

सपादसार्धभागोन द्विगुणानां तु मानुषे
सर्वेषां द्वारतुङ्गे च विस्तारे च विशेषतः  २५

विस्तारात्पादहीनेन विस्तारार्धावसानकम्
पञ्चषट्सप्तभागे तु द्विगुणं सार्धयुग्मकम्  २६

द्विंशार्धार्धं गुणांशं वा द्वारं सर्वोदयं भवेत्
तत्तद्भागविशालं स्यात्तत्तत्तुङ्गवशेन हि  २७

तदुत्सेधार्धविस्तारं द्वारगोपुर विन्यसेत्
अथवा चोपपीठं स्यान्मानं त्यक्त्वा तथोच्छ्रयम्  २८

शान्तिकात् पञ्चधोत्तुङ्गं चाधुना वक्ष्यते क्रमात्
गोपुरस्य विशालार्धं तत्तत्पादाधिकोदयम् २९

तदर्धाधिकमुत्सेधं तत्त्रिभागाधिकोन्नतम्
तत्समं चाधिकोत्तुङ्गं द्विगुणात्पादाधिकोन्नतम् ३०

एवं तु पञ्चधा द्वारं तुङ्गं सर्वेषु गोपुरे
अथवा हस्तमानेन द्वारमानं प्रवक्ष्यते ३१

एकहस्तं समारभ्य षट्षडङ्गुलवर्धनात्
द्विहस्तान्तं द्वारविस्तारं द्वारशोभं तु पञ्चधा ३२

द्विहस्तादित्रिहस्तान्तं पञ्चधा द्वारविस्तृतम्
एवं तु द्वारशाले तु हस्तत्रय समारभेत् ३३

षट्षडङ्गुलवृद्ध्येन चतुर्हस्तावसानकम्
पञ्चधा द्वारविस्तारं द्वारप्रासादमध्यमे ३४

चतुर्हस्तं समारभ्य पञ्चहस्तावसानकम्
द्वारहर्म्ये प्रदेशे तु द्वारतारं तु पञ्चधा ३५

पञ्चहस्तं समारभ्य हस्तषट्कावसानकम्
गोपुरे द्वारविस्तारं पञ्चधा परिकीर्तितम् ३६

अथवा द्वारशोभादिगोपुरान्तं यथाक्रमम्
एकद्वित्रिचतुष्पञ्चहस्तादौ रत्निवर्धनात् ३७

पञ्चषट्सप्तहस्तं च साष्टहस्तं नवान्तकम्
एतेभ्यो द्वारसर्वेषां विस्तारद्विगुणोन्नतम् ३८

देवानां द्वारमेवोक्तं मानुषाणां विशेषतः

द्विगुणाष्टांशहीनं वा सप्तांशं चैकहीनकम्  ३९

षडंशांशैकहीनं वा पञ्चांशं चैकहीनकम्
चतुर्भागैकहीनं वा द्वारतुङ्गं प्रकल्पयेत्  ४०

उत्तराधो प्रदेशान्तं जन्मोर्ध्वं द्वारमारभेत्
द्वारोत्सेधमिदं कुर्यात्तस्यां तद्द्वारपट्टिका  ४१

शेषं युक्त्या प्रयुञ्जीयात् द्वारमेवं तु सर्वशः
मूलहर्म्यवशाद्वद्ये गोपुराणां च मानकम्  ४२

मूलप्रासादविस्तारं समं वा पादमधिकम्
अथवात्यर्धविस्तारं पादोनद्विगुणं तु वा  ४३

द्विगुणं वा प्रकर्तव्यं द्वारशोभादिविस्तारम्
प्रत्येकं पञ्चधा मानमायामं पूर्ववद्भवेत्  ४४

मूलाधिष्ठानपादस्य समाधिष्ठानपादकम्
अथवाधिष्ठानपादोच्च वेदभूतषडंशकम्  ४५

सप्तकाष्टांशकं कृत्वा तत्तदेकैकहीनकम्
शेषं तद्द्वारशोभादीन् पादाधिष्ठानतुङ्गकम्  ४६

उपपीठं विना कुर्याद् द्वारतुङ्गमिति स्मृतम्
शोभे चैकभूमिं स्याद् द्वितीये द्वितलं भवेत्  ४७

द्वारप्रासाददेशे तु त्रितलं चैव कारयेत्
हर्म्ये चतुस्तलं कुर्यात्तलं पञ्चक गोपुरम्  ४८

अन्येषां महता देशे षोडशान्तं तलान्वितम्
एकत्रिपञ्चभूमादौ द्विद्विभूमिविवर्धनात्  ४९

त्रिविधं चैकभूमौ च एकार्कतलसीमकम्
द्वित्रिवेदतलादौ च चतुर्दशतलान्तकम्  ५०

द्वितले च त्रिविधं प्रोक्तं द्विद्विभूमिविवर्धनात्
त्रितलात् पञ्चत्रयान्तं त्रितलं त्रिविधं प्रोक्तम्  ५१

चतुःषडष्टभूमादौ षोडशान्तं तलसीमकम्
कन्यसं त्रिविधं प्रोक्तं कुर्यादेवं चतुस्तले  ५२

पञ्चसप्ततलं नन्दतलादौ द्विद्विवर्धनात्
सप्तादशतलान्तं स्यात्त्रिविधं पञ्चभूमिके  ५३

देवानां मूलहर्म्ये स्यादधिकं च समोन्नतम्
शोभादिगोपुरे सर्वे चैवमुक्तं पुरातनैः  ५४

नराणां मूलहर्म्यस्य समं हीनोन्नतं तु वा
मूलस्याधिकभूमिं चेद्राजराष्ट्रं विनश्यति  ५५

एवं तु द्वारशोभे च चोक्तवत्कारयेत्शुधीः
अन्यथा द्वारदेशे तु यथाचोक्तवदाचरेत्  ५६

द्वारपादोदयो वेदभागं कुर्याद्विचक्षणः
एकांशं चोपपीठोच्चं तत्समं च मसूरकम्  ५७

द्विभागं पादतुङ्गं स्यात्कारयेल्लक्षणान्वितम्
द्वारपादोदये धातुपङ्क्तिभागं विभाजिते  ५८

उपपीठं शरांशं च वेदभागं मसूरकम्
अधिष्ठानं द्विगुणाङ्घ्रितुङ्गमेवं प्रकल्पयेत्  ५९

द्वारपादोदये नन्दभागं कुर्याद्विचक्षणः

उपपीठोदयं चाग्निभागमेव मसूरकम्  ६०

तद्द्वयं पादतुङ्गे च कुर्यादेकोनविंशतिम्
भागं तद्द्वारपादोच्चे सप्तभागोपपीठकम्  ६१

वेदभङ्गमधिष्ठानमष्टभागाङ्घ्रितुङ्गकम्
द्वारपादोदये चैव षड्भागमेवं विभाजिते  ६२

उपपीठोदयं त्विप्रं भागमंश मसूरकम्
तस्मात्तु पादतुङ्गं च द्विभागं चैव कारयेत्  ६३

द्वारपादोदयं चैवविंशद् भागं विभाजिते
उपपीठोदयं चैव नवभागं प्रकल्पयेत्  ६४

अधिष्ठानं वेदभागं तु वसुभागाङ्घ्रितुङ्गकम्
एकादशविभागे तु द्वारपादोदयं भवेत्  ६५

पञ्चांशं चोपपीठोच्चं द्व्यंशाधिष्ठान मानतः
पादतुङ्गं चतुर्भागमथवा द्वारपादके  ६६

तुङ्गे च त्रयोविंशद् भागमेवं विभाजिते
एकादशोपपीठं च चतुर्भागं मसूरकम्  ६७

वसुभागाङ्घ्रितुङ्गं स्यात्षड्भागं तु विभाजिते
त्रिभागं चोपपीठं तु शिवभाग मसूरकम्  ६८

द्विभागं पादतुङ्गं स्यात्तदूर्ध्वे प्रस्तरादिकम्
शिखान्तं चोर्ध्वमाने तु तलानामधुनोच्यते  ६९

अधिष्ठानसमं मञ्च तत्समं गलतुङ्गकम्
गलोच्चद्विगुणं प्रोक्तं शिखरस्योदयं न्यसेत्  ७०

शिखरोर्ध्वं शिखोत्तुङ्गं स्तूपित्रयसमेव च
एवमेकतलं प्रोक्तं द्वितलादितलेव च ७१

क्षुद्रमध्यं च मुख्यानां गोपुरे तु विशेषतः
प्रस्तरादिशिखान्तं स्याद् गरयमानं प्रवक्ष्यते ७२

यस्याधिष्ठानमानं च तस्यमानवशोच्यते
मसूरोच्चसमं वापि तदष्टांशोनमेव वा ७३

पञ्चअट्सप्तहीनं वा प्रस्तरोदयमेव च
ऊर्ध्वभूमाङ्घ्रिकोत्तुङ्गमधः पादवशोच्यते ७४

अष्टसप्तकषट्पञ्चभागमेकोनमेव वा
तत्तद्भागोनमानं तु ऊर्ध्वोर्ध्वचरणोदयम् ७५

तले तले प्रस्तराणां तु कारयेदेव मानतः
क्षुद्रगोपुरमेवं तु कारयेद् गरयमानकम् ७६

नवमेकादशैकार्कमधिष्ठानोदयं भवेत्
तत्तद्भागार्धभागेन शेषं तत्प्रस्तरोदयम् ७७

अथ पादोदयं तत्तद्भागोनं चोर्ध्वपादकम्
प्रस्तरं चैव मानं तु कारयेत्तु तले तले ७८

यस्य मानावस्या नान्तं चोत्तरान्तं विधीयते
तदूर्ध्वे प्रस्तरं युक्तं तस्यार्धं चोर्ध्ववेदिका ७९

तद्द्वयं गलतुङ्गं स्यात्प्रस्तरोच्चद्वयं शिरः
शिखरार्धं शिखोत्तुङ्गं तेषां गोपुरमेव च ८०

एवं तु मध्यमानं तु गोपुरणां तु गरयकम्

मुख्यगोपुरगण्यं तु वक्ष्यते विधिनाधुना ८१

पूर्ववच्चैकभूमोक्तं द्वितलादि विशेषतः
द्वारपादोदयं चैव द्वारविस्तारमानकम् ८२

उपपीठोदयं मानं मसूरकाङ्घ्रितुङ्गकम्
शेषं प्रागुक्त्वत्कुर्यादूर्ध्वमानं प्रवक्ष्यते ८३

अधिष्ठानत्रिपादं च ऊर्ध्वपादं च तुङ्गकम्
अथोपादत्रिपदं च ऊर्ध्वपादोदयं भवेत् ८४

अधोमञ्चत्रिपादं च उपरि प्रस्तरं भवेत्
अथवा भूतषट्सप्तकाष्टनन्ददशांशकम् ८५

तत्तदेकैकहीनं वा चोर्ध्वपादाधिकोदयम्
तदर्धं वेदिकोत्तुङ्गं तद्द्वयं ग्रीवतुङ्गकम् ८६

ग्रीवतुङ्गद्वयं चैव शिखरस्योदयं भवेत्
तदर्धं तच्छिखोत्तुङ्गं द्वितले पञ्चकं शिखम् ८७

प्रस्तरं पूर्ववन्मानमादिपादादि पूर्ववत्
प्रस्तरोदयमानं यत्तदर्धं वेदिकोदयम् ८८

वेदिकाश्चोर्ध्वकान्तं स्यात्पूर्ववत्परिकल्पयेत्
द्वितुङ्गे त्रिद्विनेत्रं वा सप्तनेत्रं समन्वितम् ८९

एवं त्रितलमाख्यातं चतुर्भूम्यादि होच्यते
अर्धाधिष्ठानमानं यत्षड्भागं च विभाजिते ९०

समं वा पादशरांशं वा प्रस्तरोदयमीरितम्
भूतषड्विंशकं वापि चोर्ध्वपादोदयं तथा ९१

ऋादिप्रस्तरमानं तु त्रिपादं चोर्ध्वमञ्चकम्
वेद सार्ध शरांशं तु चोर्ध्वपादोदयं भवेत् ९२

सत्रिभागं द्विभागं स्याच्चोर्ध्वपादोर्ध्वमञ्चकम्
गुणसार्धं चतुर्भागमूर्ध्वपादमथापि वा ९३

सार्धद्विभागं मञ्चं च वेदिकोच्चार्धभागिकम्
तद्द्वयं गलतुङ्गं स्यात् शिरभागं गलस्तथा ९४

शिरतुङ्गार्धभागं तु स्तूपितुङ्गं प्रकल्पयेत्
नवसंख्या शिखा प्रोक्तं द्वितलं तु च पूर्ववत् ९५

ऋथवा चतुरश्रं च स्तूपिरेकं चतुर्मुखम्
एवं चतुःस्थलं प्रोक्तं पञ्चभूम्याधुनोच्यते ९६

पूर्ववद् भागमानेन प्रस्तरं पूर्ववद् भवेत्
सार्धभूतांशकं चैवमुपरिश्चाङ्घ्रितुङ्गकम् ९७

द्वितीयं प्रस्तरोत्तुङ्गं सत्रिभागं द्विभागिकम्
ऊर्ध्वपाद शरांशं तु तृतीयं प्रस्तरोदयम् ९८

सार्धद्विभागमानेन ऊर्ध्वपाद युगांशकम्
चतुर्थं प्रस्तरोत्सेधं सपादद्वयांशकं भवेत् ९९

तदूर्ध्वङ्घ्रियुगांशं तु पञ्चभाग द्विभागिकम्
वेदिकोच्चं शिवांशं स्याद् ग्रीवोच्चं तु द्विभागिकम् १००

द्विभागं शिखरतुङ्गं स्यात् शिखरार्धं तच्छिखोदयम्
द्विललाटे महानासि चैकादशशिखान्वितम् १०१

ऋन्येषां च तलानां च प्रस्तरादि च पूर्ववत्

पादानामपि सर्वेषां प्रस्तराणां तले तले १०२

एवं मानं प्रकुर्वीत वेदिकादिगलान्वितम्
शिखरादि शिखामानं पूर्ववद्युक्तितो न्यसेत् १०३

अथवा द्वारशोभादि गोपुराणां विशेषतः
विस्तारद्विगुणोत्सेधं जन्मादिस्तूपिकान्तकम् १०४

द्विगुणार्धं च हीनं वा चाधिक्यं च त्रिधोन्नतम्
सार्धं तु द्विगुणोत्सेधं पादोनं द्विगुणोन्नतम् १०५

क्षुद्रगोपुरमेवं तु मध्यमं तत्प्रवक्ष्यते
क्षुद्रात्तु पादहीनं वा सार्धहीनोदयं तु वा १०६

एवं तु मध्यमं प्रोक्तं मध्यमात्पादहीनकम्
विस्तारादर्धमुत्सेधं मुख्यगोपुरमेव च १०७

पूर्ववत्प्रस्तराद्यन्तं चोर्ध्वे स्तूपिकान्तकम्
गण्यमानं च सर्वेषां भागमानं वशोच्यते १०८

तच्चतुर्भागिकं कृत्वा एकभागं गलोदयम्
शिखरोच्च द्विभागं कुर्यादेकांशं तच्छिखोदयम् १०९

एवमेकतलं प्रोक्तं द्वितले भागमुच्यते
कृत्वा द्विरष्टभागं यद्भूतांशं चोर्ध्वपादकम् ११०

द्विभागं प्रस्तरोत्तुङ्गमेकांशं वेदितुङ्गकम्
कोलकं गलतुङ्गं स्याद्वेदांशं मस्तकोदयम् १११

तदर्धं स्तूपिकोत्सेधं शेषं तु पूर्ववद् भवेत्
तदुद्धे पञ्चविंशांशं कृत्वा च त्रितलं विदुः ११२

द्वितीयाङ्घ्र्योच्चं षड्भागं सार्धद्वयांशकं प्रति
तदूर्ध्वे सार्धपञ्चांशं पादायामं तृतीयकम् ११३

अन्तिमं च द्विभागं स्याद् वेदिकोदयमीरितम्
ग्रीवतुङ्गंकलाभागं शिखरोच्चं युगांशकम् ११४

स्तूपितुङ्ग द्वयं प्रोक्तं प्रत्यूर्ध्वादिशिखान्तकम्
स्वाधिक्यं दशांशं तद्विभजेत्तु चतुस्थले ११५

तदंशे सार्धबन्धांशं पादोच्चं तद्वितीयकम्
अर्धाधिकशिवांशान्तं तदूर्ध्वे प्रस्तरमानकम् ११६

सार्धद्रिभाग पादोचं सपादांश कपोतकम्
सत्रिपादद्वयाङ्घ्रिश्च प्रस्तरोच्चं शिवांशकम् ११७

वेदिकोच्चं तदर्धं स्याद् ग्रीवोच्चं सार्धभागिकम्
तद्द्वयं शिखरोत्तुङ्गं तदर्धं तच्छिखोदयम् ११८

प्रस्तरस्योपरिष्टात्तु स्तूपिकान्तोदयं तथा
षट्पञ्चभागिकं कृत्वा भूतांशं पादतुङ्गकम् ११९

नेत्रांशं प्रस्तरोत्तुङ्गं सार्धवेदाङ्घ्रितुङ्गकम्
त्रिपादोपेतमेकांशं प्रस्तरोदयमीरितम् १२०

सपादवेदाङ्घ्रितुङ्गं स्यात्सार्धभागोर्ध्वमञ्चकम्
सार्धबन्ध्वाङ्घ्रितुङ्गं च पादांशं प्रस्तरोदयम् १२१

तदूर्ध्वे वेदि तुङ्गार्धं कन्धरं सार्धभागिकम्
तद्द्वयं शिखरतुङ्गं स्यात्पादांशं तच्छिखोदयम् १२२

एवं पञ्चतलं प्रोक्तं शेषं प्रागुक्तवद् भवेत्

अथवा द्वारशोभादि पादुकान्तं शिखान्तकम् १२३

भागमानवशाद् गरयमानं यत्प्रोच्यते बुधैः
पूर्वैस्तु तुङ्गमानं तद्दशभागाद्विभाजिते १२४

द्विभागं चोपपीठोच्चं तस्मादेकांश कुट्टिमम्
तद्द्वयं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम् १२५

तत्समं ग्रीवतुङ्गं स्यात्तद्द्वयं शिखरोदयम्
एकांशं तच्छिखोदयं शेषमानं तु पूर्ववत् १२६

एवमेकतलं प्रोक्तं द्वितलं भागमुच्यते
जन्मादिपूर्वपर्यन्तं नवपङ्क्त्यंशकं भवेत् १२७

त्र्यंशं चोपपीठोच्चं कुट्टिमं च द्विभागिकम्
पाददीर्घं युगांशं स्यात्सत्रिपादांश मञ्चकम् १२८

सत्रिपादद्वयांशं च मूलपादोदयं तथा
कपोतप्रतिरेकांशं वेदितुङ्गं तदर्धकम् १२९

ग्रीवोच्चमेकभागं स्याच्छिखरोच्चं कलांशकम्
तदर्धं स्तूपिकोत्तुङ्गं शेषं प्रागुक्तवन्नयेत् १३०

त्रितले पूर्ववत्तुङ्गं त्रिस्सप्तांश विभाजिते
चतुर्भागोपपीठोच्चं सार्धांशं मसूरकम् १३१

गुणांशं पादतुङ्गं स्यात्कपोतं सार्धभागिकम्
सार्धद्वयांशं पादोच्चं प्रस्तरोच्चं शिवांशकम् १३२

सपादद्व्यंशका जङ्घा मञ्चायामं त्रिपादकम्
तदूर्ध्वेऽर्धांशं वेद्युच्चं चोर्ध्वेग्रीव शिवांशकम् १३३

ग्रीवद्वयसमं मूर्ध्नि ग्रीवतुल्यं शिखोदयम्
शेषं प्रागुक्तवदुद्दिष्टं चतुस्तलमिहोच्यते १३४

जन्मादि स्तूपिपर्यन्तं कृत्वैकं त्रिंशदंशकम्
षड्भागं चोपपीठोच्चं द्व्यंशाधिष्ठानमानकम् १३५

तद्द्वयं पाददीर्घं तु सत्रिपादांश मञ्चकम्
सपादद्विंशकं पादं मञ्चतुङ्गं शिवांशकम् १३६

पादायामं गुणांशं स्यात्सपादांशं कपोतकम्
पादोनत्रिंशकं चोर्ध्वे पादायामं प्रकल्पयेत् १३७

प्रस्तरं चैकभागं स्यात्तदर्धं वेदिकोदयम्
तद्द्वयं ग्रीवतुङ्गं स्याद् ग्रीवतुङ्गद्वयं शिरः १३८

एकांशं स्तूपिकोत्तुङ्गं शेषं पूर्ववदाचरेत्
जन्मादिस्तूपिकान्तं च चत्वारिंशाष्टभागिकम् १३९

तद्भागोपानमर्धांशं ग्रीवपादाष्टकांशकम्
उपपीठमधिष्ठानं तुङ्गं सार्धद्वयांशकम् १४०

तद्द्वयं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम्
सार्धवेदाङ्घ्रितुङ्गं स्यात्सपादद्व्यंशमञ्चकम् १४१

पादाधिक्यं चतुर्भागं पाद मञ्च द्विभागिकम्
वेदांशं पादतुङ्गं च सत्रिपादांश मञ्चकम् १४२

तदूर्ध्वे चरणोत्तुङ्गं सत्रिपादगुणांशकम्
प्रस्तरात्यर्धभागं तु वेदितुङ्गं त्रिपादकम् १४३

तद्द्वयं गलतुङ्गं स्याद्गुणांशं शिखरोदयम्

सार्धभागं शिखोत्तुङ्गं मेवं पञ्चतलं विदुः १४४

शेषं च पूर्ववत्कुर्याद्द्वारशोभादि पञ्चधा
घनं चाप्यघनं चैव विन्यासमथ वक्ष्यते १४५

विस्तारायाम शोभादि पूर्ववद् गोपुरान्तकम्
यन्मानं बहिरन्येन चूलिकामानसंमितम् १४६

एकं हस्तं समारभ्य षड्षडङ्गुलवर्धनात्
शोभादिगोपुरान्तायनिर्गमं पञ्चधा भवेत् १४७

अथवा भित्तिपादं स्याद् दण्डमानेन संयुतम्
एकदण्डं समारभ्य दशदण्डावसानकम् १४८

यथा विमानसंयुक्तं तत्र दोषो न विद्यते
अज्ञान मानविच्छेद्यं सर्वदोषकरं भवेत् १४९

तस्मात्परिहरेद्विद्वान्माननिर्गममेव च
यथातारे तु धातांशं गर्भगेहं गुणांशकम् १५०

एकमावृतभित्ति स्यादेवमेकतलं भवेत्
द्वितले तार सप्तांशं वेदांशं गर्भगेहकम् १५१

परितस् सार्धभागेन भित्तिविष्कम्भमानकम्
तदंशे कूटशालामण्डितं भित्तितो न्यसेत् १५२

तत्समं चान्तरालं स्यान्मध्यकोष्ठं गुणांशकम्
तस्मात्तु कूटयोर्मध्ये चान्तरालं प्रकल्पयेत् १५३

अन्तरालं विशेषेण पञ्जरादिविभूषितम्
एवं तु द्वितलं प्रोक्तं कारयेद् द्वारशालके १५४

त्रितलेताररन्ध्रांशे गर्भगेहं गुणांशकम्
आवृतभित्तिरेकांशं तत्समांशेनालिन्दकम् १५५

तद्बहिश्चावृतांशेन कूटकोष्ठादि पूर्ववत्
द्वारप्रासादमेवं तु द्वारहर्म्यो धुनोच्यते १५६

विस्तारे दशभागे तु गर्भगेहं त्रियंशकम्
तद्बाह्येवृतभित्तिश्च अंशेनावृतलिन्द्रिकम् १५७

अंशेन कर्णहर्म्यादि परितोऽशेन कूटकम्
मुखशालैस्तु भूतांश शेषं चान्तरालकम् १५८

एवं चतुस्तलं प्रोक्तं पञ्चभूमिरिहोच्यते
विस्तारैकदशांशं तु नालिगेहं गुणांशकम् १५९

तद्बहिर्द्व्यंशमेकेन वृधा कुडयविशालकम्
तत्तद्बाह्यावृतांशेन कुर्यादालिन्द्रकं भवेत् १६०

एकांशं कूटशालादि कर्णहर्म्यावृतं तथा
एकांशं कूटविस्तारं महाशाला त्रयांशकम् १६१

एकैकं चान्तरालं स्यात्क्षुद्रशालैकभागिकम्
विस्तारद्विगुणान्येव भागमेकेन वर्धनात् १६२

यथेष्टा यततार सर्वे कूटकोष्ठादि विन्यसेत्
पादान्यान् भद्रसंयुक्तम् देशेषु पद विन्यसेत् १६३

प्रधाने चोर्ध्वदेशे वा कुर्याद् दोषो न विद्यते
एकदराडं द्विदराडं वा त्रिदराडं भद्रनिर्गमम् १६४

अन्येषां हर्म्यमानेन युक्त्या तत्रैव योजयेत्

एवं तद्धनमानोक्तमघनं वद्भ्यतेऽधुना १६५

विस्तारायामभक्ति स्यादुक्तवद्युक्तितो न्यसेत्
द्वित्रिभाग विशाले तु स्रायतं तत्प्रकल्पयेत् १६६

भक्तित्रिभागमेकांशं भित्तिविस्तारमेव च
शेषं तद्गर्भगेहं तु मध्यभागे तु वेशनम् १६७

स्रथवा चायतं वेदभागं कुर्याद् विचद्गणः
हर्म्यार्धे भित्तिविस्तारं शेषं तु गर्भगेहके १६८

भित्त्यर्धं परितोलिन्द्र द्वारदेशे विशालता
त्रिभागं भद्रविस्तारं सार्धभागं तु निर्गमम् १६९

नवपङ्क्तंशकं चापि रुद्रभागांशमेव च
एवं तु मध्यकोष्ठं च निर्गमं च द्विभागिकम् १७०

तस्य मध्ये तु भद्रं वा पञ्चषड्भागमेव वा
स्रथवा सप्तभागं तु वसुभागं तथैव च १७१

एकांशं निर्गमं कुर्यात्षट्सप्तांशमथापि वा
एवं तु चान्तरालं स्यान्मध्ये मध्यशालयुक् १७२

द्विभागं वा त्रिभागं वा विस्तारं निर्गमांशकम्
तद्द्वयोरन्तरं कुर्याद्युक्त्या तत्रैव भूषितम् १७३

एकं वा कर्णकूटं तु तथैवान्तर्विशेषतः
भित्तिबाह्यावृतांशेन कर्णकूटाद्बहिस्तथा १७४

एवं जलस्थलं प्रोक्तमूर्ध्वाधोभूमि विन्यसेत्
शेषं तु पूर्ववत्कुर्यादेवं तु त्रितलं मतम् १७५

मध्यकोष्ठविशाले तु पूर्ववत्स्वांशमाधिकम्
शेषं प्रागुक्तवत्कुर्यात्सर्वं युक्त्या प्रयोजयेत् १७६

द्वारप्रासादमेवं तु त्रितलेष्वेव कारयेत्
गोपुरे तु चतुर्भूमिविन्यासं च मयाधुना १७७

विस्तारे रुद्रभागं तु पूर्ववदायतं मतम्
अष्टांशाद्येकभागान्तं पञ्चधा विपुलं भवेत् १७८

तत्तद्द्विगुणसीमाग्रन्तं भागमेकेन वर्धनात्
एवं चायमिदं प्रोक्तं भित्तिगेहमिहोच्यते १७९

त्रिचतुष्पञ्चषडभागं सप्तांशं कुड्यविस्तारम्
शेषं तु नालगेहं तु पञ्चधा परिकीर्तितम् १८०

भित्तिबाह्यांशकांशेन द्विभागं च तले तले
ललाटे भद्रमेकांशं विस्तारं निर्गमार्धकम् १८१

अन्तस्त्वलिन्द्रकं वापि भित्तिकं वाङ्घ्रिकान्वितम्
तद्धवालिन्द्रकं युक्त्या जालकानाङ्घ्रिकान्तरे १८२

घनं वाप्यघनं वापि भित्तिं कुर्याद् विचक्षणः
आयामे मध्यमे द्वारं भित्तिदेशे द्वयं न्यसेत् १८३

गेहे तद्वल्ललाते च उपपीठाकृतिस्तलम्
अथवा वप्रवद्युक्त्या यथेष्टमुत्सेध मानयेत् १८४

स्तम्भयुग्गोपुरं ज्ञात्वा विस्तारे चोत्तरान्तकम्
तत्त्रिभागद्विभागं वा भित्तिरेकेन कारयेत् १८५

स्थापयेद् भागमेकं चेत्तत्सूत्राद्बहिराश्रितम्

अखोत्तरायते न्यस्य तिर्यक् तौलिं प्रकल्पयेत्  १८६

पादं वायते तौलिं कुर्याद्युक्त्या विचक्षणः
तदूर्ध्वे जयन्तिकं कुर्यात्तत्तत्प्रच्छादनान्वितम्  १८७

अथवा त्रिचतुर्भागं विस्तारायामकं तथा
भित्तितारार्धभागं तु शेषं तद्गेहमानकम्  १८८

तत्समं परितोलिन्द्रं शेषं तत्पूर्ववद्भवेत्
अथवा चायतं मानमेकभागाधिकं तथा  १८९

पूर्ववद् भित्तिविस्तारमेकांशावृतालिन्द्रकम्
त्रिभाग मध्यभद्रं च शेषं पूर्ववदाचरेत्  १९०

चतुर्भागविशाले तु पञ्चभागायतं तथा
भागार्धं भित्तिविस्तारं शेषं गर्भगेहं भवेत्  १९१

एकं च परितोद्वारं मध्यभद्रं त्रिभागिकम्
निर्गमं चैकभागेन तत्तद्भद्र द्विभागिकम्  १९२

एकांशं निर्गमोपेतं युक्त्या शेषं तु पूर्ववत्
चतुःषड्भागविस्तारमायामं प्रविधीयते  १९३

एकभागेन कुड्यं स्यान्नालिगेहं तु शेषकम्
एकभागावृतालिन्द्रं मध्यभद्रं युगांशकम्  १९४

तदर्धं नेत्रभद्रं स्यात्तदर्धं भद्रनिर्गमम्
अष्टभागं तथायामं मध्ये भद्रं षडंशकम्  १९५

शेषं तत्पूर्ववत्प्रोक्तं कुर्यात्तच्छिल्पिवित्तमः
पञ्चषड्भागविस्तारे चायामं तद्विभाजिते  १९६

नेत्रभद्र द्विभागं तत् शेषांशं पूर्ववद् भवेत्
पञ्चभागविशाले तु सप्तभागं तथायते १९७

मध्यभद्रं तु भूतांशे विस्तारं चैकनिर्गमम्
अन्येषां पूर्ववत्कुर्यादथवांशाधिकायतम् १९८

षड्भागं भद्रविस्तारमेकभागेन निर्गमम्
शेषं पूर्ववदुद्दिष्टं तदर्धांशाधिकायतम् १९९

पञ्चाशं भद्रविस्तारं निर्गमं चैकभागिकम्
शेषं प्रागुक्तवत्कुर्यात्पङ्क्तिभागदयं तथा २००

षड्भागं मध्यभद्रं च अन्येषां पूर्ववद् भवेत्
षडंशं भागमाधिक्यं विस्तारायामकं तथा २०१

एकांशं भित्तिविस्तारं परितः शेषं तु गेहकम्
एकभागावृतालिन्द्रं पञ्चांशं मध्यभद्रकम् २०२

नेत्रभद्रं चतुर्भागमेकांशं भद्रनिर्गमम्
एकभागाधिकायामं मध्यभद्रं षडंशकम् २०३

तस्मदाधिक्यभागं तु भूतांशं भद्रमीरितम्
आयामे दशभागे तु भद्रतारं षडंशकम् २०४

आयामे रुद्रभागं तु सप्तांशं भद्रविस्तरम्
द्वादशांशं तथायामे मध्यभद्रे गजांशकम् २०५

निर्गमं चैकभागं स्याच्छेषं प्रागुक्तवर्णयेत्
एवं तद्द्वारशोभं स्यादेकभूमिरिति स्मृता २०६

विस्तारे पञ्चभागे तु एकभागाधिकायतम्

त्रिचतुर्भागनालं स्याच्छेषं भित्तिविशालकम्  २०७

तद्बहिः परितोंऽशेन कूटकोष्ठविशालकम्
एकांशं कर्णकूटं च हारतारैकभागिकम्  २०८

मध्यकोष्ठं त्रिभागं च युक्त्या तत्रैव योजयेत्
एवं ललाटयोश्चैव दीर्घं विन्यासमुच्यते  २०९

कर्णकूटद्वयं चैव तद्भागद्वयमीरितम्
अन्तरालद्वयं पक्षं भागं कुर्याद् विचक्षणः  २१०

मध्यकोष्ठं चतुर्भागं निर्गमं च द्विभागिकम्
अथवात्यर्धभागं च सपादांशैकमेव च  २११

मध्यकोष्ठमिदं प्रोक्तं नेत्रदीर्घ द्वयं तथा
मध्यकोष्ठं चतुर्थं च कर्णकूटं चतुष्टयम्  २१२

हारान्तराष्टदेशे तु तोरणाद्यैर्विभूषितम्
अथवांशाधिकायामं पूर्ववद् भित्तिविस्तृतम्  २१३

मध्यभद्रोच्चभद्रं च त्रिभागं विस्तृतं भवेत्
निर्गमं चैकभागं स्याल्ललाटांशे तु पूर्ववत्  २१४

तस्मादधिकांशायामं पूर्ववद् विस्तृतं भवेत्
मध्यभद्र युगांशं स्यारान्तर द्विभागिकम्  २१५

मध्यकोष्ठं युगांशं स्यात्कुर्याच्छेषं तु पूर्ववत्
नवभागं तथायामे मध्यकोष्ठं शरांशकम्  २१६

अथवा वेदभागं च आयामे तत्प्रकल्पयेत्
मध्यकोष्ठं तु षड्भागं मध्यभद्रं द्विभागिकम्  २१७

तदर्धं निर्गमं प्रोक्तमन्तरालं द्विभागिकम्
शेषं पूर्ववदुद्दिष्टमथवा रसभागिकम् २१८

विस्तारं सप्तभागं स्यादायामं च विशेषतः
एकांशं तद्गतं भित्तितारं शेषं च नालिका २१९

तद्बाह्ये परितश्चांशं कर्णकूटादिमानकम्
मध्यकोष्ठं द्विभागं स्यात्त्रिभागं चान्तरालकम् २२०

आयामे मध्यकोष्ठं च त्र्यंशं हारं द्विभागिकम्
अष्टांशं च तथायामं मध्यकोष्ठं युगांशकम् २२१

नवभागं तथायामे कोष्ठायामं शरांशकम्
त्रिभागं वास्यभद्रं स्यान्निर्गमं चैकभागिकम् २२२

दशभागं तथायामे पूर्ववत्परिकल्पयेत्
एकादशांशकं कुर्यात्पञ्चांशं मध्यकोष्ठकम् २२३

द्वादशांशं तथायामे शालायामं षडंशकम्
मध्ये द्विभाग भद्रं स्यान्निर्गमं चैकभागिकम् २२४

हारस्य मध्यदेशे तु अनुशाला विशालकम्
तत्पार्श्वद्वययो हारं नासिकापञ्जरान्वितम् २२५

शेषं तु पूर्ववत्कुर्यातद्युक्त्या तत्रैव योजयेत्
विस्तारे सप्तभागं तु वसुभागं तथायतम् २२६

भित्तिविस्तारमेकांश परितः शेषान्तरालिकम्
तत्तद्बाह्यावृतांशेन शेषमूह्यं विचक्षणैः २२७

नवभागं तथायामे दशभागमथापिवा

एकादशांशकं वापि विन्यसेच्चैव पूर्ववत्  २२८

त्रयोदशांशमायामे मध्यशाला विशालयुक्
त्रिभागं चान्तरालं स्याच्चतुर्दशायतं तथा  २२९

मध्यकोष्ठं तदष्टांशं शेषं प्रागुक्तवन्नयेत्
अथवा चाष्टभागं तु विस्तारं तु नवायतम्  २३०

द्विभागं भित्तिविस्तारं शेष नालिगृहं मतम्
तद्बाह्ये परितश्चांशं कर्णकूटाद्यमानकम्  २३१

अथवा दशभागं स्यात्तदेकादशभागिकम्
द्वादशांशायतं वाथ त्रयोदशायतं ततः  २३२

चतुर्दशायतं वापि पञ्चादशांशदीर्घकम्
मध्यकोष्ठं शरांशं स्यात्तत्समं चान्तरालकम्  २३३

तस्य मध्ये विशेषेण त्रिभागं चानुशालकम्
एकं चाध्यर्धभागं वा मध्यकोष्ठन्तु निर्गमम्  २३४

द्व्यष्टभागं तथायामे मध्यकोष्ठं रसांशकम्
शेषं पूर्ववदुद्दिष्टं नवभागमथापि वा  २३५

विस्तारं चायतं पङ्क्तिभागं कुर्याद् विचक्षणः
भित्तिरारं कलांशं स्यात्तद्बहिः परितोंशकम्  २३६

एवं तु कूटशालाद्यैर्मानं कुर्याद् विशेषतः
अथवांशाधिकायामं द्वादशांशायतं तु वा  २३७

त्रयोदशांशकं वापि द्विसप्तभागमेव च
पञ्चादशांशकं वापि षोडशांशं तदायतम्  २३८

विन्यासं पूर्ववत्कुर्यात्सप्तदशांशमायतम्
मध्यकोष्ठं नवांशं स्यात्तन्मध्ये भूतभागिकम्  २३९

विस्तारे मध्यभद्रं तु निर्गमं चैकभागिकम्
अन्तरालं चतुर्भागं तन्मध्ये द्व्यंश भद्रकम्  २४०

अथवाष्टादशांशं तु आयामं तत्प्रकल्पयेत्
दशांशं मध्यकोष्ठं च षडंशं मध्यभद्रकम्  २४१

घनं वाप्यघनं वापि भित्तिं कुर्याद् विचक्षणः
ऊर्ध्वभाग विशेषेण कर्णहर्म्यादिमण्डितम्  २४२

तत्रैवाभ्यन्तरं चाथ भागमेवं जलस्थलम्
तद्बाह्ये चोर्ध्वभागं तु भित्तिरेवं तथैव च  २४३

अथवा दण्डमानेन वेशनं निर्गमं तथा
एतेषां द्वारशाले तु द्वितलं कारयेद् बुधः  २४४

गोपुरं त्रितलं न्यासं लक्षणं वक्ष्यतेऽधुना
सप्तांशं च द्विसप्तांशं भागं चैकैकवर्धनात्  २४५

एवमायमिदं प्रोक्तं शिल्पिभिः प्रवरैः कृतम्
द्विभागं भित्तिविस्तारं परितः शेषं तु गेहकम्  २४६

तस्य बाह्यावृतं ज्ञात्वा भागं कुर्याज्जलात्स्थले
तद्बहिः परितोंऽशेन कर्णहर्म्यादिमण्डितम्  २४७

तत्तस्मादावृतांशेन आदिदेशे जलस्थलम्
तत्समं तद्बहिः कुर्यात्कूटशालाद्यमानकम्  २४८

मध्यशालाष्टभक्तिः प्रोक्तं कर्णकूटाष्टकं तथा

हाराषोडश संयुक्तं शेषं प्रागुक्तवन्नयेत्  २४९

अष्टभागं तु विस्तारमायामं तेन वर्धनात्
षोडशांशं यथा न्याय्यं पूर्ववद्विधिना चरेत्  २५०

नवांशं विस्तृतारभ्य वसुपङ्क्त्यवसानकम्
आयाममिति हि प्रोक्तं विन्यासं पूर्ववद् भवेत्  २५१

विशालं दशभागं द्वाविंशभागावसानकम्
नवपङ्क्त्यंशेकविंशांशं दीर्घविन्यासमुच्यते  २५२

नन्दपङ्क्त्यंश विभजेच्चतुस्तले तु त्रिवर्गकम्
षट्सप्ताष्टभागं वा नवार्धं वार्धरुद्रकम्  २५३

भानु सैकार्कभागं तु मध्यकोष्ठविशालकम्
शेषं चान्तरालं च द्विभागं कर्णकूटकम्  २५४

मध्यशाला विशेषेण पञ्च षट् सप्तकं भवेत्
द्विभागं वा त्रिभागं वा शालामध्ये तु भद्रकम्  २५५

एकं वा द्विभागं वा त्रिभागं निर्गमं तु वा
अथवा हारदेशे तु एकद्वित्रियुगांशकम्  २५६

मध्यकेत्वनुशालाश्च निर्गमं चैकभागिकम्
शेषं तु चान्तरालानां नासिकापञ्जरान्वितम्  २५७

अधोभूमिश्चान्तराले कुम्भकुम्भतलान्वितम्
भद्रं वापि विभद्रं वा कर्णहर्म्यादिमण्डितम्  २५८

हारं च कर्णकूटं च उत्तरान्तं शिखान्तकम्
मध्यकोष्ठस्य शाले तु भद्रशाला विशेषतः  २५९

पञ्चशालान्वितं वाथ ऊर्ध्वशालान्वितं तुवा
नीडाकारयुक्तं वापि चार्धशालान्वितं भवेत् २६०

उत्तरान्तं कपोतान्तं प्रतिकान्तमथापि वा
एवं च मध्यकोष्ठे तु शालानामुन्नतं मतम् २६१

शालातटे भद्रकोष्ठं वासकोष्ठं वा कल्पयेत्
एवमेतद्दशांशेन शेषं तु युक्तितो न्यसेत् २६२

एवं चतुस्थलं प्रोक्तं नवांशारम्भं पूर्ववत्
तस्मादायते सर्वे द्विगुणान्तांश पूर्ववत् २६३

वेदभूतरसांशेन सप्तभागाष्टभागिकम्
एवं तु भित्तिमानं तु शेषं तन्नालिकं भवेत् २६४

भित्तिबाह्यं तु वृद्धिः स्यात्परितश्चैकभक्तितः
अष्टभागावसानं स्याद् बाह्यमानं तु पूर्ववत् २६५

कर्णहर्म्यादिविन्यासं तच्चतुर्वर्गकान्तकम्
मध्यकोष्ठविशालं तु पूर्ववत्परिकल्पयेत् २६६

शेषं तु चान्तरालं स्यात्कूटानां विन्यसेद् बुधः
अन्यान्यनुक्तमानानां चतुर्भूम्युक्तवत्कुरु २६७

निर्गमं च प्रवेशं चालङ्कारं वक्ष्यतेऽधुना
विस्तारे वसुभागं स्याद् विभजेत् पृथुरेव च २६८

तदर्धांशावृतं बाह्ये सालं शेषं विदन्विकम्
वेदितारं चतुर्भागं त्र्यंशं तद्ग्रीवविस्तरम् २६९

वेदितुल्यं शिरो तारं शेषं प्रासादवद् भवेत्

द्विललाटे महानासि तद्वयोर्मध्यनासिकम्  २७०

तच्छालानासिकं वापि कर्तव्याकृतिनासिका
अन्यान्तरप्रदेशे तु क्षुद्रनासीं प्रभूष्यते  २७१

नेत्रनासीविशाले तु रसतारसमं भवेत्
त्रिकभाग द्विभागं वा पञ्चभागं त्रिभागिकम्  २७२

चतुर्भागं त्रिभागं वा मध्यनासीविशालकम्
तत्त्रिभागैकभागं तु पञ्चभागद्विभागिकम्  २७३

चतुर्भागद्विभागं वा क्षुद्रनासीविशालकम्
पादाधिक समं वापि पादहीनं तथोच्छ्रयम्  २७४

महानासिमौलितुङ्गं स्तूपिकाग्रावसानकम्
मध्यनासि तथामौलिं चाग्रं तत् बलिकान्तकम्  २७५

युक्त्या तत्क्षुद्रनासीनां कारयेच्छिल्पिवित्तमः
शालाकारं शिखाकारं स्थूपिकानावृतं तथा  २७६

गलकूटोपसंयुक्तं क्षुद्रनासिचतुष्टयम्
श्रीभोगाख्यमिदं प्रोक्तमष्टनासी जयान्तकम्  २७७

क्षुद्रनास्यर्कसंयुक्तं श्रीविशालं तथैव च
षोडशक्षुद्रनास्यङ्गं विष्णुकान्तमिहोच्यते  २७८

क्षुद्रनास्या तथा विंशत् इन्द्रकान्तं प्रकथ्यते
क्षुद्रनासी विना कुर्याद् ब्रह्मकान्तमिति स्मृतम्  २७९

गलकूटं विनाकुर्यात् स्कन्दकान्तं विशिष्यते
मध्यनास्युन्नतं तत्र नासिका पञ्जरान्वितम्  २८०

एवं तु शिखरं प्रोक्तं कर्करीनासिकाकृतम्
शालाकोष्ठ विशेषेण स्तूपिकान्तं प्रकल्पयेत् २८१

भद्रशालां तु तत्कुर्यात्सौम्यकान्तमुदीरितम्
एतानि दशभेदः स्याच्छिरो सर्वेषु योजयेत् २८२

गोपुराघनसर्वेषु यत्तलाद्यैर्विशेषतः
सर्वाविन्द्रस्य बाह्ये तत्पादं त्यक्त्वा प्रकल्पयेत् २८३

अनुक्तमन्यतो ग्राह्यमग्राह्यमवसीदति
वातायनलक्षणम्
वक्ष्ये वातायनानां च लक्षणं विधिनाधुना २८४

सर्वेषामपि हर्म्याणां मण्डपादीनि वस्तुनि
तथा वातायनस्थानं तथा वै चोक्तवर्णयेत् २८५

तैतलानां तु तं तं तु नराणां हेष्यते बुधैः
नराणां जालकं सर्वं देवानामपि योग्यकम् २८६

तद्विस्तारोदयं सर्वं प्राचीनोक्तं विचारयेत्
पादपालिकया युक्तं पत्रपुष्पैरलङ्कृतम् २८७

देवानां जालकानां च मध्यरन्ध्रसमन्वितम्
द्विजानां भूपतीनां च मध्यस्तम्भं विसर्जयेत् २८८

मध्यमं पट्टिकायुक्तं कुर्याच्छिल्पिविचक्षणः
वैश्यानां शूद्रजातीनां मध्ये स्तम्भं प्रयोजयेत् २८९

न कुर्यात् पट्टिकमध्ये चैकं मञ्जं शुभावहम्
उक्तलक्षणहीनं तु नहि कुर्याद्यथेच्छया २९०

अर्थनाशं श्रवाहीनं भविष्यति न संशयः
नागबन्धं तथा वल्ली गवाक्षं कुञ्जराक्षकम् २९१

स्वस्तिकं सर्वतोभद्रं नन्द्यावर्ताकृतिस्तथा
पुष्पबन्धं सचित्राङ्गं रत्नसङ्घैरलङ्कृतम् २९२

एषां वातायनरूपं नागवल्यादि दैवतम्
उक्तवद्विस्तृतायामे नन्दनन्दपदं भवेत् २९३

भुजङ्गद्वयमेकं स्यादेकादशपदे त्रिधा
नाग वेदाष्टभागं वा कुर्याद् वातायनं बुधः २९४

सप्तसप्तपदं कृत्वा पत्रवल्यादिमण्डितम्
युग्मायुग्मपदैर्वाथा चान्यवातायनेपि च २९५

एकद्वित्रिचतुःपञ्चमात्रैरङ्घ्रिकपट्टिका
तद्विस्तारघनं सर्वं कुर्याद् वै शिल्पिवित्तमः २९६

गोपुरे कूटकोष्टादिग्रीवे पादान्तरे तथा
घने वाप्यघने वापि यथा वातायनैर्युतम् २९७

अन्यैस्तु वास्तुसर्वेषां यथाचोक्तवदेशके
कुर्याद् वातायनं सर्वं श्रीसंपत्प्रदायिकम् २९८

प्रथमात्तु सार्धकर षट्षड्मात्रवृद्ध्या
तत्पञ्चबाहुमवधि त्रिविशालमेके २९९

शोभादिपञ्चदश पञ्चविधप्रमाणम्
द्वारेषु चैव विदितं द्विगुणोदयं स्यात् ३००

इति मानसारे वास्तुशास्त्रे गोपुरविधानं नाम त्रयस्त्रिंशोऽध्यायः

## मरडपविधानम्

सर्वेषां मरडपानां तु लक्षणं वक्ष्यतेऽधुना
तैतलानां द्विजातीनां वर्णानां वासयोग्यकम् १

भक्तिमानं तथा भित्तिविस्तारं चाप्यलिन्द्रकम्
प्रपाङ्गं मरडपाकारं पञ्चभेदं क्रमोच्यते २

अत्यर्धहस्तमारभ्य षट्षडङ्गुलवर्धनात्
पञ्चहस्तान्तकं भित्तिपञ्चादशविशालकम् ३

विस्तारस्य समं दीर्घमधिकं चैकमेव वा
विस्तारद्विगुणान्तं च एकैकाङ्गुलवर्धनात् ४

विस्ताराष्टांशकांशेन वर्धनाद् द्विगुणान्तकम्
एवं भक्त्यायतं प्रोक्तं भक्तितारमिहोच्यते ५

एकं हस्तं समारभ्य षट्षडङ्गुलवर्धनात्
भक्तितारं द्विहस्तान्तं पञ्चधा परिकीर्तितम् ६

एकभक्ति द्विभक्तिं वालिन्द्रविस्तारमेव च
अधिस्ठानं विना कुर्याज्जन्मादिप्रस्तरान्तकम् ७

अथवा पादवंशं च संयुक्तं तत्प्रपाङ्गकम्
खदिरं खादिरं चैव घातपादस्य दारुभिः ८

अन्यैः सारद्रुमैः प्रोक्तं होमान्तं पाद दारु च
मधुकं क्षीरिणी सालै रन्यैः श्रेष्ठद्रुमोत्तमम् ९

अथवा शिलासंयुक्तं प्रपासर्वाङ्गमेव च
शुद्ध मिश्रं च संकीर्णं यथाशोभं बलं तु यत् १०

यथालाभं द्रुमैः स्तम्भैः वंशे त्ववसारवृक्षकम्
क्रमुकं स्तम्भयुक्तं वा घातयेत्स्थापयेत्सुधीः ११

क्रमुकैर्वंशयुक्तं वा वेणुभिश्चोर्ध्ववंशकम्
दीर्घं च तिर्यग्वंशं चोर्ध्वे तद् दीर्घवंशकम् १२

नालिकेरदलाभिश्च बध्वा त्वाच्छादनं भवेत्
अन्यैरपि दलास् सर्वे यथालाभं वितानयेत् १३

वातेन त्वचलं तत्र कुर्याद्दक्षिणिका प्रपा
प्रपाङ्गं च प्रपाश्चैतत्कुर्यात्तत्तद्विचक्षणः १४

देवालये गृहे वापि मण्डपे पृथगेववा
अन्तर्वापि बहिर्वापि परितस्तु यथा प्रपा १५

यत्र देशे प्रपां कुर्यात्तत्र दोषो न विद्यते
इति प्रपाङ्गमुक्तं तं मण्डपं वक्ष्यतेऽधुना १६

देवालयेषु सर्वेषु संमुखे बहुमण्डपम्
पुण्यक्षेत्रे तथारामे ग्रामादौ वास्तुमध्यमे १७

चतुर्दिक्षु विदिक्षु वापि बाह्याभ्यन्तरतोऽथवा
नराणां गृहमध्ये च संमुखे मण्डपं तु वा १८

सर्वेषां वासयोग्यार्थं मण्डपं यागमण्डपम्
नृपाणामभिषेकार्थं मण्डपं नृत्तमण्डपम् १९

पाणिपीडनसिद्ध्यर्थं तथा मैत्रं च मण्डपम्
उपनयनमण्डपं चैव तथा च स्नानमण्डपम् २०

अर्भकानां मुखालोकं मण्डपं सतीमण्डपम्

न्तौरार्थं मराडपं चैव चाग्निकार्यार्थमराडपम्  २१

सुखान्वितार्थं कल्पेत मराडपं विधिवत्क्रमात्
मराडपानां च सर्वेषां स्थानमुक्तं पुरातनैः  २२

प्रासादाभिमुखे सप्तमराडपं कल्पयेत्क्रमात्
आदौ स्नपनार्थं च द्वितीयाध्ययनमराडपम्  २३

विशेषं स्नपनार्थं च मराडपं च तृतीयकम्
चतुर्थं प्रतिमागारं पञ्चमं स्थापनमराडपम्  २४

षष्ठं चापि ततः कुर्यात्तत्तीर्थमराडपम्
सप्तमं नृत्तगीतार्थमागार तत्साधकार्थकम्  २५

अथवा तन्मुखे कुर्यादेकद्वित्रि च मराडपम्
स्नपनं प्रतिमाङ्गानां गीतनृत्तार्थमराडपम्  २६

मराडपं द्वितीयं चैतत् अग्रमराडप तन्मुखे
आदौ चाध्ययनार्थं स्यात्प्रतिमामराडपं तथा  २७

तत्रैव मराडपं कुर्यात्प्रतिमामराडपं बुधः
त्रिचतुःपञ्चषट्सप्तचाष्टरन्ध्रं विभित्तिकम्  २८

प्रथमात्सप्तमान्तं च भित्तिरेकं प्रकल्पयेत्
तस्मात्तथैकपङ्क्त्यन्तमेकभागैर्विवर्धनात्  २९

मराडपानां च सप्तानां प्रत्येकं पञ्चधा भवेत्
एवं तु चतुरश्रं स्यात्तस्मादेकेन वर्धनात्  ३०

तत्समाधिकायामं समं वा चायतं तु वा
युग्मभित्तिश च यः कुर्यान्मध्यस्तम्भान्परित्यजेत्  ३१

तत्त्वधिष्ठान पादं च प्रस्तरं च त्रिवर्गकम्
तदूर्ध्वे मराडपानां च चूलिकाकर्णहर्म्यकम्  ३२

अन्तर प्रस्तरोपेतं कुर्यात्तु समलङ्कतम्
सोपपीठमधिष्ठानं केवलं वा मसूरकम्  ३३

हर्म्योपपीठयुक्तं चेत्सोपपीठादिमराडपम्
पीनोपपीठहर्म्यं चेन्मराडपं च त्रिवर्गकम्  ३४

हर्म्यं च विपरीतं चेत्स्वामिनो मरणं ध्रुवम्
प्रस्तरं तत्र यत्तत्र प्रासादवदलङ्कतम्  ३५

प्रासादवदलङ्कत्य चाधिकालङ्कतं तु वा
बाह्यं चालयवद् भूष्यं मराडपान्तमितीष्यते  ३६

तेषां क्रमेण विन्यासं लक्षणं वक्ष्यतेऽधुना
चतुरश्रसमाकारं सममानं त्रिभित्तिकम्  ३७

षोडशस्तम्भसंयुक्तं चतुर्द्वारसमन्वितम्
चतुर्दिक् भद्रविस्तारमेकभागेन निर्गमम्  ३८

चतुरश्रं चतुर्भक्तिः षोडशस्तम्भसंयुतम्
चतुर्दिक्षु चतुर्द्वारमेकभागेन भद्रकम्  ३९

द्वात्रिंशत्क्षुद्रनास्यङ्गं शेषं प्रागुक्तवन्नयेत्
षड्भागं चतुरश्रं स्यात् षट्त्रिंशत्पादसंयुतम्  ४०

चतुर्दिक्षु चतुर्द्वारं मध्यपादान्परित्यजेत्
द्विभक्त्यै भक्त विस्तारमेकभागेन निर्गमम्  ४१

द्वात्रिंशत्क्षुद्रनास्यङ्गं सर्वालङ्कारसंयुतम्

चतुःषष्टयङ्घ्रिसंयुक्तं सप्तसप्तद्विभागिकम् ४२

चतुष्पादं त्यजेन्मध्ये चतुर्द्वारं चतुर्दिशि
त्रिभक्तिविस्तृतं भद्रमेकभागेन निर्गमम् ४३

षष्ठ्यङ्घ्रिकयुक्तं वापि तन्मध्ये चोर्ध्वकूटकम्
चत्वारिंशत्तु नास्यङ्गं शेषं पूर्ववदाचरेत् ४४

चतुरष्टाष्टभित्तिश्च चतुःषष्टयङ्घ्रिसंयुतम्
चतुर्दिक्षु चतुर्द्वारं मध्यपादान्परित्यजेत् ४५

चतुर्भागेन भद्रं स्यादेकभागेन निर्गमम्
पूर्ववत्क्षुद्रनास्यङ्गं युक्त्या तत्रैव योजयेत् ४६

नन्दनन्दविभागेन विस्तारायामतत्समम्
कल्पयेन्नवरङ्गं स्यात्षट्षट्पादान्परित्यजेत् ४७

नन्दाष्टभागसंयुक्तं त्रिभागैकेन भद्रकम्
चतुर्दिक्षु चतुर्द्वारं तत्तदग्रे सभद्रकम् ४८

सर्वालङ्कारसंयुक्तं षडष्टे वाल्पनासिका
तन्मध्ये चोर्ध्वतुङ्गं स्याच्चत्वारिंशाष्टनासिकम् ४९

तदेवषोडशस्तम्भं त्यजेत्कर्णचतुष्टये
चतुर्दिक्षु चतुर्भागं वेदभागैकभद्रकम् ५०

सर्वालङ्कारसंयुक्तं शेषं युक्त्या प्रयोजयेत्
एकादशभागेन मण्डपं चतुरश्रकम् ५१

सालिन्द्रं नवरङ्गं स्यादष्टोत्तरशताङ्घ्रिकम्
तद्बहिः परितोलिन्द्रमेकभागेन कारयेत् ५२

चतुर्दिक् पञ्चभागेन भद्रं चांशेन निर्गमम्
चतुर्दिक्षु चतुर्द्वार चतुःषष्टयल्पनासिकम्  ५३

नभोर्ध्वे कूटसंयुक्तं सर्वालङ्कारसंयुतम्
एवं तु चतुरश्रं स्यात्तदायाममिहोच्यते  ५४

त्रिभक्ति विस्तृतं चैव षड्भक्त्यायाम कल्पयेत्
मूलाग्रे द्वारसंयुक्तं पार्श्वे द्वारं न योजयेत्  ५५

अथवा हीनाधिकांशेन दीर्घ मध्ये प्रवेशनम्
अंशेनावृतालिन्दं स्यात् शेषं प्रागुक्तवन्नयेत्  ५६

चतुर्भाग विशाले तु चाष्टभागायतं तथा
द्व्यंशषड्भाग विस्तारं दीर्घ मध्ये च मण्डपम्  ५७

परितस्तस्य बाह्ये तु भागेनालिन्द्र मिष्यते
यथेष्टद्वारसंयुक्तं शेषं प्रागुक्तवन्नयेत्  ५८

भूतभागेन विस्तारं दशभागं तथायतम्
तन्मध्ये त्र्यंशविस्तारं चाष्टांशायाममण्डपम्  ५९

तद्बहिः परितो वा रमेकभागेन कारयेत्
शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्  ६०

षड्भागेन विशालं स्यात्तत्समेनाधिकायतम्
द्विभागं मध्यरङ्गं स्यात्परितो द्व्यंशेन मण्डपम्  ६१

शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्
विस्तारं चाष्टभागं स्यादायामं षोडशांशकम्  ६२

तन्मध्ये वेदभागेन द्वादशांशेन मण्डपम्

परितं द्व्यंशेनालिन्द्रं स्याच्छेषं पूर्ववदाचरेत् ६३

नवभागेन विस्तारं चाष्टदशांशमायतम्
त्रिभागे द्वादशांशेन मध्यरङ्गं प्रकल्पयेत् ६४

तद्वाह्येऽलिन्द्रमंशेन परितो द्विंशेन मराडपम्
अथवा चैकभागे तु चान्तर्बाह्येत्वलिन्द्रकम् ६५

चतुष्कर्णे चतुर्मासं चेष्टदिग्गतभित्तिकम्
उक्तवद् द्वारसंयुक्तं सर्वालङ्कारसंयुतम् ६६

विशाले दशभागे तु विंशत्यंशं तथायतम्
परितोऽलिन्द्र भागं स्याद्विस्तारं द्विगुणायतम् ६७

मध्यत्रिभागविस्तारं तस्यान्त द्विंशमराडपम्
तस्यान्तश्चैकभागेन चावृतालिन्द्रमिष्यते ६८

मध्ये च द्विंशविस्तारं द्वादशायतनं तथा
एवं तु मराडपकारं शेषं प्रागुक्तवन्नयेत् ६९

विस्तारे रुद्रभागं स्याद्विस्तारं द्विगुणायतम्
मध्ये त्रिभागविस्तारं मनुभागायतं तथा ७०

कुर्यान्मराडप बाह्ये तु सर्वं प्रागुक्तवन्नयेत्
विस्तारं रुद्रभागं स्याद्विस्तारादिद्वगुणायतम् ७१

यथामध्येऽङ्कणं कुर्यात्पञ्चभागेन विस्तृतम्
परितोंऽशेनलिङ्गं स्याद् द्व्यंशेनावृतालिङ्गकम् ७२

अथवा सप्ताङ्गविस्तारं द्विर्नवांशं कर्णायतम्
तद्वाह्ये तु द्विभागेन मराडपं परितस्तथा ७३

तदेवांशाधिकं स्याद् दीर्घ द्वित्रिमरडपम्
प्रत्येकं पञ्चभागेन सभा कूटं च मरडपम्  ७४

अथवा मरडपाकारं युक्त्या तत्रैव योजयेत्
चतुर्दिन्तु चतुर्द्वारं कुर्याद् भद्रैरलङ्कतम्  ७५

एवं तु मरडपं प्रोक्तं तन्नाममिहोच्यते
प्रथमं हिमजं चैव ततो निषदजं भवेत्  ७६

तृतीयं विजयं चैव चतुर्थं माल्यजं तथा
पञ्चमं पारियात्रं च षष्ठं स्याद् गन्धमादनम्  ७७

सप्तमं हेमकूटं स्यान्मरडपारव्यानि सप्तकम्
एवं हर्म्यमुखे कुर्यादन्यत्सर्वमिहोच्यते  ७८

एकादश चतुरंशं स्यात् आयताश्रकमेव च
अंशेनावृतवारं स्याच्चतुर्द्वारं चतुर्दिशि  ७९

एकभागेन भद्रं स्यात्सर्वालङ्कारसंयुतम्
एवं तु मेरुजं प्रोक्तं पुस्तकार्जनयोग्यकम्  ८०

द्विभक्तिचतुरंशेन भद्रस्यावृतलिन्द्रकम्
एवं तु विजयं प्रोक्तं विवाहार्थं हि मरडपम्  ८१

देवतार्थं समुद्दिश्य पानीयाय मरडपम्
पूर्वोक्तविजयं नाम मरडपं तत्र कारयेत्  ८२

त्रिभागं चतुरश्रं स्याच्चतुर्द्वारसमन्वितम्
द्विरष्टरविपादं स्यात् सिद्धयागादि सर्वशः  ८३

चतुरश्रं चतुर्भागं मध्यस्तम्भान्परित्यजेत्

मध्ये तु चाङ्गणं कुर्यात् अंशेनावृतमराडपम् ८४

एकद्वित्रिचतुर्द्वारं कल्पयेत्तु यथेष्टकम्
एकांशमावृतद्वारं पार्श्वे वारं प्रकल्पयेत् ८५

एकद्विभागविस्तारं निर्गमं भद्रसंयुतम्
तत्पार्श्वे च मुखे वापि सोपानं तत्प्रकल्पयेत् ८६

एवं तु पद्मकं प्रोक्तं देवानां पचनालयम्
सिचाख्यमराडपं चापि पचनालयमेव च ८७

विस्तारे वेदभागेन पञ्चभागं तदायतम्
द्वित्रिभागाङ्कणं मध्ये चांशेनावृतमराडपम् ८८

तद्बहिः परितो देशे चांशेनालिन्द्रमिष्यते
त्र्यंशं तद्भद्रविस्तारं निर्गमांशेन योजयेत् ८९

वातायनसमायुक्तमेकद्वारं प्रकल्पयेत्
अङ्गणे च प्रपायुक्तं पद्माख्यं पुष्पमराडपम् ९०

पञ्चांशं चतुरश्रं स्यात्तत्त्रिभागाङ्गणं भवेत्
तद्बहिः परितोंऽशेन मराडपं परिकल्पयेत् ९१

वातायनसमायुक्तं भद्र शेषं तु पूर्ववत्
जलसंपूरितार्थाय भद्रमराडपमीरितम् ९२

तदेकभागाधिकं वापि द्विभागाधिकमायतम्
तद्धि द्वित्रिभागं वा तारं पञ्चाशमायतम् ९३

विस्तारे मराडपं कुर्यात् इष्टदिग्गतभित्तिकम्
अग्रे च द्वारमेकं स्याद्युक्त्या चाङ्गणसंयुतम् ९४

तद्बहिः परितोंऽशेन द्वारं कुर्याद्विचक्षणः
मण्डपं भद्रसंयुक्तं धान्यनिक्षेपयोग्यकम् ९५

षड्भागेन विशाले तु चायामं चाष्टभागिकम्
वेदभागेन विस्तारं षड्भागायामतोऽङ्गणम् ९६

तत्तद्बाह्यावृतांशेन वसपं परिकल्पयेत्
आयामे मध्यसूत्रात्तु वामे द्वारं तु योजयेत् ९७

कूटाङ्गं मण्डपं कुर्यात्प्रच्छादनमथापि वा
शिवाख्यमण्डपं प्रोक्तं धान्यकर्णन योग्यकम् ९८

पञ्चसप्तांशविस्तारं तस्याद् द्विंशाधिकायतम्
मण्डपं तत्तदंशेन समाश्रं वायतं तु वा ९९

तत्त्रिभागाङ्गणं मध्ये चैकद्व्यंशेन मण्डपम्
वातायनसमायुक्तं इष्टदिग्वारसंयुतम् १००

मध्ये प्रच्छादनं कुर्वात्प्रपाङ्गं वाधिकल्पयेत्
एकभागेन बाह्ये तु परितो भूपलिन्दकम् १०१

तत्तद्भागेन संयुक्तं मेनं प्रागुक्तवन्नयेत्
एवं तु मण्डपं प्रोक्तं नृत्तश्रवणयोग्यकम् १०२

तदेव चेष्टदिग्वासं कुर्यादेवं तु जालकम्
वस्त्राभरणशास्त्रादीन् रत्नकोशादियोग्यकम् १०३

विस्तारं सप्तभागं स्याद्यथेष्टांशं तथायतम्
समाश्रं वाथ वेदाश्रं कुर्यादास्थानमण्डपम् १०४

विस्तारं द्विगुणं वापि त्रिगुणं वा तदायतम्

समाश्रं सप्तसप्तांशे त्रित्रिमध्यमरङ्गकम्  १०५

परितो कैकभागं द्व्यंशैकं मराडपं तु वा
पृष्ठे तत्पार्श्वयोर्मध्ये मुखे पादसमन्वितम्  १०६

पार्श्वयोः पृष्ठतः द्वारं द्वारं तु प्रस्तरं तु वा
पार्श्वैकद्वारसंयुक्तं युक्त्या सोपानसंयुतम्  १०७

चतुर्दिक्षु द्विभागैकं विस्तारं भद्रनिर्गमम्
अथवा मुखभद्रे तु निर्गमं तद्द्विभागिकम्  १०८

तदग्रे वाथ पार्श्वे च कुर्यात्सोपानभूषणम्
तस्य मध्ये च रङ्गे तु मौक्तिकेन प्रपान्वितम्  १०९

तन्मध्ये शासनादीनां तोरणं कल्पवृक्षकम्
तन्मानं चोक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्  ११०

मराडपे द्वे विमानं स्यादेकं वा द्वितलं तु वा
मराडपाग्रे प्रपाङ्गं स्याद्यथेष्टाय्तामं कल्पयेत्  १११

तस्य मध्ये त्रिभागेन विस्तारमायामं चोक्तवद् भवेत्
नाटकादि प्रच्छादनं शेषभागावृतं प्रपा  ११२

प्रपाग्रैकद्विभागं वा कर्णे लाङ्गलभित्तिकम्
तन्मुखे त्यंश विस्तारं भद्रमंशेन निर्गमम्  ११३

विस्तारसमभद्रं वा सोपानं मुखभद्रयोः
शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्  ११४

अथवा मराडपदेवाख्ये द्वित्रिभागेन पूर्ववत्
अथवा मराडपाख्ये तत्प्रपासंयुक्तं बाह्यके  ११५

एकभाग द्विभाग वा परितोऽलिन्द्रमिष्यते
शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्  ११६

अथवा मण्डपोदेशे सप्तसप्तांश हस्तिकम्
त्रिपञ्चांशेन विस्तारमायामं मध्यरङ्गकम्  ११७

तद्बाह्ये चैकभागेन मण्डपं परितस्तथा
तन्मुखे च त्रिभागेन भद्रं शेषं तु पूर्ववत्  ११८

अथवा मण्डपाद्ये तत्प्रपासंयुक्तं बाह्यके
एकभाग द्विभागं वा परितोऽलिन्द्रमिष्यते  ११९

शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्
शतपादयुतं वाथ सहस्राङ्घ्रिक मण्डपम्  १२०

युक्त्या तद्भक्तिमध्येन यथेष्टायतविस्तृतम्
देवानां भूपतीनां च कुर्यादास्थानमण्डपम्  १२१

अष्टांशं चतुरश्रं वा नवांशं चतुरश्रकम्
तत्तदायाममेवं च भूपतीनां च योग्यकम्  १२२

मण्डपं पूर्ववत्कुर्याद्देवता चोत्सवार्थकम्
सालाख्या तु कृताख्या स्यात्कुटयाधो रङ्गके सुधीः  १२३

दशांशं चतुरश्रं स्यात्षट्षडशं तु मध्यमे
ऊर्ध्वकूटसमायुक्तं परितो द्व्यंशेन मण्डपम्  १२४

मध्ये द्वारं द्विभागं स्याद् द्विषड्भागेन चाग्रतः
तद्भागेन द्विभागेन द्वारे पार्श्वे तु वदिकम्  १२५

परितोऽलिन्द्रभागेन वारन मुखभद्रकम्

अथवा नेत्रभद्रं स्यात् शेषं युक्त्या प्रयोजयेत् १२६

दर्भाख्यं मण्डपं प्रोक्तं कुञ्जरस्यालयं तथा
एकादशांशविस्तारमायतं विंशदंशकम् १२७

एकभाग द्विभागं वा मण्डपं परितस्तथा
शेषं तु चाङ्गणं मध्ये चेष्टदिग्द्वारसंयुतम् १२८

अष्टमेकैकपङ्क्तिः स्यादश्वानां निलयान्वितम्
कौशिकं मण्डपं प्रोक्तं शेषं युक्त्या प्रयोजयेत् १२९

द्वादशांशं तु विस्तारमायामं तद्द्वयं भवेत्
अष्टांशं चाङ्गणं मध्ये परितः द्व्यंशेन मण्डपम् १३०

इष्टदिगवारसंयुक्तमिष्टदिग्गतभित्तिकम्
कूलधारणमित्युक्तं गोसङ्घैर्वा सयोग्यकम् १३१

त्रयोदशांशविस्तारं समाश्रं वायताश्रकम्
विस्तारं च यदायामं युक्त्या तत्रैव योजयेत् १३२

सप्तांशं विस्तृतं मध्ये कल्पयेदङ्गणं भवेत्
तस्य बाह्यावृतांशेन कारयेत्तन्मसूरकम् १३३

विस्तारद्वयमायामशेषं युक्त्या प्रयोजयेत्
तद्बाह्ये मण्डपं कुर्याद् द्विंशेनावृतमेव च १३४

चतुर्दिक्षु चतुर्द्वारमिष्टदिग्गतभित्तिकम्
तत्तद्बाह्यावृतांशेन कुर्यात्तत्समलिन्द्रकम् १३५

पञ्चांशं चन्द्र विस्तारं निर्गमं भद्रसंयुतम्
सुखाङ्गाख्यमिति प्रोक्तं सत्रयोग्यं तु मण्डपम् १३६

मन्वंशसमविस्तारमधिकायतम्
दक्षिणे पश्चिमे वपि चतुर्दशांशमायतम्  १३७

तदंशेनावृतालिन्दं त्र्यंश मध्ये तु मण्डपम्
मध्यस्तम्भं तु सर्वेषां युक्त्या द्वारं प्रयोजयेत्  १३८

तन्मुखे द्व्यंशमावृत्य द्वा शेषं तथाङ्गणम्
परितश्चैकभागेन तद्बाह्ये भ्रमलिन्द्रकम्  १३९

एवं तु सौख्यकं प्रोक्तं शेषं प्रागुक्तवन्नयेत्
नदीतीरे तटाके वा सिन्धुतीरे प्रकल्पयेत्  १४०

सर्वेषां देवतानां च तीर्थयोग्यं प्रकीर्तितम्
पञ्चदशांशविस्तारमेकत्रिंशायतं तथा  १४१

अथवा चतुरश्रं स्याच्चतुर्द्वारसमन्वितम्
तन्मध्ये पञ्चभागेन सप्तभागाङ्गणं तथा  १४२

तद्बाह्ये परितोंऽशेन कुर्यादन्तरलिन्दकम्
खलूरिकापि तद्बाह्ये त्रित्रिभागेन मण्डपम्  १४३

तद्बाह्यावृतालिन्दमेकभागेन कारयेत्
तद्बहिश्चावृतांशेन कारयेद् भ्रमालिन्दकम्  १४४

पञ्चाशं द्विंशविस्तारं निर्गमं भद्रसंयुतम्
मण्डपस्य बहिर्देशे प्रपां परितस्तु कारयेत्  १४५

मण्डपे चोर्ध्वकूटं स्यान्मालिकाकृति विन्यसेत्
अथवा रुद्रसंयुक्तं वातायनसमन्वितम्  १४६

कर्णे ककर भद्रं स्याद्युक्त्या तत्रैव योजयेत्

सर्वालङ्कारसंयुक्तं मालिकाख्यं तु मण्डपम् १४७

मध्यं कर्णे जलं पूर्य जलं पुष्पैरलङ्कृतम्
एवं वसन्तयोग्यं स्याद् देवानां क्षत्रियादिनाम् १४८

षोडशांशेन विस्तारं द्वात्रिंशायामकं तथा
पूर्ववच्चतुरश्रं स्यान्मध्यस्तम्भान्परित्यजेत् १४९

मध्याङ्कणं तु षड्भागं शेषं प्रागुक्तवन्नयेत्
तदेव षोडशांशे तु मध्यरङ्गात् षडंशकम् १५०

तद्बाह्यावृतांशेन चान्तरलिन्दमिष्यते
तद्बहिश्च त्रियंशेन मण्डपं परितस्तथा १५१

तद्बाह्यावृतांशेन लिन्द्रं कुर्याद् विचक्षणः
तत्पुरे पृष्ठपार्श्वे तु भ्रमलिन्द्रैकभागतः १५२

तच्चतुष्कर्णदेशे तु कर्करी चाष्टभद्रकम्
ऊर्ध्वकूटसमायुक्तं द्वारभद्रैस्तु संयुतम् १५३

तन्मुखे पुरतः पार्श्वे द्वारसंयुक्तभद्रकम्
तत्कर्णं च द्वयोर्भद्रं चतुर्थं कर्करीकृतम् १५४

कर्करीभद्रसंयुक्तं मण्डपस्य विशालकम्
एकद्वित्र्यैकभागं स्यात्कर्करीभद्रनिर्गमम् १५५

मधे भद्रे तु विस्तारं पञ्चषड्भागमेव वा
तत्समं निर्गमं वापि द्वित्रिवेदांशमेव वा १५६

भद्रैस्तत्पुरपार्श्वे तु कुर्याद् द्वारं तदंशकम्
एकद्वित्रितलं मध्ये मण्डपे चोर्ध्वकूटकम् १५७

एवं तु मालिकाकारं शेषं प्रागुक्तवन्नयेत्
सर्वालङ्कारसंयुक्तं माल्याकृतमितीरितम्  १५८

देवतालोकनयोग्यं देवदेवस्य मराडपम्
एवं तु मराडपं प्रोक्तं देवभूसुरभूपतेः  १५९

विस्तारे चैकभक्त्ये वा यथेष्टायामवर्धनात्
सर्वेषां मराडपानां तु पूर्वोक्तानां तदायतम्  १६०

द्विभक्तिविस्तृतं तस्मात् एकभागाधिकायतम्
मध्येकभक्तिवासं स्यात्पुर पार्श्वे च मराडपम्  १६१

आत्मार्थं विप्रसद्मे तु यजनार्थमुदीरितम्
तदेव द्विगुणायामं मध्यरङ्ग द्विभागतः  १६२

तत्पार्श्वे चैकभागेन वासं कुर्याद् विचक्षणः
तत्पुरेऽलिन्दमेकांशमथवा निर्वासमराडपम्  १६३

अथवा वंशमूले तु चैकद्विंशेन वासकम्
एवं तु विप्रयोग्यं स्याद्धनदाख्यं तु मराडपम्  १६४

त्रिभक्ति विस्तृतं तस्मात् एकभागाधिकायतम्
तदर्धेन द्विभागेन मराडपं चोन्नतासनम्  १६५

पृष्ठे च पार्श्वयोः कुड्यं पुरतो पादसंमितम्
तन्मुखे द्वित्रिभागेन निर्गमं चासनसंयुतम्  १६६

कर्णे लाङ्गलभित्तिः स्याद् भ्रमरावृतबाह्यके
एकांशेनाङ्घ्रिसंयुक्तं पुर पार्श्वे तु भद्रकम्  १६७

धनाधिपमराडपं स्याद् देवभूसुरयोग्यकम्

तदेव मध्याङ्गणसंयुक्तं त्तौरार्थं द्विजभूपतेः १६८

तदेव भागाधिकायाममिष्टदिग्गतभित्तिकम्
भूपतीनां च वैश्यानां कोशरत्नादियोग्यकम् १६९

तदेवाधिकमायामं मध्यभागाङ्गणं भवेत्
एकभागावृतावासमिष्टदिग्गतभित्तिकम् १७०

आयाममध्यसूत्रं तु वामे द्वारं प्रकल्पयेत्
कर्णैककर्करीभद्रं स्याद् भ्रमरांशेन पूर्ववत् १७१

शूद्राणां च इति प्रोक्तं धान्यागारमथ नामकम्
चतुरंशं विस्तारं स्यात् एकभागाधिकायतम् १७२

पञ्चांश द्व्यंशकेनैव मण्डपं परिकल्पयेत्
तन्मुखेव त्रिभागन निर्गमं भद्रविस्तृतम् १७३

तत्पुरे तु द्विपार्श्वे वा प्रपां चैकेन कारयेत्
भद्रान्तं कुड्यसंयुक्तं मण्डपं पृष्ठपार्श्वयोः १७४

देवतानां च मौनार्थं भूषणाख्यं तु मण्डपम्
तदेकभागाधिकायामं विस्तारं पूर्ववद् भवेत् १७५

तद्भागद्विभागेन विस्तारं मण्डपं भवेत्
द्वित्रिभागाङ्गणं पूर्वे एकभागं खलूरकम् १७६

मण्डपं तु विना दीर्घे द्वारं कुर्याद् विचक्षणः
भूषणाख्यं च विप्राणां योग्यं पुंसवनार्थकम् १७७

तदेव भागाधिकायामं विस्तारं पूर्ववद् भवेत्
त्रिचतुर्भागमायामं मण्डपं परितो भवेत् १७८

एवं सुभूषणाख्यं स्याच्छेषं पूर्वोक्तवन्नयेत्
भूसुरादित्रयाना चोपनयनादियोग्यकम्  १७९

वेदाष्टांशविस्तारमायामं मण्डपं भवेत्
वंशे मूलाग्रयोः सन्धिर्द्विचतुर्भागेन कारयेत्  १८०

एकद्विवासयोर्मध्ये द्विचतुर्भागाङ्गणं भवेत्
एतत्पार्श्वे द्वयोश्चैकं चातुर्भागेन द्वारकम्  १८१

दीर्घे च मध्य सूत्रं तु वामे द्वारं प्रकल्पयेत्
अथवा तस्य मध्ये तु कुड्यवासं विभाजिते  १८२

कुलाभद्वारसंयुक्तं शेषं युक्त्या प्रयोजयेत्
एवं तु भूषनाख्यं स्यात् शूद्राणां पचनालयम्  १८३

तद् द्विभागेन विस्तारे तस्माद् द्विंशाधिकायतम्
पञ्चांशेन द्विभागेन पूर्ववद् द्वारसंयुतम्  १८४

वासमेतद्द्वयोर्मध्ये त्रित्रिभागाङ्गणं भवेत्
एकांशेन त्रिभागेन पार्श्वे द्वारं प्रयोजयेत्  १८५

तद्बाह्ये परितोऽलिन्दमेकभागेन कारयेत्
दीर्घे मध्यमभागे तु द्वारं संकल्पयेत्सुधीः  १८६

एकद्वित्रिभागेन निर्गमं भद्रविस्तृतम्
एवं तु मण्डपं हर्म्यं देवभूसुरभूपतेः  १८७

पचनार्थमिति प्रोक्तं नानातलद्वारैरपि
तस्माद् द्व्यधिकायामं विस्तारं पूर्ववद् भवेत्  १८८

तन्मध्ये चाङ्गणांशेन परितो द्विशेन मण्डपम्

तस्यान्तं चैकभागेन परितस्तु खलूरिका १८९

तद्दीर्घं मध्यसूत्रात्तु वामे द्वारं प्रकल्पयेत्
शेषं तु पूर्ववत्कुर्यान्मण्डपं हर्म्यमीरितम् १९०

सर्वेषामपि वर्णानां बालालोकनयोग्यकम्
षड्भागविस्तृत चैव सप्तभागायतं तथा १९१

तद्भागेन द्वित्रिभागेन मध्यरङ्गं प्रकल्पयेत्
मध्यस्तम्भान्परित्यज्य परितः द्व्यंशेन मण्डपम् १९२

तद्बाह्ये चावृतांशेन भूवृतालिन्दसंयुतम्
चतुर्दिक्षु चतुर्द्वारं कर्णे लाङ्गलभित्तिकम् १९३

चतुर्दिग्भद्रसंयुक्तमेकद्वित्रिकभागिकम्
देवानां च विलासार्थं शृङ्गाराख्यं तु मण्डपम् १९४

आयामं चाष्टभागेन विस्तारं पूर्ववद् भवेत्
तद्भागे द्विचतुर्भागं तन्मध्ये चाङ्गणं भवेत् १९५

तद्बहिश्चावृतांशेन कुर्यात्तत्तदलिन्द्रकम्
तद्बहिश्चावृतांशेन मण्डपं द्विंशमेव वा १९६

चतुर्वासं चतुष्कर्णे द्विद्विभागेन योजयेत्
तद्बहिश्चैकभागेन परितो वारमिष्यते १९७

तद्दीर्घे मध्यसूत्रं तु वामे द्वारं तु पूर्ववत्
वंशमूलाग्रयोः सर्वे कर्करीकृतनेत्रकम् १९८

द्व्यंशैकं तत्र विस्तारं निर्गमं भद्रसंयुतम्
सर्वेषामपि वर्णानां सूगतं सर्वदेशिकम् १९९

चतुर्भागाधिकायामं विस्तारं पूर्ववद् भवेत्
ललाटे द्व्यंशविस्तारं रसभागं तदायतम् २००

पुरतः पृष्ठवाग्रे तु एकभागेनलिन्द्रकम्
वंशमूले तु वासं स्यात्कुर्यात्तु द्वित्रिभागतः २०१

शेषं प्रागुक्तवत्सर्वं युक्त्या तत्रैव योजयेत्
तदेवाग्रे चतुर्भागं चोक्तवन्मराडपं तु वा २०२

केचित्षडष्टभागेन विस्तारायाम कल्पयेत्
ललाटे द्विंशषड्भागं विस्तारायाम मराडपम् २०३

एकांशे तत्पुरेऽलिन्द्रं द्वित्रिभागाङ्गणं भवेत्
तत्पुरे पार्श्वयोः शेषं महावारं तु कल्पयेत् २०४

ललाटे द्विंशविस्तारमायामं मराडपं भवेत्
एवं तु प्रागतं प्रोक्तं सर्वकर्मसुखावहम् २०५

सप्तांशं तु विस्तारं नवभागं तदायतम्
त्रिभागं पञ्चभागेन चाङ्गणं विस्तृतायतम् २०६

तद्बहिश्च द्विभागेन परितो मराडप भवेत्
अथवा तत्त्रिभागेन ललाटे मराडपं भवेत् २०७

तत्पुरे च द्विभागेन युक्त्या मध्ये तु चाङ्गणम्
तत्पुरे च द्विपार्श्वे च एकभागेनलिन्द्रकम् २०८

तद्बहिश्चावृतांशेन मराडपानां तु अलिन्दकम्
मध्ये चरं तु संकल्प्य विस्तरे चाथ दैवतम् २०९

तद्द्वित्रिभागेन विस्तारं निर्गमं भद्रसंयुतम्

एकं वाथ द्वयं वापि द्वारं च त्रयमेव च  २१०

तद्बहिश्चावृतांशेन कुर्यादावृतालिन्दकम्
सर्वालङ्कारसंयुक्तं कर्णहर्म्यादिमरिडतम्  २११

द्रोणाख्यं मरडपं प्रोक्तं देवारामं प्रकल्पयेत्
अथवा भूपतीनां च आत्मार्थं यजनार्थकम्  २१२

विप्राणां शुभकर्मार्थं सन्ध्यायोग्यकमरडपम्
अथवा तपस्विनीनां च मठं वा नाटकाहकम्  २१३

एकभागाधिकायामं विस्तारं पूर्ववत्क्रमात्
षट्त्रिभागाङ्गणं मध्ये परितद्विंशेन मरडपम्  २१४

ललाटे मरडपे पूर्वे चैकभागेनलिन्द्रकम्
एवं तु भूपहर्म्ये तु मल्लयोग्यं तु कारयेत्  २१५

तस्माद्व्यंशाधिकायामं विस्तारं सप्तभागिकम्
पञ्चांशं चैकपङ्क्त्यंशं तन्मध्ये चाङ्गणं भवेत्  २१६

तद्बाह्ये परितः उर्यादेकभागेन वेदिकाम्
एतद् द्रोणं च भूपानामायुधाभ्यासमरडपम्  २१७

पञ्चदशांशकं दीर्घं नेत्रत्रिभागमरडपम्
तत्पुरेऽलिन्द्रमेकांशं नवांशेन युताङ्गणम्  २१८

तत्पार्श्वे पुरतश्चैव युगांशेन खलूरिकाः
द्रोणाख्यमरडपं चैव मेषयुद्धार्थयोग्यकम्  २१९

अष्टाष्टांशविस्तारमायामं तत्र कल्पयेत्
तन्मध्ये द्विद्विभागेन कल्पयेद् विवृताङ्गणम्  २२०

तद्बहिश्चावृतांशेन कुर्याच्चैका खलूरिका
तद्बहिश्च द्वयांशेन मराडप परितस्तथा २२१

कर्णे च द्विद्विभागेन कुर्याद् वासं चतुष्टयम्
तद्बहिश्चावृतांशेन संयुक्तं भद्रालिन्दकम् २२२

मध्यसूत्रात् तु वामे तु द्वारं कुर्याद् विचक्षणः
तद्बहिश्चावृतांशेन कुर्याच्चैव खलूरिकम् २२३

चतुष्कर्णेऽष्टनेत्रं स्याद् भद्रयुक् कर्करीकृतम्
अथवा वेदभागेन मध्यकोष्ठं समाश्रकम् २२४

तद्बहिश्चावृतांशेन जलपादं च निम्नकम्
तद्बहिः परितो भागे कुर्याच्चैव खलूरिकाः २२५

तन्मध्ये मराडपं कुर्यात्कर्णे लाङ्गलभित्तिकम्
मध्यस्तम्भं त्यजेत् शस्तं दिक्षु स्तम्भं त्यजेत्तुवा २२६

ऊर्ध्वकूटं समायुक्तं सर्वालङ्कारसंयुतम्
तद्बहिः परितो देशे यथेष्टांशप्रपाङ्गकम् २२७

नृपाणां भोजनार्थं स्यात्खर्वटाख्यं तु मराडपम्
तदेव भागैकवेदांशं मध्यरङ्गं तमिष्यते २२८

तद्बाह्ये तद्विभागेन मराडपावृतमिष्यते
तद्बहिश्चावृतांशेन कुर्यात्तद्भमालिन्दकम् २२९

तच्चतुर्दिक्षु मध्ये च स्तम्भं सर्वोपरि त्यजेत्
द्विभागैकं नेत्रविस्ता निर्गमं भद्रसंयुतम् २३०

मध्यभद्रं तु विस्तारं निर्गमं च द्विभागिकम्

चतुर्दिक्षु चतुर्द्वारं कर्णे च कर्करीकृतम्  २३१

ऊर्ध्वकूटं समायुक्तं सर्वालङ्कारसंयुतम्
तन्मुखे तत्समांशेन विस्तारायामं कारयेत्  २३२

चतुःषड्भागविस्तारायामं मण्डपाङ्गणम्
पुरश्च पार्श्वयोश्चैव द्व्यंशेन मुखमण्डपम्  २३३

द्वारं तन्मुखभद्रं स्यात्कर्णेषु कर्करीकृतम्
मण्डपे चाङ्गणं ज्ञात्वा विधानं विविधाननम्  २३४

सर्वालङ्कारसंयुक्तं वातायनसमायुतम्
एवं तु खर्वटं प्रोक्तमभिषेकार्थमण्डपम्  २३५

नवभागं तु विस्तारं तत्समांशमुखायतम्
मध्यरङ्गं त्रिभागं स्यादंशेनावृतलिन्द्रकम्  २३६

तद्बहिश्च द्विभागेन मण्डपावृतमेव च
तस्मात्त्रिभागषड्भागं विस्तारायामरङ्गकम्  २३७

कुर्यात्तु शिल्पिविद्वद्भिर्मुखमण्डप मध्यमे
तत्पुरे पार्श्वयोश्चैव एकभागेन लिन्द्रकम्  २३८

तद्बहिस्तद्वशात्कुर्यान्मण्डपं तद्द्वयांशकम्
शेषं प्रागुक्तवत्कुर्यात् श्रीरूपाख्यं च मण्डपम्  २३९

एवं देवालये कुर्याद् भूपाकयोग्यकम्
दशभागविशालं स्याद्विंशत्यंशं तदायतम्  २४०

मध्यरङ्गं युगांशं स्यात्मध्यस्तम्भान् परित्यजेत्
तद्बदिश्चावृतांशेन लिन्द्रं द्व्यंशेन मण्डपम्  २४१

तद्बहिश्चावृतांशेन चोर्ध्वे तु जलस्थलम्
तस्मात्तु तन्मुखे रङ्गं द्व्यंशं षड्भागमेव च २४२

तन्मुखे पार्श्वयोश्चैव मण्डपाकारं योजयेत्
मङ्गलाख्यमिति प्रोक्तं शेषं तु पुरतोक्तवत् २४३

एवं तु नृपहर्म्ये तु तुलाभारार्थयोग्यकम्
भूपानां च यथास्थानं मण्डपं वक्ष्यते क्रमात् २४४

एकादशविभागेन मूलविस्तारदीर्घकम्
तत्समांशेन विस्तारमेकद्वित्रिमुखायतम् २४५

विस्तारसमसूत्रं स्यात्कुर्यादास्थानमण्डपम्
मूलमण्डपमध्ये तु पञ्चपञ्चांशरङ्गकम् २४६

तद्बाह्ये द्वित्रिभागेन परितो मण्डपं भवेत्
चतुर्दिक्षु चतुर्द्वारं कर्णे लाङ्गलभित्तिकम् २४७

बाह्ये च द्वित्रिभागेन भूवृतालिन्दकम्
चतुर्दिक्षु त्रिभागेन भद्रद्वारणसंयुतम् २४८

पार्श्वे सोपानसंयुक्तं हस्तिहस्तविभूषितम्
सोपपीठमधिष्ठानं स्तम्भादीन्प्रस्तरान्वितम् २४९

प्रस्तरोर्ध्वे विशेषोऽस्ति चूली हर्म्यादिमण्डितम्
मध्यरङ्गोर्ध्वकूटं स्यात् एकद्वित्रितलं तु वा २५०

रत्नप्रासादरङ्गे तु प्रागुक्तवदलङ्कृतम्
तन्मुखे च प्रपां कुर्याद् युक्त्यायामं तु कल्पयेत् २५१

नाटका विस्तरं पञ्चपञ्चभागेन योजयेत्

पार्श्वे चैव त्रिभागेन बहुपादसमन्वितम्  २५२

सोपपीठाङ्घ्रिसंयुक्तं प्रस्तरं च प्रपाङ्गकम्
प्रमुखे भद्रसोपानं कर्णे लाङ्गलभित्तिकम्  २५३

शिले वा दारुजे वापि मिश्रद्रव्येण कारयेत्
शेषं तु देवतास्थानं मण्डपोक्तवदाचरेत्  २५४

एवमास्थानयोग्यं स्यात्ततस्वराक्षरयोग्यकम्
चतुःषड्भागविस्तारमायामं तत्प्रकल्पयेत्  २५५

द्विचतुर्भागविस्तारमायामं मण्डपं भवेत्
विस्ताराद् द्विभागेन वंशमूले तु व्रासकम्  २५६

तदग्रे द्वित्रिभागेन कुड्यपादसमन्वितम्
तद्बहिश्चावृतांशेन वारं कान्ताख्यमण्डपम्  २५७

एवं तु युवराजस्य लीलालोकनमण्डपम्
सर्वालङ्कारसंयुक्तं चोर्ध्वकूटसमन्वितम्  २५८

षडष्टांशेन विस्तारमायामं मण्डपं भवेत्
द्वित्रिभागेन वासं स्यात्त्रिचतुर्भागमण्डपम्  २५९

वंशमूलाग्रयोर्वासं तन्मध्ये मण्डपं भवेत्
तत्पुरेऽलिन्द्रमेकांशं चेष्टदिग्गतभित्तिकम्  २६०

मुखेऽष्टद्व्यंशमायामं विस्तारं मुखवारकम्
द्वित्रिभागेन वासं स्यात् अग्रे मूले नियोजयेत्  २६१

अथवा मूलवासैश्च द्वित्रिभागेन योजयेत्
द्विचतुर्भागविस्तारायामं मूलमण्डपम्  २६२

तत्पुरे पृष्ठदेशे तु चैकैकांशेनालिन्द्रकम्
परितः कुडयसंयुक्तं तद्बहिर्वारमेव च  २६३

तस्मादेव द्विभागेन निर्गमं भद्रविस्तृतम्
मण्डपे वंशमूलाग्रे त्रिभागं भद्रविशालकम्  २६४

निर्गमं च द्विभागं स्याद् भद्रावृतवारकम्
मण्डपे चोर्ध्वकूटं स्यात् शालाकारं तु योजयेत्  २६५

अष्टवक्त्रसमायुक्तं कर्णेषु कर्करीकृतम्
मध्यसूत्रं तु वामे तु दारं कुर्याद् विचक्षणः  २६६

श्रीविशालमिति प्रोक्तं महिष्यावासमण्डपम्
चतुःषड्भागविस्तारं आयाम मण्डपं भवेत्  २६७

द्विद्विभागेन संयुक्तं तन्मध्ये चाङ्गणं भवेत्
द्विचतुर्भागविस्तारं वासमायाममीरितम्  २६८

तत्पुरे पृष्ठभागान्तं चैकद्व्यंशेन कारयेत्
तद्बहिर्वारमेकेन परितः कूटाकृतिस्तथा  २६९

वंशमूलाग्रयोर्वासं तद्वारं वासमध्यमे
मण्डपे सूत्रमध्यं तु वामे द्वारं तथायते  २७०

एवं सोमार्कनामस्य वैश्यानां च पचनालयम्
तदेव विस्तारदीर्घेषु द्विद्विभागेन वर्धनात्  २७१

अन्यत् क्षत्रियसर्वेषां युगभागेन मण्डपम्
विस्तारं द्विगुणान्तं स्याद् द्विद्विभागेन वर्धनात्  २७२

यथा तद्विनियोगार्थं मण्डपं वैश्यशूद्रयोः

तत्तच्चित्तवशात्सर्वमष्टदिग्भागभित्तिकम्  २७३

देवानां भूसुराणां च मण्डपं जातिरूपकम्
भूपानां मण्डपे सर्वे छन्दरूपमितीरितम्  २७४

वैश्यकानां तु सर्वेषां विकल्पं चेति कथ्यते
शूद्राणां मण्डपं सर्वमाभांसमिति कीर्तितम्  २७५

केचिद् भद्रंविशेषेण जातिरुक्ता पुरातनैः
द्विवक्त्रं दण्डकं प्रोक्तं त्रिवक्त्रं स्वस्तिकं तथा  २७६

त्रिवक्त्रं लाङ्लाकारं नन्द्यावर्त्तं चतुर्मुखम्
षण्मुखं मौलिकं प्रोक्तं मण्डप चाष्टवक्त्रयुक्  २७७

एवं तु सर्वतोभद्रं सर्वालङ्कारसंयुतम्
वक्ष्यते विधिना सम्यक् सर्वग्रामार्थमण्डपम्  २७८

समाश्रं वायतायामं युग्मं वायुग्मभित्तिकम्
लुपां वा प्रस्तराङ्गं वा तप्लच्छादनमेव च  २७९

लुपायुक्तं तु सर्वाङ्गं सभा चेति प्रकीर्तितम्
परितः प्रस्तरं मध्ये चोर्ध्वे कूटं तु मण्डपम्  २८०

प्रस्तराङ्गं तु सर्वाङ्गं मण्डपं चेति कथ्यते
मण्डपं वा सभां वापि ग्रामयोग्यं यथादिशि  २८१

नगरे च यथाकारं द्विगुणाध्यर्धकायतम्
पादूनं द्विगुणं वापि द्विगुणं पत्तने न्यसेत्  २८२

विस्तारद्विगुणायामं शूद्रखर्बटयोग्यकम्
अधिष्ठानाद्यलङ्कारं सर्वं प्रागुक्तवन्नयेत्  २८३

यात्रामार्गेषु सर्वेषां कारयेन्मराडपं सुधीः
प्रपाङ्गं मराडपं वापि यथायुक्त्या प्रयोजयेत्  २८४

ब्रह्मक्षत्रियवैश्यशूद्रचतुर्वर्णे यदुक्तं तु तद्
देवानां भवति त्वनन्तरान्तरं शूद्रैर्विशा क्षत्रियैः
तद्विप्रैर्भवति त्वनन्तरान्तरं क्षत्रैर्विशा शूद्रकम्
राजानो भवति त्वनन्तरान्तरं शूद्रैर्विशां वश्यकैः  २८५

शूद्रैर्युक्तं मराडपं शूद्रकाणाम्
अन्येषां तज्जातियोग्यं तु कुर्यात्
चोक्तद्विप्रजात्यादि चोक्तम्
कर्ता भर्ता सर्वथा नाशमीयात्  २८६

इति मानसारे वास्तुशास्त्रे मराडपविधानं नाम चतुस्त्रिंशोऽध्यायः

## शालाविधानम्

सुराणां भूसुराणां च वर्णानां वासयोग्यकम्
सर्वासामपि शालानां लक्षणं वक्ष्यतेऽधुना  १

दराडकं स्वस्तिकं चैव मौलिकं च चतुर्मुखम्
सर्वतोभद्रकं चैव वर्धमानं च षड्विधम्  २

त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात्
त्रयोविंश करान्तं स्यादेकादशविशालकम्  ३

युग्महस्तविधानेन चतुर्हस्तं समारभेत्
चतुर्विंश करान्तं स्याद् द्विद्विहस्तंविवर्धनात्  ४

एवमेकादशं प्रोक्त चैकशालाविशालता
सप्तहस्तं समारभ्य द्विद्विहस्तविवर्धनात्  ५

नवपङ्क्तिकरान्तं स्यात्सप्तधा विस्तृतं भवेत्

अष्टहस्तं समारभ्य विंशद्धस्तावसानकम् ६

द्विद्विहस्तप्रवृद्धेन कारयेत् शिल्पिकोत्तमः
विस्तृतं सप्तधा चैव स्वस्तिकं मौलिकं तथा ७

विस्तार द्विद्विहस्तेन वर्धनाद् द्विगुणान्तकम्
देवानां च तपस्वोनां शालादीर्घं प्रकीर्तितम् ८

द्विगुणं चायताः शाला भूसुरादिचतुष्टये
शालाविशालतारभ्य पादाद्यर्धं त्रिपादकम् ९

तत्समं वाधिकायामं तस्मात्पादाधिकं तु वा
त्रिपादं वा समाधिक्यं शालायामं प्रकल्पयेत् १०

तद्विस्तारसमोत्तुङ्गं सपादार्धं तु तुङ्गकम्
त्रिपादाधिकमुत्सेधं विस्तारं द्विगुणोदयम् ११

प्रथमं शान्तिकोत्सेधं द्वितीयं पौष्टिकोदयम्
तृतीयं जयदोत्तुङ्गं चतुर्थं धनदोदयम् १२

पञ्चमं चाद्भूतोत्सेधं जन्मादिस्तूपिकान्तकम्
अन्यैस्तु सर्वशालानां भित्तिमानेन विस्तृतम् १३

आदिभूमेश्च पादादिषट्सप्ताष्टनवांशकम्
दशांशेन विहीनं स्यादूर्ध्वं चोर्ध्वतलोदयम् १४

अध्यर्धं प्रस्तरोत्सेधं चार्धेनैवोर्ध्ववेदिका
तद्द्वयं ग्रीवतुङ्गं स्याद् ग्रीवतुङ्गद्वयं शिरः १५

मस्तकार्धं शिखोत्तुङ्गमुत्सेधमिति कथ्यते
देवानां भूसुराणां च भूपानां वैश्यशूद्रयोः १६

तपस्विनामाश्रमिणां च हस्त्यश्वरथयौधिनाम्
वौद्धानां यागहोमादिशिल्पिनां गणिकादिनाम्  १७

एकशाला द्विशाला च त्रिशालाश्च चतुर्मुखम्
पूर्वोक्तैतैतलानां च द्विजात्यदिषु योग्यकम्  १८

एकानेकतलान्तं स्याच्चूलिहर्म्यादिमण्डितम्
प्रासादवदलङ्कृत्य देवभूसुरभूपतेः  १९

चूलिहर्म्यं विना कुर्याद् वैश्यशूद्रादिजन्मनाम्
शालायाः परितोऽलिन्द्रं पृष्ठतो भद्रसंयुतम्  २०

पुरतो मण्डपोपेतं सर्वालङ्कारसंयुतम्
एवं तु मानुषाणां च तैतलानां च कारयेत्  २१

शालामध्ये च देवानां वासं कुर्याद् विचक्षणः
शालायाः पार्श्वतो वासं द्विजात्यादिषु सर्वशः  २२

शालायामे तु वासं च वंशमूले तु योजयेत्
गृहिणीनां तु शालायां सव्यवासं प्रकल्पयेत्  २३

उक्तानां सर्वजातीनां दण्डकं तु चतुर्दिशि
पूर्वे वा दक्षिणे वापि पश्चिमे दण्डकं न्यसेत्  २४

एवं चामात्ययोग्यं स्यान्नोदग्द्वारं महीभृताम्
दक्षिणे पश्चिमे शालायुक्तं स्वस्तिकमेव च  २५

तदेवान्यासु सर्वेषु दिक्षु शालां विना न्यसेत्
पूर्वे वा दक्षिणे वापि पूर्वे वा चोत्तरेऽपिवा  २६

पश्चिमे चोत्तरे वापि स्वस्तिकं च विनाशकम्

पूर्वे च दक्षिणे स्यञ्च याम्ये प्रत्यक् तथोत्तरे २७

शालासंयोगमेवं स्यान्मौलिकं तदुदीरितम्
पूर्वैश्च चोत्तरे प्रत्यगुदक् पूर्वे च दक्षिणे २८

अज्ञानेन त्रिशालेषु योगं चेत्सर्वदोषदम्
सर्वेषां गणिकादीनां शाला स्वस्तिकमेव च २९

अध्यक्षाणां तु सर्वेषां कल्पयेन्मौलिकाख्यकम्
सर्वेषामपि शालानां दण्डकादित्रयान्तकम् ३०

शालानां प्रमुखे कुर्याद् द्वारं कुड्यादि चोक्तवत्
चतुर्दिक्षु चतुःशाला संयुक्तं तच्चतुर्मुखम् ३१

तदेव पुरतो देशे मौल्यन्तरालसंयुतम्
तदेव बहुभद्रं स्यात्सर्वतोभद्रमीरितम् ३२

दण्डकादि चतुःशाला संयोग्यं वर्धमानकम्
दण्डकं च पृथक्शाला चैकशालापर्याख्यकम् ३३

लाङ्गलं स्वास्तिकं चैव द्विशाला च पर्याख्यकम्
मौलिकं दीपकं चैव त्रिशाला च परिकीर्तिता ३४

चतुर्मुखं चतुःशाला चैवमुक्तानि पण्डितैः
सप्तशाला विशेषेण सर्वतोभद्रमीरितम् ३५

दशशाला च सर्वेषां वर्धमानमुदीरितम्
एकशालानसन्धिश्च द्विशाला चैकसन्धिकम् ३६

त्रिशाला च द्विसन्धिः स्यात् चतुःसन्धि चतुर्मुखम्
षट्सन्धिः सप्तशाला च बहुसन्धिदशशालयम् ३७

चतुःशाल वर्धमानान्तं कुर्यात्तु सर्वभूमिकम्
अधिराजनरेन्द्राणां सर्वतोभद्रकान्तकम्  ३८

पार्ष्णिकादिञ्च भूपानां दण्डकादिचतुष्टयम्
दण्डकादि त्रिशालान्तं कुर्यात्पट्टधरे तथा  ३९

मण्डलेशादिभूपानां दण्डकादिस्वस्तिकान्तकम्
केचित्त्रिविधमौलीनां सर्वशाला च योग्यकम्  ४०

दण्डकादिक्रमात् शालाविन्यासं वक्ष्यतेऽधुना
पूर्वे च पश्चिमे शाला प्रत्यक् प्रागालयं तु वा  ४१

उत्तरे याम्यशालायां सौम्यशालां च दक्षिणे
अतश्चाथ चतुर्दिक्षु तत्तच्छालां प्रकारयेत्  ४२

पूर्वशाला च एकं च तद्द्वारं पश्चिमे भवेत्
दण्डकं दक्षिणे शाला तद्द्वारं चोत्तरे दिशि  ४३

एकशाला यथाप्रत्यक् तद्द्वारं प्राग्दिशस्तथा
उदक् दण्डकशालानां कुर्याद् द्वारं तु दक्षिणे  ४४

विस्तारमेकभागं वा चेष्टभागायते तथा
यथेष्टदेशे तत्कुर्यात् शालालिन्द्रमुदीरितम्  ४५

इष्टदीर्घितपादं स्यात्कुडय पादसमन्वितम्
पुरतः पादयुक्तं वा पृष्ठे कुडयं प्रकारयेत्  ४६

प्राकारान्तर्बहिर्वापि वेदिकाद्यैरलङ्कृतम्
एतत्तु दण्डकं प्रोक्तं प्राकारादिवमायतम्  ४७

विस्तारे चैकभागेन द्विभक्त्यायाममीरितम्

ललाटे द्वितयस्योर्ध्वे दराडखरिाडतवद् भवेत् ४८

पराडशालाख्यकं प्रोक्तमेतत्सर्वजनार्हकम्
तत्पुरेलिन्द्रसंयुक्तं भिन्दशाला प्रकीर्तितम् ४९

विस्तारे द्व्यंशकं कृत्वायामे चैवं त्रिभागिकम्
मूले शाला विशालं स्यात्पुरतो वारमंशकम् ५०

मुखशालाविनेत्रे च वासमेकैकभागिकम्
परितो वारमेकांशं द्विललाटं तु पूर्ववत् ५१

मध्ये द्वारं तु संयुक्तं मुखे चैकतलान्वितम्
एवं तु देवतायोग्यं दराडकान्तमुदीरितम् ५२

द्विचतुर्भागविस्तारमायामं तत्प्रकल्पयेत्
शालाविशालतांशेन तत्पूर्वेऽलिन्द्रमंशकम् ५३

एकद्विंशेन वासं स्यात्यथामूलं तु योजयेत्
अथवा द्विद्विभागेन वासं तद्वंशमूलके ५४

वंशाग्रे रङ्गसंयुक्तं तत्पुरे लिन्दं भागतः
अथवा मध्ये प्रतिष्ठाने त्यक्तवासद्वयं न्यसेत् ५५

अन्तर्वासं बहिर्वासं द्वार मध्यं तु वामके
अथवा चायतार्धेन मध्ये कुडयं च कल्पयेत् ५६

द्वारं तत्कुडयपार्श्वे तु वासमेत द्वयं भवेत्
एतत्तु दराडकं प्रोक्तं शेषं प्रागुक्तवन्नयेत् ५७

सर्वेषामपि जातीनां सर्वकामार्थयोग्यकम्
द्विचतुर्भागविस्तारमायामं तत्प्रकल्पयेत् ५८

मुखशाला विशाला च चतुर्भागं तथायतम्
पुरतोऽलिन्द्रमेकांशं भित्तिं कुर्यात्समन्ततः ५९

मूलाग्रे द्विद्विभागेन वासरङ्गं च कल्पयेत्
अथवा चैकद्विभागेन वास वंशाग्रंमूलयोः ६०

कुर्यात्तु मध्यमे रङ्गं पृष्ठे पार्श्वे च भित्तिकम्
पूर्वे च स्तम्भसंयुक्तं मध्ये स्तम्भान्परित्यजेत् ६१

परितो द्वारमेकांशं दण्डकं परिकीर्तितम्
शेषं प्रागुक्तवत्कुर्यात्सर्वजात्यार्हकं भवेत् ६२

चतुःषड्भागविस्तारं आयामं तत्प्रकल्पयेत्
मध्ये च द्विचतुर्भागं शालाविस्तारमायतम् ६३

एकद्विद्विविभागं वा वासं वा चैकवासयुक्
वंशमूलाग्रयोर्वासं वंशमूलैकवासकम् ६४

तद्बहिः पुरतोऽलिन्दमेकभागेन कारयेत्
तद्बहिः परितः कुड्यं युक्तं वाङ्घ्रियुतं तु वा ६५

तद्बहिर्भित्तियुक्तं चेत्परितोंऽशेनालिन्दकम्
एकद्विंशेन भद्रं स्यान्निर्गमं विस्तृतं भवेत् ६६

चतुर्दिक् भद्रसंयुक्तं द्विललाटं तु पूर्ववत्
द्वितलं कर्णहर्म्यादि प्रासादवदलङ्कृतम् ६७

अथवा शालकूटादीन् विनालिन्देन भूषितम्
मध्यसूत्रं तु वामे तु द्वारं कुर्याद्विचक्षणः ६८

केचिच्छाला विभागं स्यात्पुरतोऽलिन्द भगतः

यथेष्टदिग्वासयुक्तं शेषं प्रागुक्तवन्नयेत् ६९

एतत्तु दराडकं प्रोक्तं देवभूसुरभूपतेः
तदेव परितोऽलिन्दं विना सर्वं जनार्हकम् ७०

तस्माद् द्विंशाधिकायामं विस्तारं पूर्ववद् भवेत्
वंशमूलाग्रयोर्वासं चतुर्भागेन कारयेत् ७१

तद्द्वयोर्मध्यरङ्गं स्याच्चतुर्भागेन योजयेत्
पुरतः पृष्ठतोऽलिन्दं ततश्चैकद्विभागिकम् ७२

शेषं तु पूर्ववत्कुर्याद् दराडकं सर्वजातिनाम्
पञ्चसप्तांशविस्तारमायामं तत्प्रकल्पयेत् ७३

मध्ये पञ्चांशकं वापि पार्श्वयोर्द्विद्विभागतः
कुर्यान्मराडपं शेषं च पुरतः पृष्ठलिन्दकम् ७४

तत्तद्वाह्यावृतांशेन द्वारं भद्रं द्विभागिकम्
कूटकोष्ठादिसर्वाङ्गं प्रासादवदलङ्कृतम् ७५

एवं तु दराडकं प्रोक्तं देवानां वासयोग्यकम्
षड्भक्तिविस्तृतायाममष्टभागेन योजयेत् ७६

त्रिचतुर्द्व्यंशकं वापि मध्ये रङ्गं प्रकल्पयेत्
पृष्ठतोऽलिन्दकं कुर्यादेकद्व्यंशेन मेव वा ७७

पुरतोऽलिन्द्र भागं स्याद्वासयुग्म युगांशकम्
वंशमूलाग्रयोर्वासं मध्ये रङ्गं न्यसेद् बुधः ७८

अथवा तच्चतुष्कर्णे वासं तं तं द्विभागतः
अथवा द्विललाटे च निवासत्रयमेव च ७९

परितो द्वारमेकांशं कुर्याद् द्व्यंशेन मेव च
मध्यसूत्रात् तु वामे तु द्वारं कुर्याद् विचक्षणः ८०

एकानेकतलोपेतं प्रासादवदलङ्कृतम्
एतत्तु दण्डकं प्रोक्तं सर्वजात्यर्हकं भवेत् ८१

दण्डकानां च सर्वेषां प्रमुखे मण्डपं न्यसेत्
विस्तारं तत्समं वापि द्विगुणं त्रिगुणं तु वा ८२

यथेष्टांशेन परितो मण्डपं मध्यमाङ्गणम्
मुखे वासविशालं स्यात्तत्समं पृष्ठभद्रकम् ८३

तदर्धं निर्गमं वापि भद्र वासवशान्नयसेत्
मण्डपस्य वशाद् भद्रं तन्मुखे कर्करीकृतम् ८४

शालाया दण्डकायामे नवभाग विभजिते
गृहस्य दक्षिणे पञ्चभागं वामे गुणांशकम् ८५

तद्द्वयोर्मध्यदेशे तु द्वारं कुर्याद् विचक्षणः
सर्वेषामपि शालाश्च कर्तु राश्यानुवर्जयेत् ८६

ग्रहणं दण्डकाः शाला गृहिणी चानुकूलकम्
मेषस्य मीनकुम्भस्य पूर्वस्य दक्षिणे शुभम् ८७

कुलीराक्षमिथुनस्य दक्षिणे पश्चिमालयम्
नौलिसिंहस्य कन्यायाः पश्चिमे चोत्तरे शुभम् ८८

ग्राहवृश्चिकचापस्य प्रागुदग्दिशि रालयम्
न कुर्यादिकशालाश्च शुभमन्यैः पुरोक्तवत् ८९

एवं राशिवशाच्छाला दण्डकं तदुदीरितम्

एकशालाश्चतुर्दिक्षु गृहारम्भमिहोच्यते ९०

कुम्भे च मकरे पूर्वे मेषे च वृषभे यमे
सिंहकर्कटके प्रत्यक् वृश्चिके तौलि चोत्तरे ९१

गृहारम्भमिति प्रोक्तं सुमुहूर्ते सुलग्नके
अन्यथा सर्वशालाश्च यथामासे समारभेत् ९२

अन्यानुक्तचतुर्मासे सर्वहर्म्यान्न कारयेत्
चतुर्दिक्षु वास्तुपुरुषं चतुर्भागेन योजयेत् ९३

यन्माने सर्वहर्म्यं च कारयेत्तु शुभावहम्
विदिग् वास्तुपुरुषं चेत्सर्वहर्म्यं न कारयेत् ९४

वास्तुभूतयथाहर्म्ये विपरीते विपत्करम्
तस्मात्तु वास्तुशयनं ज्ञापयेद् वक्ष्यतेऽधुना ९५

यथादिक्षु स्थितादित्यो तद्दिक्षु चरणायतम्
तत्पृथ्वीशिरः क्षिप्यं चाधो वामकं तथा ९६

तद्दक्षिणभुजं चोर्ध्वे पुरुषं शयनं स्मृतम्
गृहायामे तथारामे गृहवाराहशालकम् ९७

गृहायामेषु भागे तु पादाद् वेदांश चोर्ध्वके
एकांशं कुक्षिदेशं स्याद् वेदान्तं मध्यदेशके ९८

मेढ्रादि तलसीमान्तं वेदांशं पाददीर्घकम्
मेढ्रादूर्ध्वे च वेदान्तमेकांशं तत् शिरायतम् ९९

मूर्धादधः शिवांशे तु हृदयस्थानमीरितम्
हृदयात्कुक्षियोर्मध्ये मध्यकायं प्रकथ्यते १००

विस्तारमध्यसूत्रं तु मुखद्वारवशाद् विदुः
ज्ञापयेद् वास्तुपुरुषं विन्यसेत् सर्वहर्म्यके  १०१

एतत्तु दण्डकं प्रोक्तं स्वस्तिकं वक्ष्यतेऽधुना
विस्तारे वसुभागे तु दशभागायतं भवेत्  १०२

पूर्वोक्तालङ्कृतं ज्ञात्वा भागमानेन विन्यसेत्
पञ्चसप्तांश विस्तारमायामं पुरतोऽङ्गणम्  १०३

तत्पार्श्वेऽलिन्द्रमंशेन स्वस्तिकाकारसंयुतम्
तद्द्विपार्श्वे द्विशालाश्च द्विभागेन विशालता  १०४

तद्द्वयोर्मध्यके वासं द्विद्विभागेन नैर्ऋते
वंशानां चाग्रयोर्देशे द्विद्विभागेन कोष्ठकम्  १०५

तद्बहिश्चावृतांशेन कुर्याद् भूवृतालिन्दकम्
एकद्विंशेन भद्रं स्यात्कर्णेषु कर्करीकृतम्  १०६

द्विशालाग्रे तु वक्त्रं स्यादेकद्विंशेन निर्गमम्
अङ्गणे प्रतिपार्श्वे तु कुड्यद्वारं तु संयुतम्  १०७

शालायामे विशाले वा द्वारं कुर्यात्पूर्ववत्
एकानेकतलोपेतं नैर्ऋत्ये तु विचक्षणः  १०८

एवं तु स्वस्तिकं प्रोक्तं पूर्वोक्तानां तु योग्यकम्
दशभागं विशाले तु चायामं द्वादशांशकम्  १०९

द्विशालाविस्तृतं चैव त्रिभागेनैव कारयेत्
पूर्ववत्पुरतोऽलिन्दं त्रिभागेनैव विशालता  ११०

वासनात् त्रित्रिभागं स्यात् शेषं प्रागुक्तवन्नयेत्

एवं तु स्वस्तिकं प्रोक्तं मौलिकं वक्ष्यतेऽधुना १११

दशभागविशाले तु द्विभागायाममधिकम्
त्रिशालामध्यदेशे तु वेदांशं विस्तृताङ्गणम् ११२

आयामं चाष्टभागं स्यादंशेनावृतालिन्दकम्
तत्पृष्ठपार्श्वयोश्चैव द्विंशं शालाविशालकम् ११३

द्विद्विभागेन वासं स्यात्कर्णयोश्च द्वयं त्रिकम्
तद्बहिः परितोऽलिन्दमेकद्विंशेन मेव वा ११४

षड्वक्त्रं च समं तारं चैकद्व्यंशेन निर्गमम्
एकानेक तलोपेतमङ्गणे नैर्ऋत्यवायवे ११५

एवं तु मौलिकं कुर्यात्पूर्वोक्तानां तु योग्यकम्
द्वादशांश विशाले तु तस्माद् द्व्यंशाधिकायतम् ११६

पुरतः पृष्ठभागे तु कुर्यादंशेनालिन्दकम्
शालाकारं त्रिभागं वा पुरतो द्वारदण्डकम् ११७

शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्
सैकार्कभागविस्तारमध्यर्धां शेनायतं तथा ११८

पञ्चभागदशांशेन विस्तारायामतोऽङ्गणम्
तद्बहिः परितोंऽशेन वारं शालाद्वयांशकम् ११९

तत्पृष्ठपार्श्वयोरलिन्दं चैकभागेन कारयेत्
शालाकारं त्रिभागं वा त्रित्रिभागेन मण्डपम् १२०

शालानां मध्यमे वासं तत्त्रिभागेन कारयेत्
सन्ध्ययोश्चाग्रयोश्चैव मण्डपं स्याच्चतुर्विधम् १२१

वासं च त्रयसंयुक्तं बहिर्वारवृतांशकम्
मध्ये द्वारं प्रकर्तव्यं पञ्चद्विंशेन भद्रकम्  १२२

पृष्ठे च पार्श्वयोर्मध्ये युक्त्या भद्रं तु योजयेत्
कर्णैकभद्रं स्यात् शालाग्रे नेत्रभद्रकम्  १२३

कर्णहर्म्यादिसंयुक्तं प्रासादवदलङ्कृतम्
एकानेकतलोपेतं वास वासोपरि न्यसेत्  १२४

एतत्तु मौलिकं प्रोक्तं देवतानां च योग्यकम्
तदेव कोणे चाग्रे तु वासमध्ये तु मण्डपम्  १२५

एवं तु चक्रवर्त्तीनां कुर्यादालयं विदुः
एवं तु मौलिकं प्रोक्तं वक्ष्यते चतुरालयम्  १२६

विस्तारे दशभागे तु चायामे द्वादशांशकम्
द्विचतुर्भाग तन्मध्ये विस्तारायामतोऽङ्गणम्  १२७

तद्बहिश्चावृतांशेन नन्द्यावर्तं चालिन्दकम्
तद्बहिश्च चतुःसाला तत्पूर्वादिक्रमान्नयसेत्  १२८

प्रागुदक्दक्षिणायाम दक्षिणे च ललाटकम्
याम्ये प्राक्प्रत्यगायामं पश्चिमे तु ललाटकम्  १२९

पश्चिमे याम्युदक्दीर्घं तद्वक्त्रं च तथोत्तरे
उदक् प्राक् पश्चिमे दीर्घं तस्य नेत्रं तु पूर्वके  १३०

तत्तच्छालाविशाले तु तदंशेन गुणांशकम्
पूर्वे च पश्चिमे शाला तत्तद्दीर्घं षडंशकम्  १३१

दक्षिणे चोत्तरे शाला चाष्टांशं च तथायतम्

एवमेतच्चतुःशाला दण्डकाकृतिसंयुतम्  १३२

तद्बहिः परितो वारं चैकद्व्यंशेन मेव च
एकद्वित्रिद्वियोगं वा नेत्रविस्तारनिर्गमम्  १३३

तत्तच्छाला द्विनेत्रं स्याद्बहिर्नेत्रैकनिर्गमम्
चतुर्नेत्रं बहिः पश्येत्तस्मादेवं चतुर्मुखम्  १३४

अधिष्ठानादिवर्गाढ्यं प्रासादवदलङ्कृतम्
एकानेकतलोपेतं सर्वालङ्कारसंयुतम्  १३५

एवं चतुर्मुखं प्रोक्तं नन्द्यावर्ताकृतिर्भवेत्
द्वादशांश विशाले तु मनुभागं तथायतम्  १३६

चतुःषड्भागविस्तारमायामं मध्यमाङ्गणम्
तद्बहिश्चावृतांशेन पूर्ववत्तदलिन्दकम्  १३७

दीर्घशाला दशांशं स्याद्ध्रस्वशाला यमांशकम्
विस्तारं पूर्ववत्कुर्यादथवा त्र्यंशालिन्दकम्  १३८

शेषं प्रागुक्तवत्कुर्याद् देवानां तु चतुर्मुखम्
तद्विस्तारायते भागं तस्माद् द्व्यंशाधिकं बुधः  १३९

द्व्यंशेनालिन्दविस्तारं सर्वं कुर्यात्पूर्ववत्
यथेष्टावास संकल्प्य चेष्टदिक् चान्तरालके  १४०

अन्तःशाला यथाद्वारं दण्डकस्योक्तवत्कुरु
एतच्चतुर्मुखं प्रोक्तं पूर्वोक्तानां तु संमतम्  १४१

सर्वतोभद्रविन्यासं लक्षणं वक्ष्यतेऽधुना
समाश्रं सर्वतोभद्रं चाष्टभागं विभाजिते  १४२

मध्याङ्गणं चतुर्भागं चांशेनावृतालिन्दकम्
परितो द्व्यंशेन शाला च चतुर्वासससमन्वितम् १४३

द्विचतुर्भागविस्तारमायामं वा समीरितम्
चतुष्कोणे चतुर्भक्ति मण्डपं तु चतुष्टयम् १४४

तत्तद्बाह्यावृतांशेन कुर्याद् भ्रमालिन्दकम्
चतुर्दिक्षु चतुर्द्वारं युक्तं भद्रं चतुष्टयम् १४५

वेदद्व्यंशेन विस्तारं निर्गमं चापि भद्रकम्
ऊर्ध्वभूमिं समारुह्य कर्णे सोपानमंशके १४६

प्रच्छादनाङ्गणं कुर्यान्न प्रच्छादनमेव वा
एकानेकतलोपेतं पूर्ववत्समलङ्कृतम् १४७

कर्णहर्म्यादिसंयुक्तं प्रासादवदलङ्कृतम्
एतत्तु सर्वतोभद्रं पूर्वोक्तानां तु संमतम् १४८

पूर्ववद्विस्तृतायामे दशभाग विभाजिते
वेदवेदांशकं मध्ये विवृतं संवृताङ्गणम् १४९

तद्बहिश्चावृतांशेन कर्करीसमलङ्कृतम्
शेषं तु पूर्ववत्कुर्यात्सर्वतोभद्रमीरितम् १५०

शाला च वर्धमानं च लक्षणं वक्ष्यतेऽधुना
नवपङ्क्तिकरारभ्य द्विद्विहस्तविवर्धनात् १५१

सनन्दविंशत्र्यंशं च हस्तान्तं रुद्रसंख्यया
एतत्तु विस्तृतं प्रोक्तं द्विगुणान्तं पूर्ववदिति १५२

आयाममिति तत्प्रोक्तमुत्सेधं पूर्ववद् भवेत्

विस्तारे दशभागे तु द्वादशांशं तथायतम्  १५३

द्विचतुर्भागविस्तारमायामं मध्यमाङ्गणम्
तद्बाह्ये परितोऽलिन्दं द्वयद्व्यंशेन मेव वा  १५४

तद्बाह्ये परितः शालाविस्तारं तद्विभागिकम्
तत्समेनावृतालिन्दं तद्बहिः परिकल्पयेत्  १५५

ईशे चैकतलं कुर्यादाग्नेये द्वितलं भवेत्
वायव्ये त्रितलं कुर्यान्नैर्ऋत्ये पञ्चभूमिकम्  १५६

याम्ये च पश्चिमे चैव दण्डकं च चतुःस्थलम्
पूर्वे च चोत्तरे मध्ये दण्डकं चैकभूमिकम्  १५७

चतुष्कोणे द्विभागेन गृहविस्तारदीर्घकम्
पूर्वे च द्विद्विभागेन मुखमण्डपमीरितम्  १५८

पश्चिमे तत्समं कुर्यान्मण्डपं तत्प्रकल्पयेत्
दक्षिणे चोत्तरे मध्ये द्विचतुर्भागेन मण्डपम्  १५९

शेषं तु चावृतालिन्दं कुर्यात्तत्पञ्जरान्वितम्
द्विचतुर्भागविस्तारं पार्श्वयोर्भद्रसंयुतम्  १६०

पृष्ठे च द्व्यैकभागेन भद्रं कुर्याद् विचक्षणः
पूर्वे च द्विचतुर्भागं मुखद्वारं तु सयुतम्  १६१

सर्वेषां भद्रपार्श्वे तु पूर्वे चैकेनालिन्दकम्
सोपपीठमधिष्ठानं पादादीन् प्रस्तरान्वितम्  १६२

कर्णहर्म्यादिवर्गाढ्यं चान्तरं प्रस्तरान्वितम्
कूटकोष्ठादिसर्वाङ्गं नासिकापञ्जरान्वितम्  १६३

कुम्भकुम्भतलैर्युक्तं तोरणादिविभूषितम्
सर्वेषां मकरालाना सर्वालङ्कारसंयुतम् १६४

शिरोग्रीवशिखायुक्तं नासिकावेदिकान्वितम्
एवं तु वर्धमानं स्यात् क्षत्रियाणां तु योग्यकम् १६५

विशाले द्वादशांशं स्यात्तस्माद् द्व्यंशाधिकायतम्
चतुःषड्भाग विस्तारमायामं दक्षिणोत्तरे १६६

एकशालाकृतिं कुर्यात्पञ्चभूमि त्रिभूमिकम्
अनलानिलकोणे तु कुर्यात्तत्तु त्रिभूमिकम् १६७

पश्चिमे द्विचतुर्भागशालापञ्चतलान्वितम्
पूर्वे च द्विचतुर्भगं मण्डप चैकभूमिकम् १६८

ईशाने चैकभूमिं स्यात्प्रासादवदलङ्कृतम्
नैर्ऋत्ये सप्तभूमि स्यात्कूटकोष्ठादि पूर्ववत् १६९

तन्मध्ये भद्रसंयुक्तं भागैकायामनिर्गमम्
एकेन कर्णकूटं स्याच्चतुष्कोणे तु मण्डितम् १७०

कूटे च भद्रयोर्मध्ये हारांशं मध्यमेन तु
अधिष्ठानादिवर्गाढ्यं कर्णहर्म्यादिमण्डितम् १७१

प्रासादवदलङ्कृत्य शेषं प्रागुक्तवन्नयेत्
एकशाला द्विपार्श्वे च भद्रांशैर्वेदभागिकम् १७२

पृष्ठे च द्विचतुर्भागं भद्रं कुर्याद्विचक्षणः
अथवा चाष्टभागेन भद्रं युक्त्या प्रयोजयेत् १७३

षड्भागद्व्यंशमेवं वा शालाकारं तु पृष्ठतः

चतुःषड्भागविस्तारमायामं मुखवारणम् १७४

पुरतः पार्श्वयोश्चैव चैकभागेनालिन्दकम्
द्विचतुर्भाग तन्मध्ये मराडपाकार कल्पयेत् १७५

मुखे सोपानसंयुतं सर्वालङ्कारसंयुतम्
युक्त्या भद्रं तु सर्वाङ्गं चोर्ध्वे चोर्ध्वतलान्वितम् १७६

पादोर्ध्वे पादसंयुक्तं भित्त्यूर्ध्वे भित्तिसंयुतम्
पादोर्ध्वे भित्तियुक्तं चेत्सर्वदोषं समुद्भवेत् १७७

कुडचस्योपरि पादैश्च कृत्वा सर्वं शुभावहम्
सर्वावयवसंयुक्तं सर्वालङ्कारसंयुतम् १७८

एवं सप्ततलं वर्धमानं शेषं तु पूर्ववत्
विस्तारे मनुभागे तु षोडशांशं तदायतम् १७९

पूर्ववच्चाङ्गरा शाला तदंशाधिकं भद्रकम्
नैर्ऋत्ये नवभूमिः स्याद्युक्त्या चान्यानि योजयेत् १८०

सर्वालङ्कारसंयुक्तं प्रासादवदलङ्कृतम्
मध्यसूत्रात् तु वामे तु मध्ये वा द्वारसंयुतम् १८१

पूर्वद्वारं यथा वर्धमानं शाला प्रकल्पयेत्
एवं नवतलं वर्धमानं कुर्यात्तु भूपतेः १८२

षोडशांशे विशाले तु विभजेद् द्व्यंशाधिकायतम्
तद्भागेन द्विभागं स्याच्छाला शेषं तु पूर्ववत् १८३

नैर्ऋत्ये रुद्रभूमिः स्यात्त्रितलं चैशकोराके
पावके वायवे चैव कुर्यात्तु पञ्चभूमिकम् १८४

दक्षिणे सप्तभूमिः स्यादुत्तरे पञ्चभूमिकम्
पश्चिमे सप्तभूमिः स्यात्पूर्वे च द्वितलं भवेत् १८५

एवमेकादशतलं वर्धमानमिति स्मृतम्
शेषं तु पूर्वत्कूर्यात्सर्वालङ्कारसंयुतम् १८६

तदेव विस्तृतायामे चैकभागाधिकं तथा
पञ्चसप्तांशं विस्तारमायामं मध्यमाङ्गणम् १८७

शेषं तु पूर्ववत्कुर्यान्नैर्ऋत्ये रविभूमिकम्
ईशे पञ्चतलं कुर्यात्पावके सप्तभूमिकम् १८८

वायव्ये चाष्टभूमिः स्यात्सप्तभूमिमथापि वा
दक्षिणे पश्चिमे मध्ये कुर्यान्नवतलं तथा १८९

वर्धमानं तु सर्वेषां प्राक्प्रत्यक् गतायतम्
पार्श्वे दण्डकमाकारं कुर्याद् भूमि तले तले १९०

आदिभूमि यथाकार वास वासोपरि न्यसेत्
द्वार द्वारोपरि न्यस्तं तस्माद् द्वारं समं तथा १९१

द्वारस्योपरि कूडच्यं चेत्सर्वसंपद्विनाशनम्
स्तम्भकुडच्यं च रङ्गं स्यात्स्तम्भयुक्तं चालन्दकम् १९२

वासगर्भगृहं चैव मध्यस्तम्भान्परित्यजेत्
कुडच्यसंयुक्तमेवान्तं मानं प्रागुक्तवन्नयेत् १९३

तले तले च वासं चेत्प्रस्तरस्योपरि न्यसेत्
गृहकोष्ठादिमानानां जलस्थालिन्दमानकम् १९४

महाद्वारो महाभद्रं मण्डपाकृति विन्यसेत्

कुर्यात्तदुक्तवद्युक्त्या चोपद्वारं तु योजयेत्  १९५

विविधं च यथेष्टदिग्देशे चेष्टदिग्गतिभित्तिकम्
तले तले तु सोपानमारुह्यार्थं प्रयोजयेत्  १९६

अन्यान्यनुक्तं सर्वेषां शास्त्रयुक्त्या समाचरेत्
एवं रवितलं वर्धमानमुक्तं पुरातनैः  १९७

एवं प्रोक्तं तु शालानामायादिर्वक्ष्यतेऽधुना
दीर्घे चायं व्ययं ऋक्षं योनिः स्यात्तु विशालके  १९८

परिणाह तिथिर्वारं गृहशेषं तु पूर्ववत्
कुर्यद्धर्म्यविधानोक्तं क्षयवृद्ध्यङ्ग सर्वशः  १९९

सर्वे शाला नासिकातोरणाद्यैः
पत्रैश्चित्रैः किम्बरीवक्त्रयुक्तम्
कुर्यान्नानालङ्कृतं नैकभूमौ
श्रीसौभाग्यारोग्यभोग्यप्रदायि  २००

इति मानसारे वास्तुशास्त्रे शालाविधानं नाम पञ्चत्रिंशोऽध्यायः

## गृहमानस्थानविधानम्

द्विजातीनां च सर्वेषां वर्णानां वासयोग्यकम्
गृहाणां मानविन्यासं स्थानं च वक्ष्यतेऽधुना  १

ग्रामे च नगरे वापि पत्तने खटकेऽपिवा
वने वा चाश्रमे वापि नद्यद्रेश्च पार्श्वके  २

तेषां तु वेश्मनः स्थानं कल्पयेच्छिल्पिवित्तमः
द्वित्रिदण्डं समारभ्य द्विद्विदण्डविवर्धनात्  ३

पङ्क्त्यैकपङ्क्तिदण्डान्तं पञ्चधा विपुलं भवेत्

पादाधिकमथाध्यर्धं पादोनं द्विगुणं तु वा ४

द्विगुणान्तं गृहायामं गृहचान्तरमधिकम्
दीर्घ पादाधिकं दीर्घमन्तपादत्रयान्तकम् ५

गृहायामसमं वापि तस्मात्पादाधिकं तु वा
अर्धाधिक त्रिपादं चाधिक्यं वा त्रिगुणान्तकम् ६

गृहतारायतं ह्येवं विस्तारं गृहतारतत्
गृहायामविशाले तु परमशायिकपदं न्यसेत् ७

ब्रह्मस्थानं विनान्येषां सर्वेषां वासयोग्यकम्
आर्यो विवस्वान् मित्रं भूधरश्च चतुष्टये ८

द्विजानां मुख्यहर्म्यं स्यात्कल्पयेत्तच्छ्रियावहम्
विवश्चिति पदे चैव मित्रके भूधरे तथा ९

भूपानां मुख्यवासं स्यादन्यजातेरयोग्यकम्
आपाद्यष्टामरदेशे वर्णानां वासयोग्यकम् १०

इन्द्रादिषु चतुर्दिक्षु द्विजानां वासयोग्यकम्
यमे च वारुणे चैव भूपाना मुख्यवासकम् ११

वरुणे च शशस्थाने वैश्यानां वासयोग्यकम्
नैर्ऋत्ये सोमे ईशे च शूद्राणां वासयोग्यकम् १२

अनिलानलदेशे च सर्वेषां वासयोग्यकम्
उत्तरेशानपर्जन्ये सर्वेषां पचनालयम् १३

अन्तरिक्षाग्निपूषा च वर्णानां कूपयोग्यकम्
याम्ये च नैर्ऋते वापि सर्वेषां भोजनालयम् १४

वायव्ये विप्रजातीनां देवताभोजनालयम्
अदिते चेशकोणे वा पितृणां देवतार्चनम् १५

भल्लाटे च मृगे चैव द्विजानां गृहणीगृहम्
गन्धर्वे भृङ्गराजे वा मृगे चैवान्तरिक्षके १६

सर्वेषां भूपतीनां च महिष्यावासयोग्यकम्
पुष्पदन्ते स्वकर्णे वा चायुधानां च मण्डपम् १७

वरुणे चासुरे नागे मुख्ये पर्जन्यसोमके
वैश्यानां तु परेषां तु गृहिण्यावासयोग्यकम् १८

सत्यके चान्तरिक्षे वा सर्वेषां शयनालयम्
शेषे चैवासुरे चैव वरुणे वासनालयम् १९

सोमे मृगपदे चैव हेमरत्नस्य वासकम्
नागे चैव द्विजानां च हुत कर्मालयं भवेत् २०

अदिते सर्वजातीनां स्नपनार्थालयं भवेत्
तत्रैव सन्धिकार्यार्थं तद्बाह्ये चरणालयम् २१

यमे च नैर्ऋते वापि सूतकारालयं भवेत्
इन्द्रे चैव महेन्द्रे वा दासानामालयं तथा २२

ततश्चेशानबाह्ये तु चतुर्धारालयं भवेत्
पूषे च वितते चैव धेनोरालयमेव च २३

द्वारस्य वामपार्श्वे तु वाहनानां तदालयम्
आपश्चैवापवत्सा च बालालोकनमण्डपम् २४

ब्रह्मस्थानसमीपे तु विवाहाद्यर्थमण्डपम्

इन्द्रे च इन्द्रराजे च वस्त्राच्छादनमगडपम्  २५

रुद्ररुद्रजये वापि कन्यकारालयं भवेत्
सावित्रे च सवित्रे वा पुत्राणां चैव वासकम्  २६

मृगे च सर्वजातीनां विद्याभ्यासार्थमगडपम्
तस्य बाह्यप्रदेशे तु तैलाभ्यङ्गार्थमगडपम्  २७

अन्त्ये चावरणे चैशे वास्थानमगडपं भवेत्
सोमे चैव विशालार्थं मगडपं कल्पयेत्ततः  २८

मृगे वा मुख्यके वापि विलासीनां तदालयम्
पावके पूषके वाथ सत्यके वा महेन्द्रके  २९

सखीनां च गृहं कुर्यात्तत्रैवानुचरालयम्
द्वारस्य दक्षिणे पार्श्वे रक्षकारालयं भवेत्  ३०

तत्रैव परिवारार्थं योधकानां तथालयम्
गृहक्षते यमे चैव महिषाद्यालयं भवेत्  ३१

गन्धर्वे भृङ्गराजे चन्द्रदृष्टानास्यत् तदालयम्
वृषे वा नैर्ऋते वापि दिनादीनां गृहं भवेत्  ३२

वरुणे पुष्पदन्ते वा युवराजगृहं भवेत्
महेन्द्रे पुष्पदन्ते वा मुख्ये वाथ गृहक्षते  ३३

सर्वेषामपि वर्णानां द्वारं कुर्याद् विशेषतः
भूपानां मुख्यके द्वार विना चोक्तं पुरातनैः  ३४

पावके वानिले वापि धान्यकर्णनमगडपम्
नागे वा मुख्यके वापि धान्यागारं तु कल्पयेत्  ३५

शोषे वा चासुरे वापि पुष्पमराडपं संस्थितम्
चतुर्दिन्नु चतुष्कोरो सोपायास्थानमीरितम् ३६

वायवे चाथ भल्लाटे नागे वा सर्वहर्म्यके
कुर्यान्नृत्ताङ्गनानां च नृत्तयोग्यं तु मराडपम् ३७

रोगस्य च पदे चैव कुक्कुटावासयोग्यकम्
दौवारिके च सुग्रीवे मेषवासं च कारयेत् ३८

एकं वाथ द्विसालं वा त्रिसालं वार्धभित्तिकम्
भूपानां पञ्चसालान्तं द्वित्रिसालमथापि वा ३९

अन्तःसालपदे रोगे नित्यान्त मराडपं न्यसेत्
मुख्ये वासं तु सर्वेषां चोक्तवत्कारयेत्सुधीः ४०

सर्वेषामपि वर्णानां स्थानयोग्यं द्विजन्मनाम्
न्नत्रियादित्रयाणां च उक्तरीत्या प्रयोजयेत् ४१

सर्वेषां देवतास्थानं मुख्यं वा कल्पयेत्सुधीः
प्रधाने सोपवासं च धनार्थाय भवेदिह ४२

कतुश्चित्तवशाद्वापि सर्वेषां तु प्रधानकम्
अन्यत्सालं तु सर्वेषां चैकपन्नालयक्रमात् ४३

अन्यत्सालं तु सर्वेषामालयार्थं द्विपन्नकम्
भित्तिमानं तु सर्वेषां प्राकारस्योक्तवत्कुरु ४४

द्वारे च द्वारशालादिगोपुरान्तः क्रमान्नयसेत्
वैश्यशूद्रगृहे द्वारं चैकादित्रितलान्तकम् ४५

कुर्यात्तु शूद्रजातीनां द्वारं शालावसानकम्

मुख्यादि चोपवासैश्च सर्वं प्रागुक्तवन्नयेत्  ४६

यत्रैव कर्तुर्धिष्णावशतो विमानम्
सद्मादिकं सकलसीमविहारकुड्यम्
कोशादिनीतिहयमन्दिरदन्तिशाला
कुर्यात्ततोऽन्यदखिलं नगरं च शास्त्रात्  ४७
इति मानसारे वास्तुशास्त्रे गृहमानस्थानविधानं नाम षट्त्रिंशोऽध्यायः

## गृहप्रवेशविधानम्

अथ वक्ष्ये नराणां च गृहवेशस्य लक्षणम्
सर्वेषां जातिहर्म्याणां चोक्तवत् क्रियान्वितम्  १

उत्तरायणमासे तु दक्षिणायन मेव वा
मिथुनं धनुः कन्यां च मीनं चैव विवर्जयेत्  २

प्रशस्तपक्षनक्षत्रे सुमुहूर्ते सुलग्नके
उभयोः स्थिरराशौ च शुक्लपक्षे प्रवेशयेत्  ३

स्थपतिः स्थापकश्चोभौ गृहवेशं समारभेत्
गृहाग्रे मण्डपं कृत्वा प्रपां वा कूटमेव वा  ४

पञ्चसप्तकरं तत्र गेहता समाग्रकम्
षोडशस्तम्भयुक्तं वा द्वादशस्तम्भमेव वा  ५

विविधानां विधानानां नानावस्त्रैरलङ्कृतम्
गोमयालेपनं कृत्वा चोक्तवत्कृतसद्मकम्  ६

गृहे वा मध्यरङ्गे पार्श्वे वा चैशकोणके
कुर्यादुक्तवच्छिल्पी साङ्कुरार्पणमेव वा  ७

वास्तुमध्योक्तवच्छिल्पी साधारणबलिं दिशेत्

आपादाष्टारणां च पूजयेत्स्थपतिः प्रभुः ८

आर्यादीनां चतुर्थानां स्थापकेन बलिं ददेत्
ब्रह्मादिदेवताश्चैव पूजयेद् विधिवत् सह ९

वास्तुहोमं ततः कृत्वा तृप्तयर्थं वास्तुदेवताः
शुद्धिं कृत्वा ततः पश्चात्पर्यग्निकरणं गृहम् १०

जलसंप्रोक्षणं कुर्यात्पुण्याहं वाचयेत्ततः
पञ्चगव्येन संप्रोक्ष्य स्थपतिः स्थापकैः सह ११

पञ्चानां प्रत्यकुर्वीत पादप्रक्षालनक्रिया
विधिवदाचमनं कृत्वा मण्डपान्तः प्रविश्यतु १२

स्थण्डिले मण्डलं कृत्वा प्रस्तरे शुद्धशालिभिः
नवेन वारिकुम्भानि शुद्धतोयेन पूरयेत् १३

सूत्रेण नववस्त्रेण कुम्भानां परिवेष्टयेत्
नालिकेरफलद्यैश्च युक्तं कूर्चैश्च पल्लवैः १४

पञ्चविंशपदं न्यस्य शुद्धतण्डुल कारयेत्
कुशदर्भान्परिस्तीर्य तण्डुले चोक्तवत्क्रमात् १५

ब्रह्मादिनवकुम्भाश् च तण्डुलोपरि विन्यसेत्
स्वर्णेन प्रतिमां कृत्वा देवतानां विशेषतः १६

तत्तद्वस्त्रेषु संवेष्टय तत्तन्मन्त्रेण पूजयेत्
उपवासमुपक्रम्य कर्ता स्वगृहिणी सह १७

पीत्वा शुद्धं पयो रात्रावुपोष्य दिवसे पुनः
गृहिणीभर्तृहस्तौ च गृहस्तम्भ स्वयं करे १८

रक्षाबन्धं ततः कुर्याद् वाचयेत्स्वस्तिवाचकम्
तत्तद्वाहनादीनां च यत्प्रधानायुतापि च १९

दिवा वा रात्रिकाले वा कुर्यात्तदधिवासनम्
साङ्कुराः पालिकाः सर्वाः स्थण्डिलोपरि विन्यसेत् २०

ब्रह्मादिदेवतानां च पूजयेत्स्थपतिर्बुधः
तत्तत्स्वनाममन्त्रेण प्रणवादिनमोऽन्तकम् २१

हृल्लेखां मध्यकुम्भे तु पूजयेद् विधिवद् बुधः
गन्धपुष्पैः समभ्यर्च्य धूपदीपं ददेत् पुनः २२

पायसो दनशस्यादीन् ताम्बुलादि निवेदयेत्
नृत्तगीतादिवाद्यादिजयशब्दादिमङ्गलैः २३

अग्निकार्यं ततः कुर्यात्स्थण्डिलं प्राग्दिशि तथा
कुण्डे वा स्थण्डिले वापि समिदाज्यचरुं तिलम् २४

लाजकैश्चैव पञ्चैते प्रत्येकाष्टादशाहुतीः
प्रणवादिस्वाहान्तं स्यात् शक्तिबीजं समुच्चरेत् २५

शक्तिगायत्रिमन्त्रेण पूर्णाहुतिं समाचरेत्
अधिवासितकुम्भस्थजलेनैवाभिषेचयेत् २६

वेश्मद्वारन्तदी वेश्मकं गृहं प्रति गृहं प्रति
वाहनादीनि संप्रोक्ष्य स्थपतिस्थापकावुभौ २७

सर्वमङ्गलघोषैश्च स्वस्तिवाचनपूर्वकम्
पश्चाद् गृहमङ्गलं कुर्यान्नानावस्त्रैश्च शोभितम् २८

वितानध्वजसंयुक्तं पुष्पमाल्यैरलङ्कृतम्

स्थपतिर्वरवेषाढ्यः प्राप्तपञ्चाङ्गभूषणः २९

श्वेतानुलेपनं स्थाप्य स्वर्णयज्ञोपवीतवान्
नवशुक्लांशुकोपेतः श्वेतांशुकोत्तरीयवान् ३०

पादप्रक्षालनं कुर्यात्सकलीकरणं कृतम्
धूपदीपं ददेत् पश्चाद् गन्धपुष्पाक्षतैः सह ३१

ब्राह्मणैश्च यथाशक्ति वाचयेत्स्वस्तिवाचनम्
यजमानस्य प्रीत्या च अन्यैरनुचरैः सह ३२

गृहप्रदक्षिणं कुर्याज्जयशब्दादिमङ्गलैः
गृहद्वारस्य पुरतः स्थित्वायान्तं च वाचरेत् ३३

लक्ष्मीशं ततो नमस्कृत्य याचयेद्धिष्टमानकम्
मन्त्रम्
हे लक्ष्मि गृहकर्तारं पुत्रपौत्रधनादिभिः ३४

संपूर्णं कुरु चायुष्यं प्रार्थयामि नमोस्तुते
एतन्मन्त्रं समुच्चार्य स्थपतिस्थापकावुभौ ३५

यजमानाय पश्चात्तु दद्यान्नैवेद्यशेषकम्
स्थपतिः स्थापकानां च विप्राणां च विशेषतः ३६

दद्याद् दक्षिण ताम्बुलं तत्र सद्मप्रवेशने
तेभ्यः सह स्वपत्न्या चान्नक्षीरोदकादिभिः ३७

नानाभूषणैर्दिव्यैः गन्धमाल्याम्बरादिभिः
द्विजानां वेदघोषैश्च गीतनृत्तादिवाद्यकैः ३८

छत्रचामरसंपूर्णकलशैर्दक्षिणादिभिः

आरुह्य हयदिव्यादीन् यजमानस्य बन्धुभिः ३९

अन्यैरनुचरैः सार्धं कुर्याद् ग्रामप्रदक्षिणम्
ततः प्रवेशयेत्सर्वं सर्वमङ्गलघोषकैः ४०

पश्चाद् बन्धुजनैः सार्धं कुर्याद् ब्राह्मणभोजनम्
एवं गृहं तु संवेश्य पश्चात्तु स्थापकादिभिः ४१

वस्त्रभूषणवाहादीन्दद्यात्कर्ता स्वहस्ततः
स्थपतिः स्थापकान्येत्य युष्मभ्यः प्राप्तवान् गृहम् ४२

इत्युक्त्वा यजमानाय पश्चात्तं च विवर्जयेत्
आरुह्य ब्रह्मवाहं शुभमथ तच्छिल्पिमङ्घान् गजाद्यैः ४३

अश्वैरुच्छ्रादिनानापरिकरसहितं दुन्दुभिभेदनादैः
कर्ता नानानृसेनारथमपि विविधैश्चामरैः पुत्रसङ्घैः ४४

यावद् गच्छन्ति तावत्स्वपुरिपरिसरं स ज्ञयेद्दिष्टकाद्यैः ४५
इति मानसारे वास्तुशास्त्रे गृहप्रवेशविधानं नाम सप्तत्रिंशोऽध्यायः

## द्वारस्थानविधानम्

द्वारस्थानस्य विन्यासं लक्षणं वक्ष्यतेऽधुना
देवानां भूसुरादीनां वर्णानां च गृहे गृहे १

देवानां हर्म्यके सर्वे प्राकारे मण्डपे तथा
चतुर्दिक्षु चतुर्द्वारं चोपद्वारं यथेष्टकम् २

यथान्तरालदेशे तु मध्ये द्वारं प्रकल्पयेत्
भित्तिमध्ये यथाकुर्यात्तत्र दोषो न विद्यते ३

प्रच्छादनं यथाहर्म्ये द्वारं कुर्यात्तथैशके

जलद्वारं यथासारं निम्नदेशे प्रकल्पयेत्  ४

दक्षिणे च कवाटे तु द्वारं कुर्यात्तु मुख्यके
तिर्यङ्मध्ये तु सूत्रः स्यादधोदेशे प्रकल्पयेत्  ५

देवानां च मनुष्याणां महाद्वारं कवाटके
द्वाराणां तु यथामुख्ये युक्त्या सोपानसंयुतम्  ६

एवं तु देवहर्म्यादिद्वारं कुर्याद् विचक्षणः
नराणां च गृहे सर्वे द्वारस्थानं तु वक्ष्यते  ७

गृहायामे विशाले तु नन्दनन्दपदं भवेत्
पूर्वद्वारं च हर्म्याणां महाद्वारं महेन्द्रके  ८

अथवा मध्यसूत्रस्य वामे द्वारं प्रकल्पयेत्
ईशे वाथ पर्जन्ये चादिते चोदिते तथा  ९

जयन्ते वा मृगे वापि चोपद्वारं तु जालकम्
दक्षिणे द्वारशाले तु महाद्वारं गृहक्षते  १०

अथवा मध्यसूत्रस्य वामे द्वारं प्रकल्पयेत्
वितते च पदे पूषे पावके चान्तरिक्षके  ११

मृगे वा सत्यके चैव चोपद्वारादि पूर्ववत्
पश्चिमे द्वारहर्म्ये तु पुष्पदन्तपदे तथा  १२

मध्यसूत्रस्य वामे तु महाद्वारं प्रकल्पयेत्
सुग्रीवस्य पदे वापि दौवारिकपदेऽपि वा  १३

नैर्ऋत्ये वा मृगे वापि भृङ्गराजपदेऽपि वा
गन्धर्वे शेत्युपद्वारं तद् वदायतनमेव च  १४

उत्तरे द्वारशाले तु भल्लाटस्य पदे तथा
आयामे मध्यसूत्रात्तु वामे द्वारं प्रधानकम्  १५

मुखे नागपदे वापि चानिले वाथ रोगके
शेषे वापि सुरे वापि चोपद्वारं तु योजयेत्  १६

ईशानादिचतुर्द्वारं कुर्याद् दिक्षु यथेष्टकम्
पचनालयसर्वेषां मुखे द्वारं तु मध्यमे  १७

केचित्तन्मध्यसूत्रात्तु वामे द्वारं प्रकल्पयेत्
तदूर्ध्वगमनार्थाय क्षुद्रजालकसंयुतम्  १८

द्विचतुर्वा षडष्टापि दशद्वादशमेव वा
एवं तु जालकं कुर्यादुत्तराधो प्रदेशके  १९

मध्ये द्वारं तु कुर्यान्मध्यसूत्रात्तु वामके
कुर्याज्जलद्वारं तु श्रेणितद्वारं कल्पयेत्  २०

देवानां पचनार्थं तु कुर्याद् वै युग्मजालकम्
कुर्यादारुह्य यद् द्वारं नैर्ऋत्ये वापि चेशके  २१

गृहे सर्वे यथारङ्गे पृष्ठे तु जालकं वा
मध्ये न जालकं कुर्यान्मध्यसूत्रात्तु वामके  २२

कुर्यात्तु जलद्वारमुपद्वारोक्तवत्सुधीः  २३

पञ्चांशं दक्षिणे तस्य वामे
बन्धांशं स्यात्तत्तयोर्मध्यदेशके
हर्म्यायामे नन्दभागैकभागे
द्वारं कुर्यान्मानुषाणां निवासे  २४

हर्म्यायामे मध्यसूत्रस्य वामे
कुर्याद् द्वारं भूसुराणां नृपाणाम्

एवं द्वारं शेषकाणां तु कुर्यात्
कुर्याद् द्वारं हर्म्यमध्ये सुराणाम् २५

इति मानसारे वास्तुशास्त्रे द्वारस्थानविधानं नाम अष्टत्रिंशोऽध्यायः

## द्वारमानविधानम्

द्वारमानविधिं वक्ष्ये लक्षणं वक्ष्यतेऽधुना
भूसुराणां सुरादीनां वर्णानां चालयादिकम् १

वासं वातायनादीनां कुड्यगोपुरमण्डपे
द्वारस्तम्भयुतं सर्वद्वारमानाद् बहिर्भवेत् २

सार्धहस्तं समारभ्य षट्षडङ्गुलवर्धनात्
त्रयोविंशत्तदुत्सेधं द्वारं सप्तकरान्तकम् ३

महद्द्वारमिति प्रोक्तमुपद्वारमिहोच्यते
एकहस्तं समारभ्य त्रित्र्यङ्गुलविवर्धनात् ४

उपद्वार त्रिहस्तान्तं सप्तादशविधोदयम्
द्वादशाङ्गुलमारभ्य त्रित्रिमात्रविवर्धनात् ५

वातायन द्विहस्तान्त त्रयोदशविधोदयम्
शुद्धद्वारोदयं ह्येवं तद्विस्तारमिहोच्यते ६

सर्वेषां द्वारतुङ्गार्धं शुद्धद्वारं विशालकम्
अथवा द्वारमुख्यानां हर्म्यपादमिहोच्यते ७

तत्तत्पादोदये वाथ वसुनन्ददशांशकैः
तत्तदेकांशहीनं स्याद् द्वारतुङ्गमिति स्मृतम् ८

तदर्धं विस्तृतं प्रोक्तमथ हर्म्यवशोच्यते
सत्रिपादकरारभ्य षट्षडङ्गुलवर्धनात् ९

सत्रिपादत्रिहस्तान्तं कन्यसादि नवोदयम्
एवं तु क्षुद्रहर्म्ये तु मुख्ये द्वारं प्रकल्पयेत् १०

द्विहस्तं तु समारभ्य षट्षडङ्गुलवर्धनात्
चतुर्हस्तावसानं स्यात्कन्यसादि त्रयं त्रयम् ११

एवं तु मध्यहर्म्ये तु मुख्ये द्वारोदयं भवेत्
सार्धद्विहस्तमारभ्य षट्षडङ्गुलवर्धनात् १२

सार्धवेदकरान्तं स्यात्कन्यसादि नवोदयम्
मुख्यद्वारमिति प्रोक्तं मुख्यहर्म्ये तु योजयेत् १३

सप्तविंशोदयं ह्येवं तदर्धं विस्तृतं भवेत्
एवं जातिवशात्प्रोक्तं छन्दादीनां प्रवक्ष्यते १४

पञ्चविंशाङ्गुलारभ्य द्विद्व्यङ्गुलविवर्धनात्
त्रयोविंशशतान्तं स्याच्छन्दद्वारविशालकम् १५

एकविंशाङ्गुलारभ्य द्विद्व्यङ्गुलविवर्धनात्
एकविंशं शतान्तं स्याद्विकल्पद्वारविस्तृतम् १६

नवपङ्क्त्यङ्गुलारभ्य द्विद्व्यङ्गुलविवर्धनात्
एकपङ्क्त्यङ्गुलाधिक्यं शतान्तमाभासविस्तृतम् १७

विस्ताराद् द्विगुणोत्सेधं सामान्यमिति कथ्यते
द्विगुणात्पादमाधिक्यमर्धाधिकमथापि वा १८

तदुत्सेधं नवांशं स्यात्पञ्चाशद् द्वारविस्तृतम्

आयादिकर्मषड्वर्गप्रवाहं वक्ष्यतेऽधुना १९

जातिद्वारोदये सर्वेचायादिसंग्रहं भवेत्
छन्दादीनां तु सर्वेषां तारे चायादिसंग्रहम् २०

वृद्धिहान्यादिसर्वेषां प्रासादस्योक्तवद् भवेत्
कन्यसे कन्यसा मानं मध्यमे मध्यमं तथा २१

मुख्ये मुख्यं तु मानं स्यात्कुर्याद् द्वारं शुभावहम्
हीनाधिकमानं चेत् श्रेष्ठकन्यसमानकम् २२

तद्द्वयोर्मध्यमं चोक्तं मध्यमे तद्द्वयं तु वा
सर्वेषामपि वर्णानां सर्वसंपद्विनाशनम् २३

शान्तिकादि यथाहर्म्यं द्वारं तच्छान्तिकादिकम्
कुर्यादारोग्यमायुष्यं भुक्तिमुक्तिफलप्रदम् २४

विपरीते नृपादीनां विपत्यं नित्यमावहेत्
द्वारमानमिति प्रोक्तं पादादीन्वक्ष्यतेऽधुना २५

शुद्धद्वारस्य परितः पादोदर्कद्वारयुतम्
भौमान्तं द्यातपादं वा चोत्तरान्तमथापि वा २६

द्वारयोगस्य मूलाग्रे छिद्रं कुर्याद् द्वयोर्द्वयम्
पट्टिकाद्वयमूलाग्रे शिखायुक्ताद्वारं योजयेत् २७

दारुद्वारमिति प्रोक्तं शिलाभग्नं तु योजयेत्
कुड्यद्वारार्कभागं स्यात्तद्वाह्ये पञ्चभागिकम् २८

अन्तःसप्तांशयोर्मध्ये द्वारयोगस्य मध्यमे
तदंश त्रिचतुर्भागं पञ्चषट्सप्तभागिकम् २९

अष्टांशं योगविस्तारं तदर्धं बहलं भवेत्
विस्तारस्य समं वापि त्रिपादं वाथ कल्पयेत्  ३०

पट्टिकोच्चायतं तारं घनं द्वारस्य योग्यकम्
द्वारयोगद्वयं चैव पट्टिकाद्वयमेव वा  ३१

चतुरश्रं समाश्रं वा भूषणालङ्कृतं तु वा
योगादिघनमानं च कृत्वा बाह्ये नवांशकम्  ३२

कुड्यान्ते पट्टबन्धांशं तस्माद् द्व्यंशेन बन्धनम्
एकेन कम्पपट्टं स्याद्बन्धभागेन योजयेत्  ३३

अथवांशेन पट्टं स्यात्पद्ममध्येऽर्धभागिकम्
अर्धेन कम्पसंयुक्तं कर्णबन्धांशमीरितम्  ३४

कम्पमर्धेन संयुक्तं चान्त्यं चेदलं भवेत्
एकांशं बाह्यपट्टं स्याद् द्व्यंशं भुवाङ्गकम्  ३५

पद्म द्वयांशकं चैव कम्पमेकेन कारयेत्
मध्यभुवाङ्गं युग्मांशं बाह्यपद्मं द्वयांशकम्  ३६

पट्टिकायोगबाह्ये तु द्वारांशं परितोऽन्वितम्
अथवा भूषणं तु स्यात्कुर्यात्त्वथ पट्टिका  ३७

द्वारयोगविशाले तु कर्णं वा द्विगुणं तु वा
योगमूलाग्रतुङ्गं स्यात् अग्रे विन्यास कुड्मलम्  ३८

सर्वालङ्कारसंयुक्तं पत्रवल्ल्यादिभूषितम्
द्वारोर्ध्वे मध्यदेशे तु अधिराजोपरि न्यसेत्  ३९

तत्पार्श्वे चाच्चरादन्त द्विपयुग्मं तु कारयेत्

दक्षिणे तु गणेशं स्यद्वामभागे सरस्वतीम् ४०

छत्रचामरसंयुक्तं तोरणादिविभूषितम्
तस्याधो पूर्णकुम्भाद्यैः दर्पणाद्यैर्विभूषितम् ४१

कुर्यादेवं तु रक्षार्थं सम्पदामास्पदं सदा
अथवा द्वारयोगस्य विशालं वक्ष्यतेऽधुना ४२

त्रिचतुष्पञ्चषरामात्रं तस्मात्तु द्व्यङ्गुलाधिकम्
पञ्चविंशाङ्गुलान्तश्च चतुर्विंशाङ्गुलान्तकम् ४३

एकविंशाङ्गुलान्तं स्याद् द्वाविंशाङ्गुलन्तकम्
त्रयोविंशाङ्गुलान्तं स्याद् द्वारयोगस्य विस्तृतम् ४४

अथवा हस्तमारभ्य त्रित्र्यङ्गुलविवर्धनात्
तत्त्रिहस्तावसानं स्यात्कन्यसादुत्तमान्तकम् ४५

दारुके तु शिला वापि कुर्याद् द्वारं विचक्षणः
क्षुद्रविस्तार सर्वेषां द्वारयोगविशालकम् ४६

द्वारमानं तु सर्वेषां वर्णानां हर्म्यके न्यसेत्
देवानां हर्म्यके कुर्यात्तत्र दोषो न विद्यते ४७

द्वारभूषणसार्धं स्याद् द्वारमानेन कल्पयेत्
तद्विशालायततुल्यं कवाटायामविस्तृतम् ४८

एकद्वित्रिचतुष्पञ्च कवाटस्य घनं भवेत्
एकं वा द्विकवाटं वा युक्त्या तत्रैव योजयेत् ४९

युग्मदारु न योग्यं स्यादयुग्मं चैव योजयेत्
युगलं तत्कवाटं स्याद् दारुयुग्मं प्रयोजयेत् ५०

दक्षिणस्य कवाटं तु विशालाधिकमायतम्
एकद्वित्र्यङ्गुलं वामकवाटं स्याद् द्विहस्तकम्  ५१

तत्समग्रं शिख तारं तद्द्वयं तस्य तुङ्गकम्
वृत्ताकारं शिखा सर्वा मूलोद्भवरुचा भवेत्  ५२

मध्ये तु क्षेपणं वामे शुद्धद्वारावसानकम्
त्रिचतुष्पञ्चषरामात्रं मध्ये क्षेपणविस्तृतम्  ५३

युग्मवेदकुमाराष्टपङ्क्त्यंशं द्वादशांशकम्
कुर्यात्कवाटदीर्घे क्षेपणं विस्तृतोधिकम्  ५४

त्रिचतुष्पञ्चाङ्गुलं वा तस्य विस्तार मानयेत्
शुद्धद्वारसमायामे विस्तारे परिकल्पयेत्  ५५

आयदण्ड त्रिधापञ्चसप्तकाकृतमेव च
दीर्घं ह्रस्वं च सर्वेषामिदं युक्त्या प्रयोजयेत्  ५६

सन्दिमध्ये तु वेदाश्रं पट्टिकानां तु पादयुक्
पद्मपत्रादि सर्वेषां युक्त्या च समलङ्कृतम्  ५७

प्राकारे च महाद्वारं क्षुद्रद्वारं कवाटके
सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्  ५८

पञ्चविंशाङ्गुलायामं त्रिचतुर्थाङ्गुलं ततिः
तदर्धं तद्घनं कुर्यात्त्रिचतुष्पञ्चाङ्गुलोन्नतम्  ५९

कीलभाजनमित्युक्तं कीलनं तु प्रवक्ष्यते
भाजनायामवत्कुर्यात्कीलायामं यथोक्तवत्  ६०

एकद्वित्र्यङ्गुलं वापि कीलतारं यथेष्टकम्

कवाटयुक्तं तथैकं चेद् द्वारदक्षिणपार्श्वके ६१

द्वारपादे पदे वापि योजयेत्कीलभाजनम्
पर्वयुक्कीलमूलाग्रे भाजने छिद्रं योजयेत् ६२

अयस्कीलं च पट्टं च पद्मपत्रादिशोभितम्
कुर्यात्तत्तत्कवाटानां युक्त्या तत्कीलशूलके ६३

यथाबलं यथाशोभं तथा युञ्जीत बुद्धिमान्
द्वारोर्ध्वे भूपरार्धं च कुर्यात्तच्छिद्रपट्टिका ६४

कवाटस्योर्ध्वशूलं च तत्तच्छिद्रे प्रवेशयेत्
अन्तरद्वारं तु कवाटं चैव योजयेत् ६५

कीलं च भाजनं चैव कवाटयुग्मं तु योजयेत्
कवाटायामविस्तारे मध्ये छिद्रं तु युग्मतः ६६

छिद्रयोर्मध्यं तस्योर्ध्वतः कीलं तदन्योऽन्यं निवेशयेत्
एवं युक्त्या कवाटं च सव्यासव्यं तु योजयेत् ६७

देवानां मूलहर्म्ये तु कवाटाधिक्यवामके
सर्वेषामालये चान्तं यथेष्टं स्थापयेत्सुधीः ६८

उक्तवत्स्थापयेद् द्वारं स्थपतिः स्थापकैः सह
देवानां हर्म्यके सर्वं मध्यद्वारं तु जालकम् ६९

द्विजातीनां च वर्णानां गृहे वातायनं बुधः
मध्यस्तम्भं यथायुक्त्याकारं यत्तु यथेष्टकम् ७०

देवानां भूसुरादीनां वर्णानां च गृहे गृहे
द्वारपट्टिकाया मानं लक्षणं वक्ष्यतेऽधुना ७१

द्वारस्य पुरतो देशे द्वारमध्ये सभद्रकम्
एकभाग द्विभागं वा निर्गमं पट्टिका भवेत्  ७२

एकत्रिपञ्चभागेन पट्टिकाविस्तृतं भवेत्
विस्तारं द्विगुणं वापि पादोनं द्विगुणं तु वा  ७३

विस्तारार्धाधिकं वापि तद्द्वारं पट्टिकोदयम्
तुङ्गे चाष्टांशकं कृत्वा चैकभागं मसूरकम्  ७४

तद्द्वयं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम्
तत्समं ग्रीवतुङ्गं स्यात् शिरतुङ्गं द्वयांशकम्  ७५

तदर्धं स्तूपितुङ्गं स्यात् शालाकारं शिरो भवेत्
अथवा नासिकाकारं कुर्याद् भित्ति सहैव च  ७६

षड्वर्गमिति प्रोक्तं च चतुर्वर्गमिहोच्यते
तुङ्गे षडंशके कृत्वा एका द्वयेकवेदिका  ७७

पादं शिरः शिखा प्रोक्तं शेषं प्रागुक्तवन्नयेत्
सर्वालङ्कारसंयुक्तमेवमुक्तं पुरातनैः  ७८

अज्ञानाद् विपरीतं चेत्सर्वसम्पद्विनाशनम्  ७९

एवं द्वारं तैतलानां द्विजानाम्
भूपानां चैव वैश्यकानां परेषाम्
मानं यत्तच्चोक्तवद्धर्म्यदेशे
कुर्यात्सर्वसम्पदास्पदं स्यात्  ८०

इति मानसारे वास्तुशास्त्रे द्वारमानविधानं नाम एकोनचत्वारिंशोऽध्यायः

## राजहर्म्यविधानम्

एकाशीतिक्रमाधिक्यं शतदण्डं समारभेत्  १

सैकद्विशतदराडान्तं द्विद्विदराडविवर्धनात्
सर्वभूपस्य हर्म्ये तु कन्यसादि त्रयं त्रयम्  २

तद्विस्तारमिति प्रोक्तमायाममिति वद्यते
विस्तारात्पादमाधिक्यमर्धाधिक्यमथापिवा  ३

त्रिपादाधिक्यमेवं वा तत्समाधिक्यमेव वा
पञ्चाधिकचतुःषष्टिशतदराडं समारभेत्  ४

एकाशीतिशतान्तं स्याद् द्विद्विदराडेन वर्धनात्
एवं तु चोत्तमान्तं स्यात्कन्यसादि त्रयं त्रयम्  ५

महाराजस्य हर्म्ये तु विशालं परिकीर्तितम्
विस्तारादायते सर्वे यथा प्रागुक्तवन्नयेत्  ६

त्रयाधिक्यं च पञ्चांशं शतदराडं समारभेत्
नन्दषष्टाधिकं दराडं शतदराडावसानकम्  ७

कन्यसा नवधा प्रोक्तं द्विद्विदराडेन वर्धनात्
नरेन्द्रस्यालये सर्वे विस्तारं परिकीर्तितम्  ८

नवत्रिंशाधिकं दराडं शतदराडं समारभेत्
पञ्चाशच्छतपर्यन्तं कन्यसादि त्रयं त्रयम्  ९

पार्ष्णिकस्य तु हर्म्यस्य विस्तारं परिकीर्तितम्
पूर्ववञ्चायते सर्वे विस्तारं वर्धयेत्क्रमात्  १०

त्रयोविंशच्छतमारभ्य द्विद्विदराडेन वर्धनात्
नवत्रिंशच्छतान्तं स्यात् पूर्ववन्नवभेदकम्  ११

हर्म्यं पट्टधरोत्सेधे विस्तारायाम पूर्ववत्

ससप्तशतदण्डादौ द्विद्विदण्डेन वर्धनात् १२

त्रयोविंशच्छतान्तं स्यात्कन्यसादि त्रयं त्रयम्
मण्डलेशालयतारं दीर्घ प्रागुक्तवन्नयेत् १३

एकाधिक्यं तु नवतिदण्डं चैव समारभेत्
हस्ताधिकशतान्तं च विस्तारं नवधा भवेत् १४

एवं तु पट्टभाक् हर्म्ये चायामं पूर्ववद् भवेत्
सत्रिर्नवाष्टदण्डादौ द्विद्विदण्डेन वर्धनात् १५

एकाधिकनवत्यन्तं नवधा चोक्तमानकम्
प्रहारकस्य हर्म्ये तु कन्यसादि विशालकम् १६

आयामं पूर्ववत्कुर्याद्वर्धयेद् द्विगुणान्तकम्
नवाधिकं तु पञ्चाशद् दण्डं चैव समारभेत् १७

सपञ्चसप्ततिश्चान्तं द्विद्विदण्डेन वर्धनात्
एवं तु नवधा प्रोक्तं कन्यसादि त्रयं त्रयम् १८

अस्त्रग्राहस्य हर्म्ये तु चैवायामं तु पूर्ववत्
एकादि सप्तसालान्तं चक्रवर्तिनो हर्म्यके १९

षट्प्राकारं तु संकल्प चाधिराजस्य हर्म्यके
एकादिपञ्चसालान्तं नरेन्द्रस्यापि हर्म्यके २०

चतुःशालावसानान्तं पार्ष्णिकस्य तु हर्म्यके
एकादिकं त्रिसालान्तं पट्टधरादिभिस्त्रिभिः २१

प्राहारकास्त्रग्राहाभ्यां कुड्यमेकं द्वयान्तकम्
अधः सालं तथैकांशं द्वितीयं च त्रयांशकम् २२

तृतीयं सप्तभागं स्यात्सैकार्कांशं त्वरीयकम्
पञ्चमं चैकविंशांशमेकत्रिंशांशं षष्ठकम्  २३

सप्तमं च त्रयाधिक्यं चत्वारिंशाशमेव वा
कुर्यादेवं तु विस्तारे तत्तदायामं पूर्ववत्  २४

पूर्वोक्तदण्डमानं चेच्चान्तःसाले प्रकल्पयेत्
तस्मात्तु चोक्तवद् वृद्ध्या सप्तसालावसानकम्  २५

तन्माने तु सालानां विनाभित्ति सभित्तिकम्
अन्तर्भित्तिस्तु चैवम् स्याद्बहिर्भित्तिस्तु सर्वदा  २६

कुर्यात्पश्चात्तु भित्तिश्चेत् मानम् वक्ष्ये यथाक्रमम्
उक्तप्रमाणबाह्ये तु कुड्यं कुर्यात्समन्ततः  २७

एकदण्डं समारभ्य सार्धदण्डेन वर्धनात्
एकसालादि सप्तान्तं चतुर्दण्डावसानकम्  २८

भित्तिविस्तारमित्युक्तं केचिद्धस्तविवर्धनात्
सार्धद्विदण्डपर्यन्तं सप्तमान्तं विशालकम्  २९

विस्तारं तु समुत्सेधं तत्पादाधिकमेव वा
अर्धाधिकमथोत्सेधं पादोनद्विगुणं तु वा  ३०

विस्तारं द्विगुणं वापि बाह्ये वप्रं तथोन्नतम्
मूलतारे तु सप्तसाष्टांशैकैक हीनकम्  ३१

भित्तिगृहस्य विशालं स्यान्मूलाग्रान्तं क्षयं क्रमात्
प्राकारशीर्षसर्वं हस्तेनदन्तरोन्नतम्  ३२

वृत्तं वा चतुरश्रं वा वक्त्राकारं तथैव च

षरामात्रम् चाष्टमात्रम् च द्वादशाङ्गुलमेव च  ३३

कुर्यादन्तान्तरं शेषं शेषं युक्त्या प्रयोजयेत्
शिलाचेष्टकयोर्वापि मृरामयैर्भित्तिकल्पनम्  ३४

एकं वोदकभित्तिं वा कुडयान्तं मराडपाकारकम्
एवं कल्पं तु कामार्थमनुचरादिवासकम्  ३५

एवं तु गृहमानं स्याद् विस्तारं चाथ वद्त्यते
सालानामपि सर्वेषां परमशाधिकपदं न्यसेत्  ३६

मध्ये ब्रह्मपदं त्यक्त्वा परितस्तु नृपादिभिः
कुर्यात्सर्वत्र सर्वेषामभीष्टादिजनालयम्  ३७

इन्द्रे च वारुणे वापि सार्वभौमस्य हर्म्यकम्
अथवार्यपदे चैव चतुर्दित्तु विदिद्त्वपि  ३८

यमे विवस्वते चापि चाधिराजस्य हर्म्यकम्
भूधरे च कुबेरे च नरेन्द्रस्यालयं भवेत्  ३९

इन्द्रे इन्द्रजयस्यांशे पार्ष्णिकस्य गृहं भवेत्
अथवा पुष्पदन्तस्य पदे वासं प्रकल्पयेत्  ४०

रुद्रे रुद्रजये वापि चासुरस्य पदेऽथवा
पट्टधृगालयं कुर्याच्छोषकस्य पदेऽपि वा  ४१

गृहद्तते च सवित्रे सावित्रस्य पदेऽपि वा
मराडलेशस्य हर्म्यं स्यात्पट्टभाक् चालयं तु वा  ४२

आपवत् सापवत्सस्य मृगे वा मुख्यकेऽपि वा
प्राहारकास्त्रग्राहयोश्चालयं परिकल्पयेत्  ४३

सर्वेषामपि भूपानां स्वनिर्यानि चतुष्टये
गृहमेवं तु शालायां चोक्तमेवं पुरातनैः ४४

सर्वेषां मूलहर्म्यानां पूर्वद्वारं प्रकल्पयेत्
तत्तन्मूलस्य हर्म्यस्य दक्षिणे चोत्तरेऽपि वा ४५

नैर्ऋत्ये वायवे चापि तत्तन्महिषिकागृहम्
मूलहर्म्यस्य यामे तु साभिषेकादिमण्डपम् ४६

सुग्रीवे पुष्पदन्ते वा चायुधस्यालयं भवेत्
असुरे शोषके वापि वस्तुनिक्षेपमण्डपम् ४७

वरुणे नैर्ऋते वापि मुहुर्वस्त्रधनालयम्
सोमे च मुख्यके वापि रत्नहेमादिकालयम् ४८

गन्धर्वे भृङ्गराजे वा भूषणालयमेव च
दक्षिणे नैर्ऋते वापि भोजनार्थं तु मण्डपम् ४९

तथेशानपदे वापि पचनालयमेव च
अनिले चाग्निके वापि पुष्करिण्या च कल्पयेत् ५०

महिष्यावाससौम्ये कञ्चुकीरा आलयं भवेत्
वायव्येन धनाङ्गांशे पुष्पमण्डपं योजयेत् ५१

अदिते चोदिते वापि मज्ञनालयमेव च
तत्तद्बाह्यप्रदेशे तु कायशुद्ध्यर्थमण्डपम् ५२

वायव्ये नैर्ऋते वापि सूतिकामण्डपं भवेत्
पूत्रे वा वितथे चैव दासदास्यालयं भवेत् ५३

गृहक्षतपदे चैव शयनालयमेव च

मुख्ये वा अथ भल्लाटे विलासिनीनां चालयम् ५४

दौवारिकपदे चैव राजकन्यकरालयम्
द्वारस्य वामपार्श्वे तु गजाश्वादिकालयम् ५५

द्वारस्य दक्षिणे पार्श्वे रक्षकावासमेव च
सत्यके चान्तरिक्षे च क्षौरकालयमेव च ५६

भृशे यानालयं कुर्याच्छे प्रागुक्तवद् भवेत्
अन्तःसालमिति प्रोक्तं बाह्यशालमिहोच्यते ५७

वरुणे युवराजस्य चालयं तत्प्रकल्पयेत्
तत्पूर्वे चोत्तरे वापि तस्यैवानुचरालयम् ५८

याम्ये च सोमदिग् वापि वायव्ये वाथ नैर्ऋते
आस्थानमण्डपं कुर्यात्पुष्करिण्यां च वायवे ५९

नागस्य वामके याम्ये कुर्यादारामदेशकम्
पुष्पोद्यानं ततः कुर्यान्मुख्य भल्लाटकेऽपि च ६०

नृत्तागारं ततः कुर्यान्नानानृत्ताङ्गनानि च
आत्मार्थं यजमानार्थं देवताहर्म्यमीशके ६१

द्वितीये हर्म्ये याम्ये तु पुरोहितालयमेव च
रोगे वा मुख्यके वापि स्वामिकारालयमेव च ६२

द्वितीयः सालबाह्ये तु द्वारं तस्य तु दक्षिणे
महाशस्त्रालयं कुर्याद् भैरवं तु बहिर्बहिः ६३

ईशे तु धेनुशालाश्च द्वारं कुर्यान्महेन्द्रके
पार्श्वके मेषशालाश्च सत्यके वानरालयम् ६४

सोमादीशानपर्यन्तं वाजिशाला प्रकल्पयेत्
याम्यादिपावकान्तं स्याद् गजशालां प्रकल्पयेत् ६५

तस्मात्तु नैर्ऋत्यान्तं कुत्कुटालयमेव च
वायुकोणादिमुख्यान्तं मृगाणां हरिणालयम् ६६

सुग्रीवे पुष्पदन्ते च कल्पयेन्मल्लमण्डपम्
उत्तरे बाह्यके वापि चोत्तरे वायवे तथा ६७

तद्देशे चोर्ध्ववेदिः स्याद्विपदार्थाङ्कणान्वितम्
परितः शूलकम्पं स्याद् द्वारं तद्दक्षिणोत्तरे ६८

तत्तत्पश्चिमदेशे तु युद्धालोकनमण्डपम्
आरुह्यावलोकनार्थं कुर्याद्युक्त्या च मण्डपम् ६९

वरुणे पुष्पदन्ते वा मेषयुद्धार्थमण्डपम्
मृगे च भृङ्गराजे वा कुक्कुटायुद्धमण्डपम् ७०

मण्डपाङ्गणमध्यं तु परितो मेखलैर्युतम्
एकद्वित्रिचतुष्पञ्चहस्तमूलाग्रविस्तृतम् ७१

सार्धद्विहस्तनिम्नं स्यात्सार्धार्धपरिघान्वितम्
द्वौवारिकपदे चैव मयूरालयमेव च ७२

द्वारस्य दक्षिणे बाह्ये व्याघ्रकालयमेव च
तद्बाह्ये तत्र देवादीन् किरातालयमेव च ७३

तृतीये वितथे तस्यांशे रहस्यावासमण्डपम्
चतुर्थे यमदिग्भागे सन्धिविग्रहमण्डपम् ७४

षट्सप्तावरणे वापि दक्षिणे पश्चिमेऽपि च

उत्तरे पूर्वके वापि गजमश्वादिवाहनम्  ७५

ग्रारुह्यालोकनार्थं च मराडपं परिकल्पयेत्
ईशे वा वितथे चैव रङ्गमराडपमेव च  ७६

भृशे वा सान्तरीत्ते वा कारागृहमेव च
प्राकारस्य चतुर्दित्तु द्वारगोपुरकान्वितम्  ७७

शेषं प्रागुक्तवत्कुर्यान्नृपचित्तवशात्तु यत्
ग्रनुक्तं मराडपं युक्त्या कुर्यादापोडशान्वितम्  ७८

ब्रह्मांशे ब्रह्मपीठं स्यात्कुर्यादावृतमराडपम्  ७९

हस्तेन भूतमुनिरन्ध्रेरा करेरा कृत्वा
विस्तारभित्तिं चतुरश्रं त्रियैकवेन
ग्रामस्य मध्यमथ भूपतिमध्यहर्म्ये
नित्यं त्रिकाल इव पूजित ब्रह्मपीठम्  ८०

इति मानसारे वास्तुशास्त्रे राजहर्म्यविधानं नाम चत्वारिंशोऽध्यायः

## राजाङ्गविधानम्

भूपतीनां च सर्वेषां सर्वाङ्गं वद्त्यतेऽधुना
ग्रधीत्याम्नायचतुरं तत्षडङ्गं पदक्रमात्  १

शस्त्रास्त्रमन्त्रसर्वादीन्सर्वशास्त्राब्धिपारगः
षड्दर्शनं समं चैव दीत्तया च प्रवर्तकः  २

धीरोद्धतो धीरललितो धीरोदात्तस्तथैव च
रम्यानुपाज्यराज्यात् स्वयं ज्ञात्वा स्वयन्त्रितः  ३

शूरः प्राज्ञश्च कोशार्थं धर्मज्ञो नीतिपारगः
समस्तभूमृतां चैते गुणाः प्रोक्ता विशेषतः  ४

एतानि गुणरत्नानि राज्ञो यस्य च सन्ति वै
शतपञ्चतुरङ्गानि पञ्चकुञ्जरमेव च ५

लक्षार्धतन्त्राधिपतिः शतपञ्चवराङ्गनाः
एका स्यात्पट्टमहिषी अस्त्रग्राहो प्रकीर्तिता ६

षट्शतं मरीशकोटयानि निषदन्ताबलमेव च
लक्षतन्त्राधिपतिश्च सप्ताशतवराङ्गनाः ७

स्यातां महिष्यो द्वितीय प्राहारक इति स्मृतम्
शताष्टहयरत्नानि सप्तद्विरदमेव च ८

सार्धलक्षतन्त्रं स्यात्त्रि सहस्रं वराङ्गनाः
महिषीत्रयमेवं च पट्टभाक् इति स्मृतम् ९

सहस्राश्वं दशभुजं पञ्चाशतसहस्रकम्
वराङ्गनाभिरासेव्यो महिष्यश्च चतुष्टयम् १०

लक्षद्वयं च तन्त्रं स्यान्मण्डलेशस्य भूपतेः
पञ्चाशतसहस्राश्वाः द्वादशं कुञ्जरं तथा ११

लक्षद्वयं च तन्त्रं स्याद् द्विसहस्रवराङ्गनाः
महिष्यः पञ्च पट्टाभाः पट्टधृक् भूपतिर्विदुः १२

द्विशताश्वहयाः प्रोक्ताः पञ्चादशगजास्तथ
चतुर्लक्षं च तन्त्रं स्यात्त्रिसहस्रवराङ्गनाः १३

षण्महिष्यस्तथा प्रोक्ताः पार्ष्णिकाख्यस्य भूपतेः
पार्ष्णिकः स्यात्पट्टधरो मण्डलेशश्च पट्टभाक् १४

एभ्यो नवद्विपादाब्ज तत्तत्तन्त्राधिपास्तथा

अयुतादिबहूनश्वाशतकुञ्जरमेव च १५

तन्त्रं च शतलक्षं स्यान्महिष्यश्च दशस्तथा
लक्षार्धं वा खनिता चैवमुक्तं नरेन्द्रके १६

नरेन्द्रे च द्विपादाब्जश्चैककोटितुरङ्गवान्
अयुतं द्विरदं प्रोक्तं दशकोटिश्च तन्त्रकम् १७

दशलक्षं मरण्यं च महिष्यश्च सहस्रकम्
अधिराजाख्यनृपतेश्चोक्ततन्त्रं पुरातनैः १८

अधः वा पट्टमहिषे चेन्द्रस्य सदृशः प्रभुः
समभूमिपपालेभ्यो नमस्कृत्य पदाम्बुजम् १९

दन्ताबलतुरङ्गाश्च तन्द्रादि च वराङ्गनाः
अर्बुदं न्यर्बुदं चैव महाशङ्कं च पद्मकम् २०

गणिकान्तं परार्धाख्यं च सर्वे तन्त्राः प्रकीर्तिताः
सप्तद्विमेखलाभूमि चैकच्छत्रेण पालकम् २१

तस्मात्तु सार्वभूमाय चक्रवर्तिरिति स्मृतम् २२

आम्नायांश्चतुरोऽधीत्य विधिवत्षड्दर्शनानां समम्
समशास्त्रादिसर्वशास्त्रकुशलः स्थिरो धर्मवान्
धीरोदात्तगुणो महावितरणैश्वर्यधनाढ्यः प्रभुः
नीतिज्ञो जनरक्षको जनपदार्थानुपार्ज्यार्थवान् २३

सर्वज्ञो नरपालको शक्रपदाम्भोजद्विरेफः सुरैः
शान्तो कीर्तिपरायणश्च रसिको गन्धर्वशास्त्राधिपः
एते सर्वगुणाः समस्तनृपतेः साम्यादि चोक्तं बुधैः
एषां चोक्तगुणानि नृपतेः सक्षुद्रभूभृताम् २४

इति मानसारे वास्तुशास्त्रे राजाङ्गविधानं नाम एकचत्वारिंशोऽध्यायः

राजलक्षणम्

अथ वक्ष्ये विशेषेण भूपानां लक्षणं परम्
चक्रवर्ती महाराजो नरेन्द्रः पार्ष्णिकस्तथा १

अथ पट्टधरश्चापि मण्डलेशस्तथैव च
अथैव पट्टभाक् चैव ततः प्राहारकस्तथा २

अस्त्रग्राहस्ततश्चैते नव भूपा यथाक्रमात्
चतुःसागरपर्यन्तां महीं स्वीकृत्य बलवान् ३

जित्वा द्वारस्य पुरतो बन्धमाबध्य संस्थितः
न्यायान्यायविचारार्थं किञ्चिन्मध्यप्रतापवान् ४

कीर्तिमान् श्रीमतां श्रेष्ठः कृपया लोकरक्षकः
सर्वावनीन्द्रवन्द्योऽसौ चक्रवर्तीति कीर्तितः ५

शक्तित्रयेदक्षिणीं स्वीकृत्य सप्तराज्यस्य चेश्वरः
षड्गुणैः षड्बलैर्युक्तो नीतिज्ञः सूर्यवंशवान् ६

चन्द्रवंशोदितो वाथ चाधिराज इति स्मृतः
शक्तित्रयेण त्रितयराज्यं स्वीकृत्य दुर्वलान् ७

पार्ष्णिकः पट्टधरो मण्डलेशोऽपि पट्टभाक्
एतैर्वन्द्यपदद्वन्द्वो नीतिनेत्रः अरिन्दमः ८

सुकृती चोत्सवरतो नरेन्द्रः परिकीर्तितः
एकराज्यस्याधिपतिश्चैकदुर्गमधिष्ठितः ९

षड्बलाधिपतिर्ज्ञानी कालज्ञोऽथ प्रयोगवान्

एवं परेभ्यश्चाभिहितो पार्ष्णिक इति स्मृतः १०

चतुष्टयगुणाधीशश्चार्धराज्यस्य चेश्वरः
एकदुर्गस्याधिपतिः स्वाम्यमात्यैरपीश्वरः ११

मण्डलाधिपतिः पट्टभाक्भौमेऽपि वर्जितम्
एवं गुणविशिष्टोऽसौ प्रोक्तः पट्टधराख्यया १२

अर्धमण्डलस्याधिपतिरेकमण्डलसंश्रितः
पट्टभागादिवन्द्योऽसौ मण्डलेश इति स्मृतः १३

मण्डलाधिपतिः श्रीमानेकदुर्गमधिष्ठितः
सज्जनानां धनाढ्यानामधिपः पट्टभाक् स्मृतः १४

ब्राह्मणक्षत्रियवैश्यशूद्रैः एककुलोद्भवः
एकदुर्गस्याधिपतिर्नानाजनपदाधिपः १५

सज्जनाधिपतिः सर्वरक्षादिनकरेश्वरः
एतल्लक्षणयुक्तोऽसौ राजा प्राहारकः स्मृतः १६

नानाजनपदाधीशो नगरीनायकः प्रभुः
एकदुर्गमधिष्ठाप्य नानाजनपदैकराट् १७

आदाय दुर्बलानां तु सोऽस्त्रग्राही प्रकीर्तितः
चक्रवर्ती अधिराजश्च नरेन्द्रश्चाविचारकः १८

पार्ष्णिकश्च शिरस्त्रं स्यात्पट्टधृक् पट्टबन्धनम्
मण्डलेशस्य पट्टं स्यात्पट्टभाक् पट्टबन्धनम् १९

प्राहारकश्चास्त्रग्राही चोभौ मालाधरौ स्मृतौ
चक्रवर्ती महाराजो नरेन्द्रश्चैव मौलिनः २०

सिंहासन सनिर्यूहं कल्पवृक्षसतोरणम्
पार्ष्णिकश्च पट्टधरः पट्टभाक् तृतीयस्य तु २१

विना कल्पतरोः सर्वमुक्तं सिंहासनादिकम्
प्राहारकस्य नृपतेः सिंहासनमिति स्मृतम् २२

अस्त्रग्राहस्य भूपस्य केवलं चासनं भवेत्
चक्रवर्त्यादि निर्बाधं भूपालाद्योर्विशेषतः २३

चामरे धवलच्छत्रं बहुमालाधर स्मृतम्
आसनानां तु सर्वेषां षट्पादं परिकीर्तितम् २४

चक्रवर्ती विशेषेण नवमालाधरः सुखी
चामरैकं विनाच्छत्रं चतुष्पादसमन्वितम् २५

क्षुद्रस्य परिपालेभ्यो मध्यश्रेष्ठस्य योग्यकम्
बहुमाला च संप्रोक्तमन्यैः क्षुद्रैस्तु वर्धिते २६

वृत्ता सञ्जननिर्यूहं मुक्ता च स्रग्विभूषणम्
क्षुद्रश्रेष्ठस्य नृपतेश्चोभे जनपदे स्मृतौ २७

अन्येभ्यो क्षुद्रराजेभ्यस्त्वेकजानपदं परम्
एते तु क्षुद्रभूपालो भूपालानां तु सेवकाः २८

चक्रवर्त्याख्यराजोऽसौ दुर्जनानां तु नाशकः
कृपालुः कृपया लोकं संरक्षति मुहुर्मुहुः २९

अथ दशकैकांशं करं स्वीकृत्य तिष्ठति
महाराजः षडंशे तु करं चैकं परिग्रहेत् ३०

दुर्जनानां जनं ज्ञात्वा दिशि धर्मस्य पालकाः

नरेन्द्रस्य तु पञ्चांशं करं स्वीकृत्य राज्यति  ३१

अर्थिभ्योऽतिदरिद्रेभ्यो दाता धनवतां गृह्णीयात्
अथ पार्ष्णिकाख्यनृपतिः करमद्य प्रतिगृहीयात्  ३२

पट्टधरस्य समये चोक्तवत् त्रिः प्रतिगृहीत्
ददाति विदुषां भूयः अन्येभ्यः किञ्चिदेव हि  ३३

पट्टभाक् राज्यं तत्सर्वं करं स्वीकृत्य तिष्ठति
देवेभ्यो ब्राह्मणेभ्योऽपि नित्य मान्यं करोत्यसौ  ३४

प्रहारकस्य देशस्य करं स्वीकृत्य तिष्ठति
नीतिशास्त्रोक्तवन्न्यायमन्यायं करोत्यपि  ३५

धर्मज्ञश्चोपकारज्ञो वामभिः कर्मभिः दृढः
अस्त्रग्राहः स्वराज्यस्य न्यायाज्ञग्राह तत्करम्  ३६

यथापराधदण्डं च हिंसां नाभिकरोति च
तापसान् ब्राह्मणान्देवान् सदा पूजां करोत्यपि  ३७

एवं क्षुद्राश्च भूपालाः स्वे स्वे जनपदे करान्
स्वीकृत्य चक्रवर्त्यादिराजानां च करोत्यपि  ३८

इत्युक्तन्यायमार्गस्य भागं कुर्वन्ति ते नृपाः
अक्षत्रियास्तु ते सर्वे प्रोक्तं विद्वान् पुरातनैः  ३९

इतिविरचितमेवं भूपतीनां चरित्रम्
श्रुतिसकलपुराणैः सर्वशास्त्राय मानम्
परिपतति यदे तल्लक्षणं चार्थयुक्तम्
स तु निखिलविबुधेभ्यो वन्द्यपादारविन्दः  ४०

इति मानसारे वास्तुशास्त्रे राजलक्षणविधानं नाम द्विचत्वारिंशोऽध्यायः

## रथलक्षणम्

देवभूसुरभूपनामारोहार्थं तु योग्यकम्
रथमानं क्रमाद् वक्ष्ये लक्षणं विधिना सह १

चक्रं चैव रथाकारं रथमानं च भूषणम्
त्रिवितस्तिं समारभ्य षट्षडङ्गुलवर्धनात् २

पञ्चहस्तावसानं स्यात्पञ्चादशविशालकम्
वितस्तिद्वयमारभ्य वितस्त्येकेन वर्धनात् ३

सार्धवेदकरान्तं स्यात्पूर्ववत्संख्यया चेति
एवं तु चक्रविस्तारं देवभूसुरभूपतेः ४

अङ्गुलद्वयमारभ्य एकैकाङ्गुलवर्धनात्
सप्तादशाङ्गुलान्तं स्याद् घनं पञ्चादशस्तथा ५

चक्रं वृत्ताकृतिं कुर्याद्युक्त्याथ पट्ट योजितम्
विस्तारं च त्रिधा कृत्वा मध्ये कुक्ष्यंशकेन तु ६

तन्मध्ये तु त्रिमात्रादौ सप्तादशांङ्गुलान्तकम्
पञ्चादशं च विपुलं नाभिकुक्षस्य वेशनम् ७

छिद्रं वृत्ताकृतिं ह्येव वृत्ताश्रं वाथ कुक्षिकम्
त्रिमात्रं पूर्ववद्वृद्ध्या सप्ता दशाङ्गुलान्तकम् ८

पञ्चादशविधि प्रोक्तमेवं कुक्षिविनिर्गतम्
अन्तर्बहिश्च कुक्षिः स्यात्सर्वालङ्कारसंयुतम् ९

वितस्तित्रयमारभ्य षट्षडङ्गुलवर्धनात्
पञ्चहस्तावसानं स्यात्सशिखाक्षायतं तथा १०

शिखां विनायतं वापि चैकमेकादशायतम्
पञ्चाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्  ११

एकविंशाङ्गुलान्तं स्यान्नवधा चाक्षविस्तृतम्
सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्  १२

त्रयोविंशाङ्गुलान्तं स्याच्चाक्षोत्सेधं तु पूर्ववत्
शिखाश्च क्रतारं तुल्यं तारं युक्त्यायतं तथा  १३

शालजम्बूकसारं च सरलं वकुलार्जुनम्
मधुकं तिन्त्रिणी चैव वर्वरद्रुममेव च  १४

व्याघ्री च क्षीरिणी चैव खादिरं कृकरं शमी
एवं चक्रादिदारुभ्यां युक्त्या बलवशान्न्यसेत्  १५

दन्ततारे चतुष्पञ्चभागैकं शल्यविस्तृतम्
समं वाथ्यर्धमेवं वा द्वयं तिर्यग्गतायतम्  १६

दन्तधारसमाधिक्यं कीलायाममुदीरितम्
कुर्याद् दन्ताग्रके छिद्रं युक्त्या कीलं प्रयोजयेत्  १७

अक्षोपरि तथातारं मानं चाप्यथ वक्ष्यते
सार्धहस्तं समारभ्य षट्षडङ्गुलवर्धनात्  १८

पञ्चहस्तान्तविस्तारं भारं पञ्चादशं भवेत्
विस्तारद्विगुणान्तं च तत्पादांशेन वर्धनात्  १९

पुरं पृष्ठायतं ह्येवं नवमानमुदीरितम्
त्रिचतुष्पञ्चषट्सप्तसाष्टनन्ददशाङ्गुलम्  २०

एतत्तु भारयुक्तं स्यात्क्षुद्रे तु द्वयमेव च

मुखे पृष्ठे पट्टके स्यात्कुर्यादुक्तविशालवत् २१

सर्वेषां च रथाधारं दारुविस्तारमेव च
तत्पञ्चांशेनवृद्धिः स्याद् द्विगुणान्तं तथोदयम् २२

रथाधारोदये देशे चोपधारं प्रयोजयेत्
भारायामे चतुष्पञ्चषट्सप्तांशविभाजिते २३

एकैकांशविहीनं स्यात् शेषांशेनायतं तथा
रथाधारसमुत्सेधं विस्तारस्याधिकं तथा २४

पादमर्धं त्रिपादं च तत्समं चाधिकोदयम्
दारुतारसमं कुर्यात्सर्वालङ्कारसंयुतम् २५

तस्याधः कर्णनं कुर्यादक्षोत्सेधार्धमेव च
तत्तदेशे तु छिद्रं स्यादक्षभारे रथान्तकम् २६

छिद्रे प्रवेशयेत्कीलं युक्त्यायपट्टं योजितम्
उपाधाराग्रपृष्ठे तु पट्टिकान्तं प्रयोजयेत् २७

रथाधारोपरिदेशे चोपपीठं समं तथा
भारोत्सेधसमं वापि द्विगुणं त्रिगुणं तथा २८

सर्वालङ्कारसंयुक्तं चोपपीठोक्तवद् भवेत्
तदूर्ध्वे प्रस्तराकारमुत्तरादिक्रियान्वितम् २९

हरिकरिमकररूपैः पत्रचित्रादिसर्वैः
परिकरं तु युगानां नाटकैर्भूतयक्षैः
रसिकरफणिकास्ते तोरणैः क्षुद्रपादैः
कृतमथ करिकर्णैर्नासिकाभूषणाढ्यम् ३०

कुर्याद्युक्त्या च शोभार्थं युक्त्यास्त्वधो विना रथम्
रथाधारो पर्युक्तं च रथमानमिहोच्यते ३१

त्रिभिर्वेदवितस्त्यादौ षट्षडङ्गुलवर्धनात्
पञ्चसार्धकरं पञ्चहस्तान्तं विस्तृतं भवेत् ३२

ऊर्ध्वे चान्तस्थले च दशधा परिकीर्तितम्
तस्मादेकवितस्तयादौ षट्षडङ्गुलवर्धनात् ३३

सपादद्विकरान्तं स्यादष्टधा निर्गमं भवेत्
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टनवांशकम् ३४

एवं युक्त्या तलं कुर्याद् मूलादग्रावसानकम्
वितस्त्येकं समारभ्य त्र्यङ्गुलविवर्धनात् ३५

एकहस्तवसानं स्यात् एकादश शिखोन्नतम्
पञ्चदशाङ्गुलारभ्य त्र्यङ्गुलविवर्धनात् ३६

सप्तादशाङ्गुलान्तं स्यात्तृतीये तु शिखोन्नतम्
वितस्त्येकं समारभ्य पादाधिककरान्तकम् ३७

तृतीये पञ्चधोत्सेधं त्र्यङ्गुलविवर्धनात्
एकहस्तं समारभ्य त्रिवितस्त्यन्तमुच्चकम् ३८

चतुर्थे पञ्चधा प्रोक्तं पूर्ववद् वर्धयेत्क्रमात्
त्रिमात्राधिकहस्तादौ त्रयस्त्रिंशाङ्गुलान्तकम् ३९

कुर्यात्पञ्चविधं प्रोक्तं पञ्चधामतलोन्नतम्
पादाधिक्यं तु हस्तादौ सत्रिपादकरान्तकम् ४०

एवं तु षट्तलं प्रोक्तं पञ्चधा चोच्छ्रयं भवेत्

पादोनत्रिवितस्त्यादौ त्रित्र्यङ्गुलविवर्धनात् ४१

त्रिपादस्त्रिवितस्त्यान्तं सप्तान्ते पञ्चधोदयम्
त्रिवितस्ति समारभ्य त्रित्रिमात्रविवर्धनात् ४२

द्विहस्ताष्टतलोपञ्च पञ्चधायमिति स्मृतम्
सपादत्रिवितस्त्यादौ त्रित्रिमात्रविवर्धनात् ४३

पादयुगवितस्त्यन्तं नवतले शिरोदयम्
अधश्चैकवितस्त्यादि द्विद्व्यङ्गुलविवर्धनात् ४४

अष्टविंशाङ्गुलोत्सेधं चैकादिनवान्तकम्
वितस्त्येकं समारभ्य एकैकाङ्गुलवर्धनात् ४५

मूलादग्रावसानं स्याद् युक्त्या युग्मदशात् न्यसेत्
चतुर्विशाङ्गुलान्तं च पञ्चविंशाङ्गुलान्तकम् ४६

प्रत्येकं तु तलानां तु ऊर्ध्वभूमोधिकोन्नतम्
तलानामपि सर्वेषां कुट्टिमं तत्प्रकल्पयेत् ४७

तदधिष्ठानमाने तु चोक्त्मानेन पूर्वके
सोपपीथमधिष्ठानं केवलं वा मसूरकम् ४८

उपपीठस्य मानं तत्त्यक्त्वाधिष्ठानमेव च
यथाधिष्ठानगरये तु कुर्यात् गरयाधिकोन्नतम् ४९

सर्वेषाम् देवतारूपं कुर्यात्सर्वं विचद्मणः
रथाः सर्वे समाश्राः स्युर्भद्रयुक्तम् अथापि वा ५०

वितस्त्येकं समारभ्य त्रित्रिमात्रविवर्धनात्
त्रिवितस्त्यन्तं भद्राणां निर्गमं परिकल्पयेत् ५१

रथाधारे त्रिभागैकं चतुर्भागत्रिभागिकम्
पञ्चभागं त्रिभागं वा विस्तारस्यार्धमेव वा ५२

चतुर्दिक्षु चतुर्भद्रं स्यात् त्रिद्व्यैकहरिं तु वा
भद्रमध्ये तु भद्रं स्याच्चोक्तवत्कारयेत्सुधीः ५३

युक्त्या च भद्रं सर्वेषां नासिकायुक्तमेव वा
पद्मे च कुड्मलं युक्तं वक्त्रानां तु सुयोजयेत् ५४

पूर्वोक्तरथनामानि चाधुना प्रवक्ष्यते
नभस्वान्भद्रकं चैव भद्रं स्यात्प्रभञ्जनम् ५५

निवाताख्यं भद्रकं चैव पवनाख्यं च भद्रकम्
पृषद् चेन्द्रकं चैवमनिलाख्यं च भद्रकम् ५६

एतानि रथनामानि चाश्रयुक्तं रथे विदुः
नभस्वान्भद्रं वेदाश्रं प्रभञ्जनं षडश्रकम् ५७

वाताख्यं द्विभद्रं स्यात्पवनाख्यं त्रिभद्रकम्
पृषतं चेन्द्रकाख्यं स्याद् दशाश्रं भद्रसंयुतम् ५८

द्वादशं भद्रसंयुक्तमनिलाख्यमुदीरितम्
केचित्तु युक्तमेवं वा षट्टाश्रं रथमेव वा ५९

वृत्तं वा चायतं वृत्तं वा षट्टाश्रे चायतं तु वा
अष्टाश्रं वा षडश्रं वा द्व्यश्रवृत्तमथापि वा ६०

वेदाश्रं नागरं प्रोक्तं वस्वश्रं द्राविडं भवेत्
सुवृत्तं वेसरं प्रोक्तं रन्ध्रं स्यात्तु षडश्रकम् ६१

द्व्यश्रवृत्तं समाकारं आलिङ्गं परिकल्पयेत्

पूर्वोक्ताकारायामे तद्देवाख्यं विदुर्बुधाः ६२

पूर्वोक्तभद्रसर्वेषां नानादिनरथे भवेत्
रथताराङ्घ्रिकांशेन वर्धनं द्विगुणायतम् ६३

पूर्वोक्तक्षुद्रमानेन देवभूसुरभूपतेः
युद्धार्थं च मखार्थं स्यान्मध्यनित्योत्सवार्थकम् ६४

देवानां भूपतीनां च महामानं महोत्सवैः
युद्धयोग्यं यथासर्वे चक्रत्रयसमन्वितम् ६५

मखार्थमर्धरथं यथासर्वे वेदपादसमन्वितम्
नित्योत्सवं यथासर्वे पञ्चचक्रसमन्वितम् ६६

महोत्सवरथाना च सर्वेषां चक्र वर्तते
षट्सप्ताष्टनवं वाथ दशचक्रं क्रमाद् विदुः ६७

युद्धयोग्यं त्रिकं वेदि मखार्थं द्वयमेव वा
नित्योत्सवरथाश्चैकद्वित्रिवेदि प्रकल्पयेत् ६८

महोत्सवरथे वेदि त्रितयादि नवान्तकम्
कल्पयेत्सार्वभौमस्य चैव नवश्चेति वेदिका ६९

महाराजे सप्तकान्तमेकादि प्रकल्पयेत्
नरेन्द्राख्यनृपतेः पञ्चकादि योजयेत् ७०

पार्ष्णिकाख्यस्य भूपानामेकादि चतुरान्तकम्
विष्णोरत्र्यम्बकस्यापि चैकाद्ये नववेदिकाः ७१

बौद्धादिजिनकान्तानां सप्तान्तं चैकादितः
अन्येषामपि देवानां वेदीनां वेदसंख्यकम् ७२

एकादिपञ्चसंख्यान्तं कुर्याच्छिल्पिवरैरपि
रथानामूर्ध्वदेशस्य चालङ्कारं प्रवक्ष्यते ७३

मानं यथायुक्तिवशादेकद्वित्रितलं तु वा
कुर्याद् देवरथानां तु शेषमागमतोक्तवत् ७४

अथाधो गुरुपादसरोरुहम्
गुरुवरं च षण्मुखं सरस्वतिं
गणपतिं त्वथ शङ्करवल्लभाम्
विविधवाहनवस्त्रविभूषितान् ७५

अथ रथाभरणं परिकथ्यते
शिखिशिखण्डकचामरतोरणम्
विविधकिङ्किणीनिर्मलदर्पणम्
व्यजनकेतकमाल्यमनोहरम् ७६

आदौ रथस्य तलतोऽपि भुर्वरवेश्या
लास्याङ्गना सकलभावन सम्यक् विवस्त्राम्
अत्युच्चमर्दलनिस्वन धार्य
चोर्ध्वेऽर्थमल्पमरुतं मग्रे दधानाम् ७७

वीणावेणुमृदङ्गपानि बहुशो विद्वत्सभापण्डितैः
सामन्तादिनृपालपुत्रसचिवैः पुरोहितैर्ब्राह्मणैः
किञ्चित् ध्यापकनृत्तनाथनिवहान् संवेष्टय तच्छिल्पिभिः
युक्तं विष्णुमहेश्वरानपि तथा भक्तैश्च संवेष्टितान् ७८

द्वारपालकसयक्षकिन्नरान्
नागकन्यकगरुक्षनिध्यपि
कल्पवृक्षयुतचक्रवर्तिभिः
मण्डतं कुरु सर्ववेदिभिः ७९

इति मानसारे वास्तुशास्त्रे रथलक्षणविधानं नाम त्रिचत्वारिंशोऽध्यायः

## शयनविधानम्

देवानां च द्विजातीनां वर्णानां शयनार्थकम्
योग्यकं पर्यङ्कस्य लक्षणं वक्ष्यतेऽधुना १

एकादशाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात्
पञ्चविंशाङ्गुलान्तं स्याद्बालपर्यङ्कविस्तृतम् २

एवं चाष्टविधं प्रोक्तं बालानां सर्वजातिनाम्
तदर्धं च त्रिपादं च तत्समाधिकमायतम् ३

विस्तारार्धं त्रिपादं च परितो वातायनोदयम्
तद्विस्तारसमं वापि त्रिपादं पादोदयं भवेत् ४

त्रिचतुष्पञ्चाङ्गुलं वापि पादविस्तारमेव च
चतुष्पादसमायुक्तं पादाग्रे चक्रसंयुतम् ५

पादतारसमं चक्रं विस्तारं परिकीर्तितम्
अर्धैकद्व्यङ्गुलं वापि घनं युक्त्या प्रयोजयेत् ६

पादाग्रे सान्तरालं स्यात्कुर्यात्तिर्यक् च यन्त्रकम्
द्विमात्रं च त्रिमात्रं वा पर्यङ्कं पट्टिकोदयम् ७

तद्द्वयं विस्तृतं चैव चाग्रं वामाग्रकर्णयुक्
परितः पट्टिकामध्ये परितः छिद्रं योजयेत् ८

कार्पासं रज्जु वेणुं च तालं च शणवल्कलैः
पट्टिकाश्च तयोर्मध्ये दीर्घदीर्घं तु योजयेत् ९

पट्टिकां परितो बाह्ये वृत्तकं परिकल्पयेत्
एकं वाथ द्वयं वापि क्षेपणं बहुधान्वितम् १०

वृत्ताकृतीष्टपादानां युक्त्या वर्णेन लेपयेत्
गवाक्षाकारं युक्त्या च पट्टिकोर्ध्वे समन्ततः  ११

कुञ्जराक्षमलक्षं वा पत्रपुष्पाद्यलङ्कृतम्
क्षुद्रक्षेपणसंकीर्णं क्षुद्रनानाङ्घ्रिसंयुतम्  १२

बहुपादश्रेणियुक्तमधिष्ठाङ्गक्रियान्वितम्
एवं तु बालपर्यङ्कं सर्वालङ्कारसंयुतम्  १३

एकविंशाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात्
सप्तत्रिंशाङ्गुलान्तं स्यात्पर्यङ्कस्य विशालता  १४

कन्यसादुत्तमान्तं स्यादङ्घ्रिकान्तरमेव च
एवं तु मानुषाणां च देवानां च विशेषतः  १५

पाद बाह्यावसानं स्याद्विस्तारायामं मानयेत्
देवानां च द्विजातीनां विस्तारं द्विगुणायतम्  १६

विशाले तु गुणांशं वा द्व्यंशाधिकायतं तथा
तस्माद्धीनाधिकं चैतत्सर्वदोषसमुद्भवम्  १७

त्रिचतुष्पञ्चषट्सप्ताष्टनन्ददशाङ्गुलम्
एकादशाङ्गुलान्तं च नवभेदमुदीरितम्  १८

कन्यसादुत्तमान्तं स्यात्पट्टिकाविस्तृतं भवेत्
विस्तारार्धं तदुत्सेधं परितः पट्टिका भवेत्  १९

वेदाश्रायतं सर्वं पर्यङ्कमिति कथ्यते
षडङ्गायादिसर्वेषां विस्तारे परिकल्पयेत्  २०

परितः पट्टिका बाह्ये वृत्तवेत्रादिमण्डितम्

अधिष्ठानोपपीठं यत्कुर्याद्वै पट्टिकोन्नतम्  २१

श्रीबन्धं कुट्टिमं कुर्याद् देवभूसुरभूपतेः
पादबन्धमधिष्ठानं सर्वजात्यार्हकं भवेत्  २२

प्रतिभद्रोपपीठं स्याद् भूसुरसुरभूपतेः
वेदिभद्रोपपीठं स्याद्वैश्यशूद्रस्य योग्यकम्  २३

उपपीठमधिष्ठानं नाटकाद्यादिनावृतम्
देवानां देवतारूपं मानुषाणां च मानवम्  २४

देवानां सर्वरूपं स्यान्मानुषस्योक्तवद् भवेत्
पद्मपत्रादिचित्रैश्च सर्वालङ्कारसंयुतम्  २५

दन्तं वा दारुजं वापि क्षुद्रवेद्यादि कुट्मलैः
षण्णवार्काङ्गुलं चैव त्रिविधं पादतुङ्गकम्  २६

उत्सेधं च समं तारं त्रिपादं वार्धमेव वा
मूलतारं शरांशे तु त्रयांशं चाग्रविस्तृतम्  २७

तदुत्सेधं तु नवांशं स्याज्जन्मनोच्चं शिवांशकम्
पद्मतुङ्गं द्विभागं स्यात्कर्णोच्चमम्बरांशकम्  २८

कुम्भमेकेन कर्तव्यं कन्धरं च द्विभागिकम्
सार्धांशं चोर्ध्वपत्रं स्यादर्धांशं वाजनं भवेत्  २९

कुम्भपादमिति प्रोक्तं तस्मादुच्चं प्रवेशनम्
तदेव हरिकाकर्णं सर्वाङ्गं पद्मवाजनम्  ३०

वज्रपादमिति प्रोक्तं युक्त्या कुर्यान्मनोहरम्
अथवा मध्यकर्णादौ चोर्ध्वादौ पद्मवाजनम्  ३१

पद्मपादमिति प्रोक्तं सर्वालङ्कारसंयुतम्
चतुःषट्पादयुक्तं वा देवानां च द्विजातीनाम्  ३२

देवानां भूतसिंहं वा पादमध्ये प्रयोजयेत्
नृपाणां सिंहपादं स्यात् शेषाणां पूर्ववद् भवेत्  ३३

सर्वालङ्कारसंयुक्तं शेषं युक्त्या प्रयोजयेत्
अयष्कीलेन पादानां मध्ये रन्ध्रं प्रयोजयेत्  ३४

तदूर्ध्वे पट्टिकां न्यस्य कीलाग्रे च कबन्धनम्
चतुर्भिः शृङ्खलायुक्तमान्दोलं चैकतोपरि  ३५

देवभूसुरभूपानामन्येषां शयनार्थकम्
वकुलं चाशिनीपुत्रं द्राक्षारक्तं च चन्दनम्  ३६

निम्बं च चन्दनं चैव चापशाखः शमी तथा
एवं तु शयनादीनामासनानां च दारुभिः  ३७

दन्तं वै क्षीरिणी चैव तिन्दुकं विरलं तथा
शाकं च सर्वपादानां वृक्षमेवमुदीरितम्  ३८

अन्यानि स्निग्धसर्वैश्च यथालाभेन संग्रहम्  ३९

विस्तारदीर्घचरणानि विभूषणं च
युक्तं विधाय कुरुते त्वथ शिल्पिनोक्तम्
पर्यङ्कोपरि नयनं प्रकुर्वन्
पुत्रं चायुरपि हानिः धनक्षयं च  ४०

मञ्चस्य लक्षणं सपट्टिकपादकादीन्
सर्वाङ्गमपि केसरीभूतपादम्
शास्त्रोक्तलक्षणवशात्कुरुते तु सर्वम्

सम्पत्सुखं च लभतेऽप्यथ भुक्तिमुक्तीः ४१

इति मानसारे वास्तुशास्त्रे शयनविधानं नाम चतुश्चत्वारिंशोऽध्यायः

## सिंहासनलक्षणम्

देवानां चक्रवर्त्यादिनृपालासनयोग्यकम्
सिंहासनस्य मानं च लक्षणं वक्ष्यतेऽधुना १

प्रथमाभिषेकयोग्यं स्यात्प्रथमासनमेव च
मङ्गलाख्याभिषेकस्य मङ्गलासनमीरितम् २

वीराख्याभिषेकस्य वीरासनमुदीरितम्
विजयाख्यस्याभिषेकस्य विजयासनमीरितम् ३

एवं चतुर्विधं प्रोक्तं भूपानामासनं भवेत्
नित्यार्चनासनं चैव नित्योत्सवासनमीरितम् ४

विशेषाख्यार्चनार्थाय विशेषाख्यार्चनासनम्
चतुर्विधात्मनं प्रोक्तं देवानामपि योग्यकम् ५

आदौ पद्मासनं प्रोक्तं द्वितीयं पद्मकेसरम्
तृतीयं पद्मभद्रं स्याच्छ्रीभद्रं स्याच्चतुर्थकम् ६

पञ्चमं श्रीविशालं स्यात्षष्ठं श्रीबद्धमेव च
सप्तमं श्रीमुखं चैव भद्रासनं तु चाष्टकम् ७

नवमं पद्मं च भद्रं स्याद् दशमं पादबन्धकम्
आसनानि तु चैतानि नामानि कथितानि वै ८

अत्रोक्तमासनानां च सर्वेषां मानमुच्यते
सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ९

सप्तविंशाङ्गुलान्तं च विस्तारं नवधा भवेत्
परार्थं यजनार्थं चासनायामं पूर्ववत्  १०

पञ्चादशाङ्गुलारभ्य द्विद्व्यङ्गुलविवर्धनात्
एकत्रिंशाङ्गुलान्तं स्यात्कन्यसादि त्रयं त्रयम्  ११

विस्तारं च तथा प्रोक्तं नित्योत्सवस्य चासने
आयामं पूर्ववत्कुर्याद् द्विगुणान्त यथाक्रमम्  १२

नवपङ्क्यडलारभ्य द्विद्व्यडलविवर्धनात्
पञ्चत्रिंशाडलान्तं स्याद्विस्तारं परिकीर्तितम्  १३

महोत्सवे चासनं ह्येवं कन्यसादि त्रयं त्रयम्
विस्तारं द्विगुणायामं पादोनद्विगुणं तु वा  १४

विस्तारार्धायतं वापि पादाभ्यन्तरमानकम्
पादबाह्यावसानं स्यात्पादमध्यावसानकम्  १५

विस्तारे चायते कुर्यान्मानमेवं तु सर्वतः
एवं तु देवतानां च महीपानां च वक्ष्यते  १६

पञ्चादशाङ्गुलारभ्य द्विद्व्यङ्गुलविवर्धनात्
सैकत्रिशाङ्गुलान्तं स्यात्प्रथमासनमेव च  १७

विस्तारं नवधा प्रोक्तं कन्यसादि त्रयं त्रयम्
तस्मादर्धाधिकं वापि त्रिपादाधिकमेव वा  १८

तत्समेनाधिकं वापि त्रिविधं चायतं तथा
सप्तदशाङ्गुलादौ स्याद् द्विद्व्यडलविवर्धनात्  १९

पञ्चत्रिंशतिमात्रान्तं नवतारं तु पूर्ववत्

वीरासनमिति प्रोक्तं दीर्घं प्रागुक्तवन्नयेत् २०

एकविशाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात्
सप्तत्रिंशाङ्गुलान्तं स्याद्विजयासनं विस्मृतम् २१

नवभेदमिति प्रोक्तं दीर्घं पूर्ववदाचरेत्
विस्तारमायतं प्रोक्तं तत्तत्तुङ्गमिहोच्यते २२

एकाङ्गुलं समारभ्य चैकाङ्गुलविवर्धनात्
नवाङ्गुलान्तमुत्सेधं कन्यसादि त्रयं त्रयम् २३

आत्मनश्चासनोत्तुङ्गं तद्विस्तारवशात्क्रमात्
वह्न्यङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् २४

नन्दपङ्क्त्यङ्गुलान्तं स्यान्नित्यार्चनासनोदयम्
एवं नवविधं प्रोक्तं विस्तारस्य वसान्यसेत् २५

पञ्चाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
एकविंशाङ्गुलान्तं स्यान्नित्योत्सवासनोदयम् २६

एवं नवविधं प्रोक्तं कन्यसादीनि पूर्ववत्
सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् २७

त्रयोविंशाङ्गुलान्तं स्याद्विशेषाख्यार्चनोदयम्
क्षुद्रादि त्रित्रिमानं स्यात्कुर्यात्तु पूर्ववत् क्रमात् २८

नवाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
पञ्चत्रिंशाङ्गुलान्तं स्यात्कन्यसादिनवोदयम् २९

महोत्सवासनं त्वेवं यथाक्रमेण पूर्ववत्
त्रिचतुष्पञ्चषण्मात्रं सप्ताष्टकनवाङ्गुलम् ३०

दशैकादशमात्रान्तं नवभेदमुदीरितम्
कन्यसादुत्तमान्तं स्याच्छिखरोदयमेव च  ३१

नवाङ्गुलं समारभ्य चैकैकाङ्गुलवर्धनात्
सप्तासप्तदशाङ्गुलान्तं स्यात्प्रथमासनतुङ्गकम्  ३२

एकादशाङ्गुलारभ्य नवपङ्क्त्यङ्गुलान्तकम्
मङ्गलासनमुत्तुङ्गं नवभेदमुदीरितम्  ३३

त्रयोदशाङ्गुलारभ्य चैकविंशाङ्गुलान्तकम्
वीरासनमिति प्रोक्तं नवधा तुङ्गमेव च  ३४

पञ्चादशाङ्गुलारभ्य त्रयोविंशाङ्गुलान्तकम्
नवभेदमिति प्रोक्तं विजयासनतुङ्गकम्  ३५

विस्तारे चतुरङ्गे वा षट्शुभायादि कारयेत्
त्रिचतुष्पञ्चषड्वृध्या चाष्टहानिश्च योनयः  ३६

षट्सप्ताष्टकवृद्ध्या तु द्वादश क्षपयेद् बुधः
शेषमायमिति प्रोक्तं सप्ताष्टनववर्धनात्  ३७

दशभिः क्षपयेच्छेषमेवं व्ययमुदीरितम्
अष्टनन्ददशेवृद्ध्या सप्तविंशे क्षयो भवेत्  ३८

शेषं दिनमिति प्रोक्तं वृद्ध्याष्टनन्दनाधिका
सप्तके चन्द्रगे शेषं वारमेवमुदीरितम्  ३९

त्रिचतुष्पञ्चवृद्ध्या तु क्षपयेत्तु नवांशकम्
गजयोनिं विनाकुर्यात्सिंहासनान् यथाशुभम्  ४०

आयाधिक्यं व्ययहीनं सर्वसंपच्छुभावहम्

आयहीनं व्ययाधिक्यं सर्वसम्पद्विनाशनम्  ४१

धूमयोनिश्च काकाश्च गर्दभान् श्वानं वर्जयेत्
अन्ययोनिः शुभं सर्वे शुभयोनिमिह योजयेत्  ४२

सर्वेषां मानमित्युक्तं गणयमानमिहोच्यते
सोपपीठमधिष्ठानं केवलं वा मसूरकम्  ४३

केवलं चोपपीठं वा कुर्यात् सिंहासनं बुधः  ४४

द्व्यंशं जन्म शशिसार्धं पद्मकम्
कम्पकर्णं शरमर्धं कम्पकम्
अंशमब्जं शशि वाजनोपरि
चोपणमर्धं रविभागतुङ्गके  ४५

वेदिभद्र विविधाकपोतधृक्
चोर्ध्वयोगभुवना कपोतकौ
देवभूपति यत्योर्यथा तथासने
योग्यमेव कृतयस्तु मूलके  ४६

आसनस्योदयार्धं वा त्रिभागैकोनमेव वा
उपपीठोदयं ह्येव चोक्ततुङ्गेऽधिकं तु वा  ४७

शेषं मसूरकं वापि समाधिष्ठानतुङ्गकम्
उत्सेधरविभागे तु जन्मतुङ्गं शिवांशकम्  ४८

तदूर्ध्वे चार्धकम्पं स्यात्पाद भागेन योजयेत्
त्रिपादाधिकमंशेन महापद्मं प्रयोजयेत्  ४९

तदूर्ध्वे सार्धभागेन कर्णवृत्तं च पद्मकम्
कन्धरं चार्धभागेन तत्समं चोपरिस्तथा  ५०

कम्पवृत्तदलं कुर्यात्तदूर्ध्वेऽर्धेन पद्मकम्
एकांशं कुम्भवृत्तं स्यात्तदूर्ध्वेऽर्धेन पद्मकम्  ५१

तत्समे निम्नवृत्तं च कम्पं कुर्यात्तदूर्ध्वके
द्व्यंशेन गलकं चोर्ध्वे चांशेन कम्पवृत्तकम्  ५२

निम्नं च कम्पमर्धेन चैकांशेन कपोतकम्
तदूर्ध्वे चैकभागे तु चतुर्भाग विभाजिते  ५३

आलिङ्गान्तरितं चोर्ध्वे प्रतिवादनमुच्यते
युक्त्या च वृत्तकम्पं स्यात्सर्वालङ्कारसंयुतम्  ५४

व्यालादिपत्रपुष्पैश्च कर्णैश्च मकरद्वयम्
कपोते नासिकोपेतं किम्बरीवक्त्रसंयुतम्  ५५

चतुष्कर्णे च युक्त्या च कुर्याद् वल्लवपत्रकम्
मध्ये तत्पत्रमलङ्कृत्य सर्वालङ्कारसंयुतम्  ५६

गले च नाटकैर्युक्तं यक्षविद्याधरादिभिः
वृत्तकुम्भं च पट्टं वा कटकादिरलङ्कृतैः  ५७

पद्माकारं तु सर्वेषां केसरादिदलान्वितम्
यथेष्टमंशं गलतुङ्गं स्यान्नानापट्टैरलङ्कृतम्  ५८

एतत्पद्मासनं प्रोक्तं शिवविष्णवासनं भवेत्
तदेव सोपपीठं स्यात्पद्मकेसरमीरितम्  ५९

उपपीठे क्षुद्रकम्पानां वृत्तकम्पाश्रकम्पयुक्
निम्नानि मौक्तिकोपेतं सर्वाङ्गं रत्नभूषितम्  ६०

उपपीठगले सर्वे नाटकाभिरलङ्कृतम्

कोकिलैः क्षुद्रशालैश्च पञ्जरैस्तोरणान्वितम् ६१

नासिकाकुम्भपादैश्च नासिकापञ्जरान्वितम्
सर्वालङ्कारसंयुक्तं पद्मचित्रादिशोभितम् ६२

देवानां चक्रवर्ती सर्वेषामासनान्वितम्
एकविंशांशकं तुङ्गे जन्मतुङ्गैकभागिकम् ६३

पादांशं क्षेपणं चैव सत्रिपादांशमम्बुजम्
तदूर्ध्वे चैकभागे तु तत्त्रिभागं विभाजिते ६४

एकांशं निम्नकं प्रोक्तं चैकांशं वृत्तकम्पकम्
तदूर्ध्वे अंशेन कम्पं स्यात्पञ्चांशं वप्रतुङ्गकम् ६५

तदूर्ध्वं अंशं त्रिधा भज्य वृत्तं पद्मं च वृत्तकम्
तदूर्ध्वे वृत्तसमं पद्मं पद्मतुल्यं च वृत्तकम् ६६

तच्छेषं तु द्विभागे तु कुमुदं वृत्ताकृतिस्तथा
तदूर्ध्वांशं त्रिधा भज्य वृत्त पद्मं च कम्पकम् ६७

ऊर्ध्वे कर्णं त्रिभागं स्यात्तदूर्ध्वेऽशं त्रिधा भवेत्
कम्पं पद्मं च वृत्तं च द्विभागेन कपोतकम् ६८

तदूर्ध्वे चैकभागेन आलिङ्गान्तरितं तथा
प्रत्यूर्ध्वे वाजनं कम्पं सर्वालङ्कारसंयुतम् ६९

एवं तु पद्मभद्रं स्यादधिराजस्य योग्यकम्
तुङ्गे द्विरष्टभागं स्याज्जन्ममे केन कारयेत् ७०

अर्धेन वाजनं चैव पादांशं क्षुद्रवेत्रकम्
पादाधिकत्रयांशं च तदूर्ध्वे तु महाम्बुजम् ७१

तदूर्ध्वे निम्नमर्धेन तत्समं पद्ममेव च
द्विभागं कुमुदोत्तुङ्गं तदूर्ध्वेऽर्धेन चाम्बुजम् ७२

तत्समं चोर्ध्वकम्पं स्यात्त्रिभागेन गलोदयम्
त्र्यंशेन कम्पपद्मं स्याद् द्व्यंशेन कपोतकम् ७३

त्र्यंशेन लिङ्गान्तरितं प्रतिवाजनमुच्यते
श्रीभद्रकमिति प्रोक्तं सर्वालङ्कारसंयुतम् ७४

अधिराजनरेन्द्रस्य सर्वासन योग्यकम्
द्वाविंशाशकं तुङ्गे च जन्म द्व्यंशेन विन्यसेत् ७५

तदेव त्रिवृत्त शोभार्थं यथासोपानवत्क्रमम्
तदूर्ध्वे पद्ममेकांशं चार्धेनावृतवेत्रकम् ७६

अर्धेनाग्रकम्पं स्यात्तदूर्ध्वेऽर्धेन वृत्तकम्
त्रियांशं वप्रदेशे तु नानापुष्पैश्च शोभितम् ७७

तदूर्ध्वेऽर्धेन वृत्तं स्यात्तत्समोपरि पङ्कजम्
अर्धेन वृत्तकं चोर्ध्वे तत्समं चोर्ध्वपद्मकम् ७८

तदूर्ध्वेऽर्धेन वृत्तं स्यात्तत्तुल्यं तद्दलं भवेत्
एकेन मध्यवृत्तं स्यात्कुभुदाकारं तु निर्गमम् ७९

तदूर्ध्वेऽर्धेन पद्मं स्यादर्धेनावृतवेत्रकम्
तदूर्ध्वे चाग्र पट्टं स्यात्तद्विंशेन गलोदयम् ८०

नानापादादिसिंहादिपत्रवल्लैर्विभूषितम्
तदूर्ध्वे चाग्रपट्टं स्यात्तदूर्ध्वे वृत्तवेत्रकम् ८१

तत्समं चोर्ध्वपद्मं स्याद्वाजनं चैकभागिकम्

अाश्विन्यंशं कपोतं स्यात्तदूर्ध्वेंऽशेन वाजनम्  ८२

तदूर्ध्वे चांशं वृत्तं स्यान्मध्ये व्यालादिभूषितम्
सर्वालङ्कारसंयुक्तम् शेषं युक्त्या प्रयोजयेत्  ८३

श्रीविशालमिति प्रोक्तं पार्ष्णिकनरेन्द्रयोः
कारयेद्विजयान्तं स्यात्प्रथमाच्चतुरासने  ८४

तदेव वप्रमध्ये तु द्व्यंशेन वृत्तनिर्गमम्
शेषं तु पूर्ववच्चित्रं श्रीबन्धमिति हि स्मृतम्  ८५

पार्ष्णिकः पट्टधरोत्सेधं पूर्वोक्तानां च योग्यकम्
तदेव मध्यकुम्भे तु चैकांशेनाश्रपट्टिका  ८६

एवं तु श्रीमुखं प्रोक्तं मराडलेशस्य योग्यकम्
तदेव मूलभागेन चाग्रवृत्तं विनाम्बुजम्  ८७

भद्रासनमिति प्रोक्तं पट्टभागासनं भवेत्
तदेव जन्मन उपरिदेशे द्व्यंशकेनाम्बुजं भवेत्  ८८

शेषं प्रागुक्तवत्कुर्यात्पद्मबन्धमिति स्मृतम्
प्राहारकस्य योग्यं स्यात्सर्वेषामासनान्वितम्  ८९

तुङ्गे त्रिंशतिभागेन जन्म द्व्यंशेन योजयेत्
पद्मतुङ्गं गुणांशं स्यात् कम्पमंशेन योजयेत्  ९०

षडंशं वप्रतुङ्गं स्यात्तदूर्ध्वे सप्तांशकं घतम्
पद्ममंशेन बन्धांशं कर्णं कम्पं शिवांशकम्  ९१

कपोतोच्चं त्रिभागं स्यादालिङ्गादि द्वयांशकम्
व्यालसिंहादिपुष्पैश्च कर्णे ग्राहादिभूषितम्  ९२

सर्वाङ्गवृत्तवेत्रं स्यान्नवरत्नैरलङ्कृतम्
एवं तु पादबन्धं स्यादस्त्रग्राहस्य योग्यकम्  ९३

अस्त्रग्राहस्य नृपतेः सिंहपादं न कारयेत्
क्षुद्रभूपविशां शूद्रैः उपपीठादि योजयेत्  ९४

चतुरश्रसमायुक्तं सर्वेषां सर्वमासनम्
देवानां मौलिनामुक्तं युक्तं सर्वेषु योग्यकम्  ९५

प्रथमासनादि सर्वेषां भूपानां तान्युदीरितम्
षट्पादेन समायुक्तं सिंहरूपं प्रकल्पयेत्  ९६

तत्सर्वं प्राङ्मुखं कुर्याद्विपरीतं चेद्विनाशनम्
देवानामासनानां तु चतुर्दिक्षु निरीक्षणम्  ९७

त्रियङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
नवपङ्क्त्यङ्गुलान्तं स्यात् सर्वेषां पादतुङ्गकम्  ९८

एवं च विविधं प्रोक्तं यन्मानोरम्यं मानयेत्
पादोत्सेधं नवांशं स्यात्सिंहतुङ्गं युगांशकम्  ९९

शेषं तु पूर्ववत्कुर्याद्युक्त्या तत्रैव योजयेत्  १००

आदितोक्तमुपचक्रवर्तये
सिंहमुद्रितमनोहरासनम्
अष्टभूमिपतिभिश्च केसरी
लाञ्छितं त्वथ मनोहरासनम्  १०१

प्रथमासनं मङ्गलासनम्
अथ वीरविजयाख्यासनम्
नवभूपतिविशेषतत्त्वम्

अथ सामान्यमुदीरितं बुधैः १०२

विष्णुरुद्रजिनकेन्द्रमुख्यकैः सर्वदेवगणचक्रवर्तिने
आसनानि कथितानि तानि वै चोत्सवाश्च कथितानि सुरिभिः १०३
इति मानसारे वास्तुशास्त्रे सिंहासनलक्षणविधानं नाम
पञ्चचत्वारिंशोऽध्यायः

## तोरणविधानम्

देवानां भूपतीनां च भूषणार्थं च तोरणम्
तल्लक्षणं विधानं च यथा सम्यक् प्रवक्ष्यते १

आसनोपरि विन्यस्य सर्वेषामपि तोरणम्
विस्तारे मध्यसूत्रस्य चापर तोरणा न्यसेत् २

पीठताराधभागे तु मध्ये चाङ्घ्रिकमध्यमम्
अथवा तत्त्रिभागैकद्व्यंशं चापरपूर्वके ३

तन्मध्ये तोरणस्तम्भं मध्यं वा सर्वतो न्यसेत्
पीठायामं त्रिभागैकं द्व्यंशायामार्धमेव वा ४

पीठायामे चतुर्भागे त्रियंशं चाग्रकान्तम्
अथवा पञ्चषट्सप्तसाष्टभागैकहीनकम् ५

स्तम्भमध्ये तु बाह्ये वा पूर्ववच्चान्तरं तु वा
पीठतारसमोच्चं वा सपादाधिकमेव वा ६

त्रिपादादधिकोत्सेधं तत्समं वाधिकोन्नतम्
आयामसदृशोत्सेधं तत्पादाधिकमेव वा ७

अर्धं त्रिपादं तत्तुल्याधिकं वा तोरणोदयम्
तेन मानोदयं सर्वं शुद्धतोरणमानकम् ८

त्रिचतुष्पञ्चषट्सप्तचाष्टनन्ददशाङ्गुलम्
एकादशाङ्गुलं वापि नवधा तोरणोदयम्  ९

त्रिचतुष्पञ्चषरामात्रं पादविष्कम्भमिष्यते
तत्समं च त्रिपादं च सार्धं वा बहलं भवेत्  १०

पादं सतोरणं कुर्यात्तोरणाङ्घ्रि परिन्यसेत्
पादाग्रे पट्टिकोपेतं तन्मानं वक्ष्यतेऽधुना  ११

पादतारसमं वापि द्विगुणं वाजनोदयम्
तद्दीर्घं फलकान्तं वा चतुष्पञ्चाङ्गुलान्तिकम्  १२

वाजनादितोरणो ह्येवं केवलं वाथ तोरणम्
तोरणस्योक्ततुङ्गे तु चाष्टभागं विभाजिते  १३

तदेवं पञ्चभागाङ्घ्रितुङ्गं बन्धाशतोरणम्
अथवा नवांशकं तुङ्गे षड्भागं चाग्रतुङ्गकम्  १४

दशभागे सप्तभागे तु पादं शेषांशतोरणम्
देवानां भूपतीनां च स्थानकस्यासनस्य च  १५

वृत्तं वाथ त्रियुग्मं वा चार्धचन्द्राकृतिस्तथा
जना चापकृतिर्वापि यथेष्टाकारं तोरणम्  १६

मध्यात्तु भ्रामयेच्छिल्पी वृत्ताकारं च तोरणम्
तदर्धे नासिकादौ तद् भ्रामयेदर्थचन्द्रकम्  १७

तदर्धेन द्विपार्श्वे तु भ्रामयेद्धनुराकृतिम्
त्रिभुजं तत्समं नीत्वा तोरणं युक्तितो न्यसेत्  १८

पत्रं पुष्पं च रत्नं च चित्रतोरणमेव च

एवं चतुर्विधं प्रोक्तं देवानां च त्रिमौलिनाम्  १९

अन्येषां भूपतीनां च पुष्पं रत्नं च तोरणम्
पत्रवल्यादि संभूष्य पत्रतोरणमीरितम्  २०

नानापुष्पैरलङ्कृत्य पुष्पतोरणमेव च
सर्वरत्नैरलङ्कृत्य कर्तव्यं रत्नतोरणं  २१

नानालङ्कारसंयुक्तं यक्षविद्याधरादिभिः
तच्चित्रतोरणं प्रोक्तं पूर्वोक्तानां तु संमतम्  २२

सर्वेषां तोरणमध्ये चोर्ध्वे तुम्बुरुनारदम्
तत्प्रदेशे द्विपार्श्वे तु मकरादिविभूषितम्  २३

तोरणस्याग्रमूले तु गृहापत्रैश्च भूषितम्
तोरणाद्यं तु पत्रादिभूतवल्यासनान्वितम्  २४

पादानां च द्विपार्श्वे तु व्याल तोरणधारिणम्
पत्रतोरणमित्युक्तम् शेषं युक्त्या प्रयोजयेत्  २५

तदेव रत्नपुष्पैश्च नानालङ्कारसंयुतम्
यक्षविद्याधराद्यैश्च युक्तं स्याच्चित्रतोरणम्  २६

ग्राहकिम्बरीसंयुक्तं चित्रपद्मादिभिर्विना
सर्वाङ्गं पुष्पसंयुक्तं सर्वालङ्कारसंयुतम्  २७

पुष्पतोरणमित्युक्तं मकरन्दैश्च पुष्पकम्
सर्वाङ्गं नवरत्नैश्च ग्राहकिन्नरभूषितम्  २८

ग्राहपुच्छादिसर्वेषां सर्वरत्नेन बन्धयेत्
रत्नतारागणैर्युक्तं कुक्षि रावृतलम्बितम्  २९

तोरणस्योपरि देशे तु भुजङ्गपादद्वयोरपि
ग्राहान्तं सर्वरत्नैश्च पूरितं श्रेणिसंयुतम्  ३०

रत्नतोरणमित्युक्तं सर्वालङ्कारसंयुतम्
वाजनपादलङ्कारं सर्वं प्रागुक्तवन्नयेत्  ३१

कृतं मध्ये कमलां कुर्यात् वारणम्
तन्मध्ये कल्पयेल्लक्ष्मीं नानालङ्कारभूषितम्  ३२

नाटिकाफलकामुष्टिबन्धनं पत्रवल्लिकम्
मकरं किम्बरीवक्त्रं नाटकादि भुजङ्गवत्  ३३

केसरिमण्डनं भवति चित्रतोरणनाटकैः  ३४

पत्रपुष्पमयरत्नतोरणैः
चित्रहीनमित्युच्चभूषणैः
कल्पयेत्त्वपि च रत्नतोरणैः
चित्रहीनमित्युच्चभूषणैः  ३५

कल्पयेत्त्वपि च तोरणैः
पुष्पहीनमथ पत्रहीनकम्
रत्नहीनमथ पत्रतोरणैः
पद्मयुक्तमथ पुष्पतोरणैः  ३६

पत्रपुष्पनहि चान्यभूषणम्
कल्पयेत्त्वपि शिल्पिभिर्वरैः  ३७

इति मानसारे वास्तुशास्त्रे तोरणविधानं नाम षट्चत्वारिंशोऽध्यायः

## मध्यरङ्गविधानम्

देवानां च नृपाणां च स्थानकासनयोग्यकम्
मुक्ताप्रपाङ्गमानं च लक्षणं वक्ष्यतेऽधुना  १

यद्युक्तमध्यरङ्गे तु चतुस्त्रिंशद्विभाजिते
एकैकं भागहीनं स्यात्प्रपाविस्तारमिष्यते २

तच्चतुर्भागिकैकेन तन्मसूरकतुङ्गकम्
तद्द्वयं पादतुङ्गं स्यात्तदर्धं प्रस्तरोदयम् ३

अथवाष्टांशकं तुङ्गे विभजेत्तद्विशेषतः
अर्धार्धांशेन वेदिः स्यात्पञ्चांशं चाङ्घ्रितुङ्गकम् ४

प्रपातुङ्गं शिवांशं स्यादथवा षड्विभाजिते
एकांशं वेदिकोत्तुङ्गं चतुर्भागाङ्घ्रितुङ्गकम् ५

एकांशं मञ्चतुङ्गं स्यात्सर्वालङ्कारसंयुतम्
एकत्रिभक्तिकं वापि चतुरर्धाङ्घ्रिसंयुतम् ६

सर्वेषां पादविस्तारं त्रिचतुष्पञ्चाङ्गुलं भवेत्
धान्यस्तम्भमिति प्रोक्तं शिलास्तम्भं विशेषतः ७

षट्सप्ताष्टाङ्गुलं वापि शिलास्तम्भं विशालकम्
वृत्तं वा चतुरश्रम् वा अष्टाश्रं षोडशाश्रकम् ८

पादतुङ्गेऽष्टभागे तु त्रयांशेनोर्ध्वमलङ्कृतम्
बोधिकं मुष्टिबन्धं च फलका नाटिका घटम् ९

सर्वालङ्कारसंयुक्तम् मूले पद्मसमन्वितम्
चतुर्दिक्षु चतुर्भद्रं केचिद् भद्रं तु कारयेत् १०

कुट्टिमं चोपपीठं वा सोपपीठमसूरकम्
अथवा चिन्हवेदिः स्यात्प्रपालङ्कारमुच्यते ११

उत्तरं वाजनं चैव मुष्टिबन्धलुपादिभिः

परितः ज्ञुद्रनासिभ्योऽष्टषोडशमेव च १२

तदूर्ध्वे व्यालरूपादिमकरादि विभूषितम्
तत्र मध्ये सभामध्ये न्यसेत्सिंहासनादिभिः १३

नित्यनैमित्तिकाख्यादिकाम्यैरपि च सर्वभिः
चक्रवर्त्यादिभूतैश्च देवसिंहासनोपरि १४

स्वशक्तिभिरधिष्ठित्य संस्थिता जनसेविता १५

सिंहासनं मकरतोरणकल्पवृक्षम्
मुक्ताप्रपाङ्गमपि दारुशिलेष्टकाद्यैः
रत्नैरनेकबहुलोहविशेषकैश्च
कुर्यान्मनोहरतरं चाथ सालभक्त्या १६

मुक्ताप्रपाङ्गार्थमुदीरितानि
पादाद्यधिष्ठानानि तथोत्तराभिः
मानानि हीनान्यधिकानि चेत्
राजराष्ट्रस्य निकृन्तनानि १७

इति मानसारे वास्तुशास्त्रे मध्यरङ्गविधानं नाम सप्तचत्वारिंशोऽध्यायः

## कल्पवृक्षविधानम्

देवानां चक्रवर्त्यादिभूपालानां च योग्यकम्
कल्पवृक्षादिनस्तारं मानं लक्षणमुच्यते १

तोरणोदयपादं तु पादार्धाधिकोदयम्
एवं वृक्षस्य तुङ्गस्य आसनस्योपरि न्यसेत् २

आसनायाममध्ये तु तोरणस्योपरि न्यसेत्
षट्सप्ताष्टाङ्गुलं वापि मानदेवाङ्गुलेन वा ३

कल्पवृक्षस्य मूले तु विशालं परिकीर्तितम्
तत्तदेकाङ्गुलार्धहीनं वृक्षस्याग्रविशालकम् ४

वृक्षपादमिति प्रोक्तं चक्रवल्ल्यादिभूषितम्
अथवा ऋृज्वाङ्ग तं कुर्यान्मूलादग्रविशालकम् ५

भुजङ्गेनावृतं पादं मूर्ध्नि पञ्चफणान्वितम्
उल्लासनफणं सर्वं स्फुरज्जिह्वेक्षणान्वितम् ६

षट्सप्ताष्टनवाङ्गुल्य दशमेकादशाङ्गुलम्
द्वादशाङ्गुलमेवं वा सैकार्काङ्गुलमेव वा ७

चतुर्दशाङ्गुलान्तं स्यान्नवभेदफणान्वितम्
तत्समं मध्यविस्तारं किञ्चिद्धीनाग्रविस्तृतम् ८

तदर्धं मूलविस्तारं पुच्छाग्राङ्गुलकं ततः
आमूलाग्रं क्षयं कुर्याद्युक्त्या च सर्वरूपकम् ९

वक्त्रं व्यालान्तरं भावे शेषं युक्त्या प्रयोजयेत्
तदूर्ध्वे वृक्षशाखाश्च नवपङ्क्तीश्च शाखयुक् १०

एकादश च शाखाश्च त्रयोविंशच्च संख्यया
तन्नवविधं प्रोक्तं कन्यसादि त्रयं त्रयम् ११

नरेन्द्रस्याधिराजस्य सार्वभौमस्य योजयेत्
नवशाखां समारभ्य द्विद्विशाखाविवर्धनात् १२

पञ्चविंशतिशाखान्तं देवानां नवधा भवेत्
एकादशाङ्गुलारभ्य द्विद्वयङ्गुलविवर्धनात् १३

नवविंशाङ्गुलान्तं स्यात्कन्यसादि त्रयं त्रयम्

शाखायामं नव प्रोक्तं भूपतीनां च संमतम्  १४

त्रयोदशाङ्गुलारभ्य द्विद्व्यङ्गुलविवर्धनात्
एकत्रिंशाङ्गुलान्तं स्यात्कन्यसादुत्तमाङ्गकम्  १५

एवं नवविधं प्रोक्तमायामं देवं प्रयोजयेत्
त्रिचतुष्पञ्चषट्सप्ताष्टनन्ददशाङ्गुलम्  १६

एकादशाङ्गुलान्तं स्यात्कन्यसादीनि पूर्ववत्
शाखाविशालता प्रोक्तं भूपानां च यथाक्रमम्  १७

पञ्चाङ्गुलं समारभ्य एकैकाङ्गुलवर्धनात्
त्रयोदशाङ्गुलान्तं स्यात्तथा शाखाविशालता  १८

एवं नवविधं प्रोक्तं देवतानां च योग्यकम्
तत्समं चार्धमेवं वा तच्छाखाबहुलं भवेत्  १९

पादाग्रोपरि शाखाच सर्वमूलं तु योजयेत्
वृत्तमूलविशालं स्यात्समं द्व्यर्धाङ्गुलाधिकम्  २०

त्रिपादाधिकमेवं तत्तत्समाधिकमेव वा
शाखामूलविशालं स्याद्युक्त्या तत्रैव योजयेत्  २२

शाखामूले तु शालानां मूलवल्ल्यादिपत्रयुक्
महावल्लीचूलनं स्याच्छिन्नवल्ल्यादि पार्श्वयोः  २३

चक्राकारं यथाशाखा भ्रमचूलनमण्डणम्
पत्रपुच्छाग्रचूलं स्यात्समग्रं चाग्रवल्लिका  २४

एकानेकस्य शाखानां चान्तराले सपुष्पकैः
पत्रैर्मूलादिवल्ल्यैश्च वल्लीमूलं च वल्लिके  २५

बहुवल्ल्यादिपत्रैश्च पुष्पैश्च फलकैरपि
कुर्यात्तु पत्रशाखायां फलहीनाध्वनानि च  २६

बालवल्ल्यादिपत्रैश्च सुरपुष्पसूनुकाकृतम्
सर्वेषामपि वल्ल्या च श्यामवर्णनिभं भवेत्  २७

वल्ल्यग्रं तु सर्वेषां रक्तवर्णेन शोभितम्
सर्वेषां पत्रचिन्हं स्याद्धेमवर्णेन शोभितम्  २८

पत्राग्रं क्षुद्रवल्ल्या च सर्वं श्यामनिभं भवेत्
भ्रमरैरभिसंयुक्तं सर्वशाखानिरेतने  २९

नानापत्रैश्च पुष्पैश्च नानावलैश्च संयुतम्
नानारत्नैश्च दामं च नानापद्मयभिरामयेत्  ३०

नाना वानरैर्युक्तं नानादेवाभिरामयेत्
सिद्धविद्याधराद्यैश्च शाखैः शाखान्तरालकैः  ३१

अन्तर्बहिश्च सर्वेषां सर्वत्र परिकल्पयेत्
वृक्षमूलादिचाग्रान्तं युक्त्या पत्रादिशोभितम्  ३२

सर्वाङ्गं क्षुद्रपर्वं स्यात्पत्रवल्ल्यादिनिर्गमम्
शाखामूलस्य पर्वे तु मौलिमुण्डं च योजयेत्  ३३

पत्रवल्ल्यैश्चाग्रैश्च भ्रमशीषीदिसंयुतम्
भ्रमराकृति सर्वत्र अत्रवल्ल्यादिभिस्तथा  ३४

एवं तु कल्पवृक्षं स्यात् शे युक्त्या प्रयोजयेत्  ३५

मुक्ता प्रयाङ्गमथ मण्डपमध्यदेशे
सिंहासनं मकरचिह्नतोरणार्थम्

कल्पद्रुमल्य पुरतो बहिरङ्कणं स्यात्
चक्रश्वरस्तु परिरभ्य विराजते स्म  ३६

सम्पूर्णचन्द्रवदनामहाराजपुत्रा
राजाङ्गनानगरवारविलासिनीभिः
विद्वद्भिरन्यदपि वन्दिकुमारमुख्यैः
संसेव्यमानचरणाम्बुरुहास्त राजभिः  ३७

इति मानसारे वास्तुशास्त्रे कल्पवृक्षविधानं नाम अष्टाचत्वारिंशोऽध्यायः

## मौलिलक्षणम्

कन्यकादिधनरत्नसंग्रहा
शालिभूमिगृहदासवाहनम्
शिल्पिनां च गुरवे निवेदयेत्
कर्तृपत्र वरहस्ततो बहुः  १

योगात्कुर्याद्युक्तसंमानहीनम्
कर्ता यावद् भूमिचन्द्रं पतेत्सः
तस्मात्कर्ता चोक्तसंमानं राजा
सर्वैश्वर्यं काम्यसिद्धिं लभेत  २

शिल्पिचित्तं प्रसन्नं चेद्यजमानेष्टदं फलम्
शिल्पिनस्त्वप्रसन्नं चेत्सर्वसम्पद्विनाशनम्  ३

तस्मात्सर्वथा कर्ता शिल्पाचार्यमुपाचरेत्
देवानां भूपतीनां च मौलिलक्षणमुच्यते  ४

जटामौलिकिरीटं च करण्डं च शिरस्त्रकम्
कुन्तलं केशबन्धं च धम्मिल्लालकचूलकम्  ५

मकुटं च मिति ख्यातं तत्तदाधारमानतः
पद्मपट्टं रत्नपट्टं पुष्पपट्टं त्रिधा मतम्  ६

पितामहस्य रुद्रस्य जटामकुटं योग्यकम्
किरीटमकुटं चैव नारायणस्य योग्यकम् ९

कन्यसा देवतानां च करण्डमकुटान्वितम्
जटामौलि मनोन्मन्या मण्डला कुण्डलं तथा १०

सरस्वत्याश्च सावित्र्याः केशबन्धं च कुण्डलम्
अथवा सर्वशक्तीनां करण्डमकुटान्वितम् ११

किरीटं सार्वभौमस्य चाधिराजस्य योग्यकम्
नरेन्द्रस्य करण्डं स्यत्पार्ष्णिकस्य शिरस्त्रकम् १२

चक्रवर्त्यादिभूपस्य करण्डमकुटं तु वा
पत्रपट्टं पट्टधरो रत्नपट्टं च पार्ष्णिके १३

पट्टभाक् पुष्पपट्टं च चोक्तमेवं पुरातनैः
प्राहारकास्त्रग्राहौ च पुष्पमाल्यं प्रकीर्तितम् १४

चक्रवर्तिमहिष्याश्च कुड्मलं मकुटं भवेत्
अधिराज नरेन्द्रस्य महिष्याः केशबन्धनम् १५

पार्ष्णिकं पट्टकरोमण्डलेशस्य पट्टभाक्
एतेषां महिषीभ्यां च धम्मिल्लमकुटाहृतम् १६

प्राहारकास्त्रग्राहाभ्यां महिष्यालकचूडकम्
वक्त्रायामत्रिधायामं द्वयं वा मकुटोदयम् १७

पितामहस्य रुद्रस्य पादोनद्वयमेव च
अन्यथा देवतानां च चालपादोनमेव च १८

किन्नरयक्षकाणां च अध्यर्धं वा समन्तकम्

सर्वेषामपि शक्तीनां मुखायामद्वयं भवेत्  १९

केशान्तात्कुड्मलान्तं स्यात्सर्वेषां मकुटायतम्
मुखायामसमं मूलविस्तारं भूषणान्यपि  २०

तदष्टांशेन हीनं वा षोडशांशोनमेव वा
मकुटाग्रविशालं स्याच्छिखायाममध्यादिदेशिकम्  २१

मूलतारार्धभागं वा त्रिभागैकांशमेव च
एवं करण्डमौल्याग्रे विस्तारं परिकीर्तितम्  २२

सर्वेषां मकुटानां तु चामूलाग्रक्षयं क्रमात्
भूपानां च शिरोबाहुतुल्यं तन्मकुटोदयम्  २३

तत्तुङ्गे षोडशांशं स्यान्महाराजस्य हीनकम्
तत्तुङ्गे द्व्यंशहीनोच्चं नरेन्द्राख्यस्य भूपतेः  २४

अर्धं पार्ष्णिकभूपस्य शिरस्त्रोदयमीरितम्
शिरोनाहसमं दीर्घे तत्त्रिभागं द्विभागिकम्  २५

चक्रवर्त्यादि राजस्य महिषीमकुटोदयम्
अन्यत्सर्वं महिषीणां मुखायामसमं बुधैः  २६

पादोनं च तदर्धं वा धम्मिल्लाकादिकोदयम्
शेषं प्रागुक्तवन्मानं कुर्यात्तत्र विचक्षणः  २७

शिरोनाहं त्रिभागैकं पट्टस्त्रीदयमेव च
एवं पट्टधरं प्रोक्तं पट्टमेवं शिरोवृतम्  २८

चतुर्भागैकपट्टं स्यात्तुङ्गानां मण्डलेश्वरम्
पट्टमेवं शिरोनाहे षड्भागे चैकभागिकम्  २९

पट्टभागाख्यभूपस्य पट्टतुङ्गमथैव च
सर्वानां चेति प्रोक्तमलङ्कारमिहोच्यते ३०

दशपर्णैश्च हेमादिभिर्माल्यादीनां प्रकल्पयेत्
पञ्चशत सहस्त्रं च निष्कं च द्विसहस्रकम् ३१

अथवा पञ्चशताधिक्यं निष्कान्तं द्विसहस्रकम्
कन्यस्यादुत्तमान्तं स्यात्स्वर्णसंख्यात्रयोदिते ३२

प्राप्तं च मङ्गलं चैव वीरं च विजयं तथा
चतुर्विधाभिषेकस्य चक्रवर्तेश्च कथ्यते ३३

तदर्धं चावरोधस्य हिरण्य मकुटस्य वा
द्विसहस्रान्तमुक्तादित्रयसमं तथा ३४

अधिराजस्य मकुटे स्वर्णसंख्याप्रकीर्तितम्
पञ्चशतनिष्कमारभ्य पञ्चशतविवर्धनात् ३५

पञ्चाशतसहस्रादि कन्यसादुत्तमान्तकम्
पट्टयुक्तं तथाबेरे भूपानां च विशेषतः ३६

एवं नरेन्द्रभूपस्य हेम स्यान्मकुटस्य च
चतुःशतनिष्कमादौ चतुःशतविवर्धनात् ३७

शतद्वादशनिष्कान्तं कन्यसादि त्रयं त्रयम्
पार्ष्णिकस्य शिरस्त्रस्य हेमं तत्परिकीर्तितम् ३८

त्रिशतनिष्कमारभ्य त्रिशतनिष्कविवर्धनात्
निष्कं नवशतान्तं स्यात्कन्यसादुत्तमान्तकम् ३९

पट्टधृक् भूपतेश्चैव हेम पट्टस्य कीर्तितम्

द्विशतं निष्कमारभ्य निष्कद्विशतवर्धनात् ४०

सप्तशतनिष्कान्तं स्यादुत्तमान्तं त्रयोदितम्
मण्डलेशस्य पट्टस्य हेमसंख्या प्रकथ्यते ४१

स्वर्णनिष्कशतमारभ्य शतनिष्कविवर्धनात्
त्रिशतनिष्कपर्यन्तं कन्यसादुत्तमान्तकम् ४२

पट्टभाक् भूपपट्टस्य संयुक्तं हेममेव च
भूपानां मकुटाग्रान्तं केशान्तं मकुटोदयम् ४३

तदूर्ध्वे चाधिकं कुर्यात्तच्छिखामणितुङ्गकम्
जटामकुटकेशबन्धं च धवला त्रिपुषा कृतिः ४४

किरीटं वेणुकर्णाभं करण्डं शिखितुण्डवत्
शिरस्त्रं बुद्बुदाकारं धम्मिल्लं वल्लिकाकृतिः ४५

केशान्तादलकाचूडं कुर्यात्तु मकुटानि वै
भूपानां मकुटोत्सेधं षड्विंशं तु विभाजिते ४६

फालपट्टोदयं पञ्चभागं चूडं तदर्धकम्
पुरमुत्सेधं पञ्चांशं मूलतारं षडंशकम् ४७

देवानां मकुटोच्चं तु नव विंशति भाजिते
पार्श्वपूरितं नन्दाशं तुङ्गतारं षडंशकम् ४८

अध्यर्धांशाग्रपट्टं स्यात्त्रिपादांशेन वेत्रकम्
पट्टार्धे चोर्ध्वदेशे तत्पादांशेन त्रिवेत्रकम् ४९

तदूर्ध्वे पद्ममेकेन द्व्यंशेन कुड्मलोदयम्
मकुटान्तात्पट्टिकान्तं स्यात्तदूर्ध्वे तु शिखामणिः ५०

वेत्रादिकुड्मलान्तं स्याच्छिखामरायुदयमीरितम्
अधोवेत्रोदयदेशे रत्नदामावृतांशकम् ५१

वृत्ताकारं तु सर्वाङ्गं युक्त्या तत्रैव योजयेत्
अन्यत्र सर्वदेशे तु तरङ्गाकृति योजयेत् ५२

तरङ्गाकारमध्ये तु पुष्परत्नैश्च विभूषितम्
पूरितं च द्विभागं च मकरैश्च विभूषितम् ५३

तन्मध्ये रत्नबन्धं स्यात्तस्यावृतसपत्रयुक्
अग्रे च रत्नबन्धं स्याद्बाह्ये तु वल्लिकावृतम् ५४

मकरस्यास्य देशे तु वल्लिदामं च निर्गमम्
पुरतः पृष्ठतश्चैव मकरान्मकरान्तकम् ५५

मौलिबन्धेन बल्ल्येव मुक्तादामैरलङ्कृतम्
ललाटपट्टतुङ्गं तच्चतुर्भाग विभजिते ५६

एकांशं पट्टबन्धं स्यात्सर्वरत्नैरलङ्कृतम्
तस्याधो रत्नदामैश्चललाटोर्ध्वेऽर्धचन्द्रवत् ५७

कर्णपत्रसमायुक्तं श्रोत्रोर्ध्वे कर्णपुष्पयुक्
तस्मात्तु लम्बनं दाम सर्वरत्नैरलङ्कृतम् ५८

पूरिमध्यादधोदेशे चूलरत्नानि विन्यसेत्
चतुष्पूरी संयुक्तं कर्णोर्ध्वे पार्श्वपूरितम् ५९

शिरःपृष्ठोर्ध्वदेशे तु पृष्ठपूरिसंयुतम्
पृष्टस्याधश्च मध्ये तु शिरःशक्रं तु सम्युतम् ६०

शिरोनाहत्रिभागैकं शिरःशक्रविशालकम्

चक्राकारं तु संयुक्तं सर्वरत्नानि विन्यसेत्  ६१

एतत्किरीट मकुटं सर्वालङ्कारसंयुतम्
जटाचूडोर्ध्वबन्धं स्यादग्रे पट्टादिकान्वितम्  ६२

मध्ये शिखामणिं कुर्यात्तत्पार्श्वे दामलम्बनम्
जटान्तरालैः पुष्पैश्च शेषं पूर्ववदाचरेत्  ६३

तदेव केशबन्धं स्यान्मौलिमध्ये सुबन्धनम्
तदूर्ध्वे चालकापङ्क्तिः कुर्यात्तद्भमराकृतिः  ६४

शेषं तु पूर्ववत्कुर्यात्सर्वालङ्कारसंयुतम्
तदेव कुन्तलं कुर्यान्मध्यबन्धेन योजयेत्  ६५

सर्वाङ्गे भ्रमरं कुर्यात्तद्विशेषं तु पूर्ववत्
शिरस्योर्ध्वे शिखारत्नं तन्मध्ये कुड्मलोदयम्  ६६

अग्रतारत्रिभागैकं सर्वकुड्मलविस्तृतम्
विनाकृतिना सर्व तच्छेसं पूर्ववद् भवेत्  ६७

त्रिचतुष्पञ्चवलयं च तारे वेत्रपद्मयुक्
उक्तवच्चाग्रदेशे तु कुड्मला स्यान्न दामकम्  ६८

शेषं प्रागुक्तवत्प्रोक्तं करण्डमकुटान्वितम्
शिरोनाहत्रिभागैकं धम्मिल्लाग्रिवशालकम्  ६९

पञ्चत्रिंशेन तन्मूलं तत्र संविस्तृतं भवेत्
कुर्यात्त्रिवलयोपेतं न कुर्यात्तु शिखामणिम्  ७०

सर्वरत्नानि विन्यस्य विना च कर्णपूरकम्
शिरश्चूलं तु संयुक्तं शेषं तत्पूर्ववद् भवेत्  ७१

तदेवकलचूडे तु मूले तु रत्नबन्धनम्
मूलमग्रसमं तारं मध्ये चोक्तविशालकम् ७२

तद्विस्तारत्रिभागैकं तदूर्ध्वोदयविस्तृतम्
नवरत्नैश्च संयुक्तं शेषं पूर्ववदाचरेत् ७३

फालपट्टाभवत्कुर्यात्पट्टैः सर्वाकृतिस्तथा
पत्ररत्नादिसंयुक्तं पत्रपट्टमिति स्मृतम् ७४

नवरत्नैश्च संयुक्तं कुर्यात्तद्रत्नपट्टकम्
नानापुष्पैश्च संयुक्तं पुष्पपट्टमिति स्मृतम् ७५

सर्वेषां मौलिदेशे तु चाष्टमङ्गलसंयुतम्
श्रीवत्सं मध्यम कुर्यात्तस्याधः पूर्णकुम्भकम् ७६

तत्पार्श्वे चामरं दीपं चोर्ध्वे च छत्रसंयुतम्
दक्षिणे दर्पणं वामे स्वस्तिकं शङ्खमेव च ७७

एवं तु नृपमध्ये तु गलपट्टोपरि न्यसेत्
सर्वेषां भूपतीनां च महिषीणां च योग्यकम् ७८

सर्वेषां मकुटानां च सर्वालङ्कारसंयुतम्
सर्वेषां पुष्पमकुटं शिरोनासहमोदयम् ७९

त्रिपादं चार्धमेवं वा सर्वपुष्पैरलङ्कृतम्
चतुरश्रं चतुर्दिक्षु चाथवा वृत्तमेव च ८०

मकुटाकारसंयुक्तं करण्डं वा किरीटकम्
वेमं विना तु कुसुमैर्मकुटं कुर्याद्यथाविधि ८१

पट्टबन्धस्य नृपतेः पुष्पपट्टं तदर्धकैः

अन्येषां भूपतीनां च मूर्ध्नि मालां च बन्धयेत्  ८२

प्राप्तं च मङ्गलं चैव वीरं च विजयं तथा
चतुर्विधाभिषेकस्य चक्रवर्तेश्च कथ्यते  ८३

मौलिनां च त्रिपुत्राणामाद्याभिषेकपूर्वकैः
उक्तवच्छास्त्रमार्गे तु कुर्यात्पुष्पाभिषेककम्  ८४

भूपानां चाभिषेकाख्यं कर्मकाले विशेषतः
स्थपतिः स्थापकैर्विप्रैः स्थापित स्वङ्कुरार्पणम्  ८५

अधिवासादिपर्यन्तं कर्मकुर्याद्बुधैः सह
उक्ताधिवासात्कुम्भानां जलपूर्णान्समारभेत्  ८६

यागमण्डपसौम्ये तु सिंहासनस्य चोपरि
नृपालस्तत्र संकल्प्य अभिषेकं समारभेत्  ८७

सरित्समुद्रसलिलं कुम्भैः पूर्णा दधिमयैः
अथर्वसामगीतैश्च चान्यैश्चागमन्त्रकैः  ८८

जलाभिषेक संपूर्णं कुर्यात् स्थपतिर्गुरौ
पश्चात्तु होमशिष्टा च दर्भं दत्वा त्रिपुण्ड्रकम्  ८९

ललाटे धारणं कुर्याद् भूपतेस्तु यथाविधि
हंसश्चि ह्नदुकूलं च धारयेत्तदनन्तरम्  ९०

श्रीचन्दनं च कस्तूरीकुङ्कुमं चानुलेपयेत्
यज्ञसूत्रोत्तरीयं च सर्वाभरणभूषितम्  ९१

सर्वालङ्कारसंयुक्तमभिषेकाख्यमण्डपम्
आनयेन्मकुटं सिंहं पीठं च स्थपतिर्गुरुः  ९२

प्रोक्षयेत्पञ्चगव्यादि मध्यरङ्गे तु विन्यसेत्
पुरोहितपुरगाश्च मकुटं धारयेत्ततः ९३

पश्चात्सिंहासनाद्यैश्च कल्पवृक्षं च तोरणम्
निर्यूहाद्यैरलङ्कृत्य नृपालं तत्र वेशयेत् ९४

होपवेशनं कुर्यान्महिषीं सव्यपार्श्वके
सुमुहूर्ते सुलग्ने च स्थपतिस्थापकावुभौ ९५

रत्नसंदष्टमकुटं मूर्ध्नि राजोपयोजयेत्
सर्वमङ्गलघोषैश्च स्वस्तिवाचनपूर्वकम् ९६

दूर्वां मधूकमालाश्च दधिविन्दु ललाटके
वक्षस्थले बाहुमाला नयनाञ्जनरञ्जनः ९७

दूपदीपं दधेत् पश्चात्परमाङ्गं प्रदर्शयेत्
यवाङ्कुरं च दूर्बा च प्लक्षत्वक् भाजनोपरि ९८

ज्ञानवृद्धैरमात्यैश्च कुर्यान् नीराञ्जलाविधैः
वृद्धैः सुमङ्गलीभिस्तैराशीर्वचनपूर्वकम् ९९

आर्द्राहरिद्रासंमिलितान् साक्षतान्प्रोक्षयेद् द्विजैः
कुर्यादारोहणं पश्चाद्राजा त्वैरावतोपरि १००

ऐरावतारूढनृपाल मौलि
मुक्तान्यकान्वादयदीप्यमान्
ललाटपट्टस्य मुखेन्दुकात्य
दिङ्मण्डलं भास्वस्य श्च तस्तम् १०१

इतस्ततश्चामरवीज्यमाने
रूपाङ्गनाभिः परितो निषेव्यः

सपल्लवैश्छत्रचतुष्टयैश्च
विराजमानं मणिदर्पणादिभिः  १०२

कलशं च सुवर्णनिर्मितम्
ध्वजसंपातपताकयावृतम्
नगरस्य ततः प्रदक्षिणम्
कुरुतां नृत्तसंगीतवाद्यकैः  १०३

नगरं प्रदक्षिणं कुर्यात्सर्वमङ्गलघोषणैः
गृहप्रवेशसमये नेत्रबन्धं च कारयेत्  १०४

धान्यादिपायसक्षीरसवस्त्रादिधरादिकम्
मङ्गलद्रव्यमाङ्गल्यमखिलं निक्षिपेद्बुधः  १०५

स्वयमागत्य तद्द्रव्यं राजा हस्तेनोपस्पृशेत्
दुर्भिक्षं च सुभिक्षं च विद्वान् पश्चाद् विनिर्दिशेत्  १०६

वीर्यं च विजयं चापि कीर्तिं लक्ष्मीं च निर्दिशेत्
पायसाद्यन्नसंस्पर्शे चान्नवृद्धिः सदा भवेत्  १०७

ढान्यराशिं करेणैव स्पर्शद्रव्या सुभिक्षकम्
स्वर्णादिलौहरत्नं च प्रजानां श्रीकरं भवेत्  १०८

खङ्गाद्यस्त्रं स्पृशेद्वापि शौर्यं तस्य विनिर्दिशेत्
दुद्रव्यस्पर्शनान्तस्य राज्यस्य स्यात्त्वमङ्गलम्  १०९

द्रव्यादीनां तत्सर्वं रौप्यादिस्पर्शने भवेत्
प्राप्तं च मङ्गलं चैव वीरं च विजयं तथा  ११०

एते चतुर्विधाः प्रोक्ता चाभिषेका यथोक्तवत्  १११

उक्ताः सर्वाभिषेकाः सकलनृपतिभिः काम्यनित्याख्यकं च
अन्यैर्नैमित्तिकाद्यैरपि च यदुचितं तत्तदेवाभिषेकः
इत्थं वेदैः पुराणैः सकलमुनिवरैर्मानसारादिमुख्यैः
विद्वद्भिद्वः शिल्पशास्त्रैरपि च यदुदितं शास्त्रतन्त्रं प्रकुर्यात् ११२
इति मानसारे वास्तुशास्त्रे अभिशेकलक्षणविधानं नाम एकोनपञ्चाशदध्यायः

## भूषणलक्षणम्

देवानां भूपतीनां च भूषणानां तु लक्षणम्
क्रमात्तद्विधिना सम्यक् संक्षेपाद्वक्ष्यतेऽधुना १

पत्रकल्पं चित्रकल्पं रत्नकल्पं च मिश्रितम्
एषां च दुर्विधं प्रोक्तं कुर्यादाभरणं बुधः २

देवानामपि सर्वेषां कल्पैः सर्वं तु योग्यकम्
पत्रकल्पं विना सर्वं सार्वभौमस्य योग्यकम् ३

रत्नं मिश्रं च योग्यं स्यादधिराजनरेन्द्रयोः
अन्येषाम् भूपतीनां च मिश्रकल्पं च योग्यकम् ४

पत्रवल्लीरलङ्कृत्य पत्रकल्पमिति स्मृतम्
पुष्पवल्ली च चित्रैश्च सर्वरत्नैरलङ्कृतम् ५

एतत्तु चित्रकल्पं तु नाटकाभिरलङ्कृतम्
पुष्परत्नैरलङ्कृत्य भूषणं रत्नकल्पकम् ६

पत्ररत्नैश्च संभूष्य मिश्रकल्पमिति स्मृतम्
हारोपग्रीवकेयूरकटकैश्च सुपूरिमम् ७

बाहुवलयदामं च स्कन्धो मालावलम्बनम्
प्रकोष्ठे वलयं चैव मणिबन्धकलापकम् ८

रत्नाङ्गुलीयकैश्चैव विना मध्याङ्गुलीयकम्
मध्ये चोदरबन्धं स्यात्तस्योर्ध्वे स्तनसूत्रकम् ९

यज्ञसूत्रादिपार्श्वैक सूत्रं स्यात्तु स्तनावृतम्
पुरसूत्रलम्बनं पूर्वे यज्ञसूत्रं तु बन्धनम् १०

कटिसूत्रावसानं स्यात्पुरसूत्रमिति स्मृतम्
वक्षस्थले च हारं स्यादुपग्रीवहृदयान्तकम् ११

बाहुमूले तु वलयं दाम कक्षावसानकम्
बाहुमालावलम्बं स्यात्केयूरकटकान्वितम् १२

बाह्यायामस्य मध्ये तु केयूरकटकान्वितम्
तदूर्ध्वे पूरिमं कुर्यात्कर्णे मकरभूषणम् १३

कटिसूत्रं तु संयुक्तं कटिप्रस्थ सपट्टिका
मेढ्रान्तं पट्टिकान्तं स्यात्तन्मध्ये सिंहवक्त्रवत् १४

अथवा रत्नबन्धं स्यात्स्यादामेढ्र विनिर्गमम्
निर्व्यं च पञ्चपार्श्वे तु मध्ये दामचलान्वितम् १५

पीताम्बरदुकूलं च नलकान्तप्रलम्बनम्
अथवा जानुपर्यन्तं चर्मचीरं च वाससम् १६

जङ्घादिवलयोपेतं पादजालादिभूषणम्
विहाय तर्जनीं सर्वैरङ्गुलैरङ्गुलीयकम् १७

ऊर्ध्वकाये च हारादि पार्श्वयोर्वात लम्बनम्
मध्ये दामं च लम्बं स्याच्छन्नवीरमिति स्मृतम् १८

इत्युक्तं भूषणं देवैश्च क्रवर्तेरिति स्मृतम्

चक्रवस्तदा विष्णोर्वनमाला विभूषितम्  १९

अधिराजनरेन्द्राभ्यां विनासूत्रोपरिस्तनौ
अन्येषां सर्वभूपानां केयूरकटकं विना  २०

सर्वेषामपि देवानां गुल्फस्योपरिदेशके
भुजङ्गकटकोपेतं पादनूपुरसंयुतम्  २१

कर्णे विभूषणं कुर्यान्मकराङ्कितकुण्डलम्
अथवा स्वर्णताटङ्कौ शेषं तु पूर्ववद्भवेत्  २२

अङ्गभूषणमित्युक्तं बहिर्भूषणमुच्यते
दीपदण्डं व्यजनं च दर्पणं चैव लक्षणम्  २३

पर्णमञ्जूषकादीनां दोलाया लक्षणं तथा
भूपानां च तुलाभारतुलालक्षणमुच्यते  २४

वत्सरारम्भलेखार्थं पत्रं च कर्णलक्षणम्
मृगनाभिबिडालस्य शुकस्यापि च पञ्जरम्  २५

चातकस्य चकोरस्य मरालस्य च पञ्जरम्
पारावतस्य नीडं च नीलकण्ठस्य पञ्जरम्  २६

तित्तिरेश्च कुलायं च कन्दुरीयस्य पञ्जरम्
कुक्कुटस्य कुलायं च नकुलस्यापि पञ्जरम्  २७

चटकस्य गोधारस्य पञ्जरं व्याघ्रपञ्जरम्
सर्वेषां लक्षणं वक्ष्ये विधिना संक्षेपतः क्रमात्  २८

द्वादशाङ्गुलमारभ्य एकादशाङ्गुलं भवेत्
अष्टसप्ताङ्गुलोपेतं विंशत्यङ्गुलकान्तकम्  २९

नवधा दीपदण्डोच्चं द्विद्व्यङ्गुलविवर्धनात्
अथवा हस्तमानेन दीपदण्डोदयं क्रमात्  ३०

एकहस्तं समारभ्य त्रित्र्यङ्गुलविवर्धनात्
द्विकरान्तं तथोत्सेधं तथा हस्तेन वर्धयेत्  ३१

नवहस्तावसानं स्यात्कन्यसादि त्रयं त्रयम्
केचित्पुरतो दीपदण्डं हर्म्यवशोदयम्  ३२

प्रस्तरं वेदिकान्तं च ग्रीवान्तं दण्डकान्तकम्
नासिकान्तं फलिकान्तं पद्मान्तं तद्धटान्तकम्  ३३

स्तूपिकाग्रावसानं स्यात्कन्यसादि त्रयं त्रयम्
एकद्व्यङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात्  ३४

अथवार्धाङ्गुलैर्वृध्यात्पञ्चषडङ्गुलान्तकम्
मात्राङ्गुलोनमे वोक्तं दीपदण्डविशालकम्  ३५

एवं तु दारुजैः कुर्याल्लोहजेतु विशेषतः
एकाङ्गुलं समारभ्य चार्धार्धाङ्गुलवर्धनात्  ३६

पञ्चाङ्गुलावसानं स्यात्कन्यसादि त्रयं त्रयम्
फलकादण्डकमिति प्रोक्तं विस्तारं दण्डमूलके  ३७

त्रिचतुष्पञ्चषट्सप्तसाष्टभाग विभाजिते
तत्तदेकांशहीनं स्याच्छेषदण्डाग्रविस्तृतम्  ३८

चित्रपाण्यग्रवद् दण्डं मूले पद्मासनान्वितम्
अग्रे च फलकान्तं च ताटिकाद्यैर्विभूषितम्  ३९

अथवाङ्घ्रिकवारिं स्यादूर्ध्वे च कुड्मलान्वितम्

दराडविस्तारमानेन दराडद्वित्रयमेव वा ४०

चतुर्दराडं पञ्चषट्दराडं पद्मविस्तारमेव च
फलका च त्रिदराडं स्यादथवा पङ्कजोक्तवत् ४१

दराडमध्ये तु ते सर्वे युग्मा चाङ्घ्रिकवारिका
चतुरश्रं वा तदष्टाग्रं वृत्तं वा चलदराडकम् ४२

स्थिरदराडविशाले तु मानाङ्गुलवशान्नयेत्
त्रिचतुर्मात्रमारभ्य द्विद्वयङ्गुलविवर्धनात् ४३

एकोनविंशत्यङ्गुल्या विंशत्यङ्गुलकान्तकम्
एवं नवविधं प्रोक्तं स्थिरदराडविशालकम् ४४

लोहजैर्दारुजैर्वापि शैले वाथ प्रकल्पयेत्
पुरोक्तदराडतुङ्गे तु त्रिचतुष्पञ्चषडंशके ४५

एकैकं चाधिकं युक्तं दराडस्य घातमानकम्
मूले च वेदिकां कुर्यात्पद्मोपपीठमेव वा ४६

फलकादिभूषणं वापि मञ्जुदराडमथापि वा
मूले च चतुरश्रं स्यादष्टांशं वा सुवृत्तकम् ४७

ऊर्ध्वे चोक्तवच्चाग्रे चामूलाग्रक्षयं तरिम्
युक्त्योपर्युक्तवन्माने कुर्यादूर्ध्वे तु दराडकम् ४८

व्यजनदराडमानस्य लक्षणं वक्ष्यतेऽधुना
यत्तदङ्गुलमानेन षट्सप्ताङ्गुलमारभेत् ४९

द्वादशैकाङ्गुलान्तं स्यान्मूलदराडायतं भवेत्
एकं वाथ द्वयाङ्गुलं यथा संपरिकीर्तितम् ५०

इत्युक्त मूलमग्रं च मध्ये किञ्चित्कृशान्वितम्
वृत्ताकारं च दराडं स्यादग्रे च हरितान्वितम्  ५१

मूले च कुड्मलाकारं किञ्चित्पद्मासनान्वितम्
तदूर्ध्वे भ्रमदराडं स्यान्मूलदराडायतं भवेत्  ५२

विस्तारैकत्रिभागैकं चतुर्भागविशालकम्
तदग्रे हरितापद्मं किञ्चित्कुड्मलसंयुतम्  ५३

एवं व्यजनदराडं स्याद् दारुजं लोहजमथवा
व्यजनं चर्मकारेणचर्म कुर्यात्तु योजयेत्  ५४

व्यजनद्वयबहिर्दशे श्रीरूपाद्यैरलङ्कृतम्
वर्णैश्च लोहद्रव्येण लेखयेच्चोक्तवद् बुधः  ५५

एवं तु व्यजनं प्रोक्तं दर्पणं वक्ष्यतेऽधुना
पञ्चषडङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात्  ५६

एकविंशाङ्गुलान्तं च द्वाविशत्यङ्गुलान्तकम्
एवं नवविधं प्रोक्तं दर्पणस्य विशालकम्  ५७

यवतारैकमारभ्य यवतारेण वर्धनात्
यवतारं नवान्तं स्याद् दर्पणं बहुलं भवेत्  ५८

दर्पणं सुवृत्तं स्यादंशरु किञ्चिदुन्नतम्
निर्मलं दर्पणं मध्ये बाह्ये रेखाभिरावृतम्  ५९

अपरे च लक्ष्मीमाद्यैर्वल्ल्येश्च विन्यसेत्
दर्पणस्य त्रिभागैकं मूले कीलायतं तथा  ६०

आयामं सदृशान्तरं चार्धं पद्मान्तमेव हि

शेषं कीलायतं कुर्यात्तत्त्रिभागैकविस्तृतम् ६१

तन्मूलं षोडशांशं तु कीलकं तु विशालकम्
यथाफलं यथायुक्त्या दर्पणं दण्डवत्क्रमात् ६२

दर्पणाङ्कस्य कोणे तु कारयेत्कांसकारकैः
दारुजे लौहजे वापि तद्दण्डं कारयेत्सुधीः ६३

दर्पणस्य समं दीर्घं तत्पादाधिकमेव वा
अर्धं त्रिपादमाधिक्यं तत्समाधिकमेव च ६४

दर्पणस्य विशाले तु चतुर्भागैकविस्तृतम्
मूले पद्मासनैर्युक्तं चाग्रे च फलकादिभिः ६५

कुर्यात्तु शिल्पिनः प्राज्ञः सर्वालङ्कारसंयुतम्
एवं तु दर्पणं प्रोक्तं वर्णज्ञादुपलक्षणम् ६६

त्रिचतुर्मात्रमारभ्य द्विद्व्यङ्गुलविवर्धनात्
नवपङ्क्त्यङ्गुलान्तं च विंशमात्रावसानकम् ६७

पर्णमञ्जूषविस्तारं कन्यसादि त्रयं त्रयम्
पादाधिकमथाध्यर्धं पादोनद्विगुणान्तकम् ६८

तद्विस्तारसमोत्सेधं कुर्यात्तु चतुरश्रकम्
वृत्तं वृत्तायतं वापि यथा कांसैश्च लोहजैः ६९

पादमर्धाङ्गुलं वापि दारुजस्य मानं भवेत्
तदुत्सेधे त्रिचतुर्भागमेकांशेन वरत्नकम् ७०

एककोष्ठं द्विकोष्ठं वा त्रिकोष्ठं वाथ कल्पयेत्
यथाबलं यथायुक्त्या तथाबन्धायम्नेन च ७१

तदेव मञ्जूषोत्सेधे पदाधिकमेव वा
अर्धाधिकमेवं वा तैलमञ्जूषिकोन्नतम्  ७२

शेषं तु पूर्ववत्कुर्याद्वर्णाकारविधानकम्
सर्वाभरणमञ्जूषं कुर्यादेवं तु वित्तमः  ७३

एकहस्तं समारभ्य त्रित्र्यङ्गुलविवर्धनात्
तद् द्विहस्तावसानं स्याद्वस्त्रमञ्जूषाविस्तृतम्  ७४

अथवा तद्वदन्तेन मानयेन्मानवित्तमः
तद्विस्तारसमोत्सेधं चतुराकार पूर्ववत्  ७५

शेषं युक्त्या प्रकुर्वीत वस्त्रमञ्जूषकादि वै
देवानां मानुषाणां च डोलाया लक्षणं तत्  ७६

तत्त्रिकं च समारभ्य षट्षडङ्गुलवर्धनात्
एकविंशद्विधो पादं तुङ्गमष्टकरान्तकम्  ७७

पञ्चषडङ्गुलमारभ्य एकैकाङ्गुलवर्धनात्
सैकार्कमनुमात्रान्तं पादविस्तारमिष्यते  ७८

पादानामुक्तवत्सर्वं यथाकारैरलङ्कृतम्
उक्तवद्भित्तिमानेन एकभित्तिद्विभित्तियुक्  ७९

तदूर्ध्वे वाजनं कुर्यात् पादपादं यथाबलम्
वाजने च द्विवलयं स्याद्धायसेन बलाबलम्  ८०

वितस्त्येकं समारभ्य एकैकेन विवर्धनात्
एकविंशाङ्गुलान्तं स्यात् बलकं विस्तृतं भवेत्  ८१

तत्पादाधिकमेवं च पादोनं द्विगुणायतम्

द्विगुणान्तं तदायामं घनं युक्त्या च योजयेत् ८२

पुरतः पृष्ठतो मध्ये पर्वणं भद्रसंयुतम्
पार्श्वयोर्वारणं कुर्यात् तस्याधोऽक्षं ससंयुतम् ८३

तस्याधो फलकैर्युक्तं सर्वालङ्कारसंयुतम्
आयसे निर्गलं कुर्याद्योजयेद्रज्जुमेव वा ८४

वस्त्रोर्ध्वे चैकहस्तान्तं डोलाया फलकान्तकम्
तदूर्ध्वे वाजनान्तं स्यान्निर्गलायाममीरितम् ८५

निर्गलाग्रे द्वयाग्रं स्यात्फलकावलयान्वितम्
दोलाया लक्षणं प्रोक्तं तुलालक्षणमुच्यते ८६

हस्तद्वयं समारभ्य त्रित्र्यङ्गुलविवर्धनात्
त्रिहस्तान्तं तुलायामं कन्यसादुत्तमान्तकम् ८७

अस्त्रग्राहाद् भूपादीन्सार्वभौमावसानकम्
क्रमात्तु नवधा प्रोक्तं त्रिचतुर्मात्रविस्तृतम् ८८

मध्ये चाग्रविशाले तु तत्तदंशेन हीनकम्
आमध्याग्रं क्षयं कुर्यादग्रयोर्बलयान्वितम् ८९

दण्डायामं च मानेन मध्यजावायतं तथा
दण्डतारं त्रिभागैकं जिह्वामूलविशालकम् ९०

तदष्टांशैकभागं वा षोडशांशोनमेव वा
तत्तदर्धं प्रमाणं वा तत्तज्जीह्वाग्रविशालकम् ९१

अथवा सूचिनिभं कुर्यात्तन्मूलाग्रक्षयं क्रमात्
तदर्धं बहुलं कुर्यात्तन्मूले छिद्रसंयुतम् ९२

तत्पुरे पृष्ठदेशे तु कीलयेत्तोरणाङ्घ्रिकम्
तस्मात्तत्तोरणोत्सेधं जिह्वापादाधिकं भवेत्  ९३

तोरणाग्रे तु वलयं लम्बनार्थं तु योजयेत्
जिह्वायामं समं पत्रं विस्तारं परिकीर्तितम्  ९४

किञ्चिन्निम्न तलं कुर्यात्सुवृत्तार्धाङ्गुलं घनम्
तत्समं चास्य चाष्टं वा तत्पत्रैरष्ठकोत्तरे  ९५

पत्रद्वयसमायुक्तं चायसेनैव कारयेत्
दार्विके चायसे वापि तुला युक्त्या च कारयेत्  ९६

जिह्वां च तोरणं वापि सर्वथा लोहजं भवेत्
बन्धयेन्निर्गलैः पत्रैः द्विदण्डे चोभयाग्रकौ  ९७

तुलालक्ष्यमिदं प्रोक्तं शेषं युक्त्या प्रयोजयेत्
भूपानां दक्षिणे हस्ते मध्यमालक्ष्यमुच्यते  ९८

पत्रतुल्यं युगाङ्गुल्यं पीठे तुङ्गद्वयाङ्गुलम्
नालं द्वादशमात्रं स्यादायाममिति कथ्यते  ९९

पत्रतारं द्वयाङ्गुल्यं पीठतारं तथैव च
पत्रपृष्ठं तदर्धांशं वक्त्रतुङ्गं तु निश्चितम्  १००

नालतारार्धमात्रं स्यात्पीठयुक्तं तुलां घनम्
मूलं तु सूक्ष्मसूचिवत्कुर्यात्तद्विचक्षणः  १०१

मूले च त्रित्रिमारे तु नालताराधं विस्तृतम्
तदूर्ध्वे च त्रिमात्रे तु त्रिधा विस्तृतं भवेत्  १०२

सुवृत्त नालदेशे तु पत्रमूले तु कर्णयुक्

स्निग्धं च पुलकैर्युक्तं हेमरेखैः स्वलङ्कृतम्  १०३

पत्रे तु ब्रह्मदैवत्यं पीठे तु विष्णुदैवतम्
नाले तु रुद्रदैवत्यं सूक्ष्मं चैव सरस्वती  १०४

एवं तु चाधिदैवत्यं कर्णमेवं प्रकल्पयेत्
सर्वेषामपि नीलं च चलं वाप्यचलं भवेत्  १०५

एकहस्तं समारभ्य त्रित्र्यङ्गुलविवर्धनात्
साष्टाष्टपञ्चमात्रान्तं कन्यसादि त्रयं त्रयम्  १०६

मृगनाभिबिलाडस्य पञ्जरस्य विशालकम्
तदर्धं च त्रिपादं च तत्समं पादमाधिकम्  १०७

अत्यर्धेन तस्यैव शान्तिकादिशरांशकम्
होमात्प्रस्तरान्तं वा मस्तकान्तं शिखान्तकम्  १०८

नवाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
त्रयोविंशाङ्गुलान्तं स्यात्कन्यसादि त्रयं त्रयम्  १०९

शुकपञ्जरविस्तारं नवधा परिकीर्तितम्
उत्सेधं पूर्ववत्कुर्यात्समग्रं चापि विस्तृतम्  ११०

सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
त्रयोविंशाङ्गुलान्तं स्यान्नवधा कन्यसादिभिः  १११

चातकस्य चकोरस्य पञ्जरस्य विशालकम्
विस्तारं द्विगुणं वापि त्रिगुणं वा चतुर्गुणम्  ११२

आयाममिति हि प्रोक्तमुत्सेधं पूर्ववद् भवेत्
एतत्तु दण्डकाकारं मरालस्यापि योग्यकम्  ११३

तदेव चतुरश्रं स्यान्नीडं पारावतस्य च
पञ्चविंशाङ्गुलमारभ्य षट्षडङ्गुलवर्धनात्  ११४

सैकाष्टकनन्दमात्रान्तं कन्यसादि त्रयं त्रयम्
पञ्जरं नीलकण्ठस्य नवधा विस्तृतं भवेत्  ११५

सममेवं विशालं स्यादुत्सेधं पूर्ववद् भवेत्
पञ्चाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्  ११६

एकविंशाङ्गुलान्तं स्यात्कन्यसादि त्रयं त्रयम्
कुञ्जरीयकुलालस्य नवधा विस्तृतं भवेत्  ११७

उत्सेधं पूर्ववत्कुर्यात्समतारं समाश्रकम्
सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्  ११८

त्रयोविंशाङ्गुलान्तं स्यात्कन्यसादीनि पूर्ववत्
विशालं नवधा प्रोक्तं खञ्जरीटस्य पञ्जरम्  ११९

समाश्रं चतुरश्रं स्यादुत्सेधं पूर्ववद् भवेत्
पञ्चदशाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात्  १२०

एकदशाङ्गुलान्तं स्यान्नवधा कन्यसादिभिः
कुक्कुटस्य कुलालस्य विशालं तुङ्गं पूर्ववत्  १२१

एकादशाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात्
सप्तविंशाङ्गुलान्तं च कन्यसादि त्रयं त्रयम्  १२२

विशालं पूर्ववत्तं तु नकुलस्यापि पञ्जरम्
चटकस्य पञ्जरस्य तित्तिरीवोक्तवत्कुरु  १२३

नवाङ्गुलं समारभ्य पञ्चविंशाङ्गुलान्तकम्

पूर्ववन्नवधा प्रोक्तं विशालं तुङ्गं पूर्ववत् १२४

विस्तारं तु समाश्रं स्याद् गोधारैः पञ्जरान्वितम्
सार्धहस्तं समारभ्य षट्षडङ्गुलवर्धनात् १२५

अर्धाधिकं त्रिहस्तान्तं कन्यसादि त्रयं त्रयम्
नवधा व्याघ्रनीडं स्याद्विस्तारं परिकीर्तितम् १२६

उत्सेधं पूर्ववत्कुर्यात्समाश्रं तद्विशालकम्
चतुरश्रैकभित्तिः स्याच्चतुःस्तम्भसमन्वितम् १२७

मध्यद्वारं तु संकल्प्य कवाटं चैकमेव च
उत्सेधे तु षडंशं स्यात्पादुकं चैकभागिकम् १२८

पादोच्चं तु युगांशं स्यादेकांशं चोर्ध्वपट्टिका
अथवाष्टांशतुङ्गे तु चैकांशं पादुकोदयम् १२९

षड्भागम् पादतुङ्गं स्यादेकांशमूर्ध्वपट्टिका
चतुष्कं च चतुर्दारु पादुकं चोर्ध्वपट्टिका १३०

कुर्यात्कर्करि कोणे तु पादमूलाग्र योजयेत्
ऊर्ध्वाधो निर्गमं शूले त्रिय्यक्कीलं प्रयोजयेत् १३१

एकद्वित्रिचतुर्मात्रं पादविष्कम्भमिष्यते
द्वित्रिवेदचतुष्पञ्चषट्सप्ताङ्गुलकं तथा १३२

पट्टिकोपानविस्तारं यथायुक्त्या प्रयोजयेत्
ऊर्ध्वाधश्च चतुर्दिक्षु वातायनं समुद्भवेत् १३३

तरङ्गे वेत्रसंयुक्तं कुञ्जराद्यैरलङ्कृतम्
पादानां चतुरश्रं वा चोक्तवत्समलङ्कृतम् १३४

तदेव चोर्ध्वदेशे तु कृत्वा चक्राकृतिस्तथा
सर्वालङ्कारसंयुक्तं कुर्यात्तु सर्वनीडकम्  १३५

चातकस्य चकोरस्य दराडकाकृतिवद् भवेत्
द्वितृतीये चतुष्पञ्च वासं कुर्यात्तु दीर्घके  १३६

शेषं प्रागुक्तवत्कुर्यात्सर्वालङ्कारसंयुतम्
शुकस्य पञ्जरे तुङ्गे चाष्टभाग विभाजिते  १३७

एकांशं पादुकं चैव वेदांशं पादतुङ्गकम्
एकांशं पट्टिकोत्सेधं द्विभागं चोर्ध्वचूलिका  १३८

शेषं तु पूर्ववत्कुर्यात्सर्वालङ्कारसंयुतम्
तदेव मुखभद्रं स्यात्तत्समार्धं त्रिपादकम्  १३९

पूर्वं च द्वित्रिपादं स्यान्मत्तवारणसंयुतम्
नीवितारे चतुर्भागमेकेनावृतलिन्द्रकम्  १४०

परितस्तु लुपायुक्तं खराडहर्म्यादिमरिडतम्
तदेव चोर्ध्वकूटं वा पञ्चांशाधिकोदयम्  १४१

द्विभागेन शिखातुङ्गं त्रिभागं शिखरोदयम्
चतुर्दिक्षु चतुर्नासि सर्वालङ्कारसंयुतम्  १४२

चतुर्दिक्षु सभद्रं वा चैकद्व्यंशेन निम्नकम्
नीडतारं त्रिभागैकं चतुर्भागत्रिभागिकम्  १४३

पञ्चभागत्रिभागं वा भद्रविस्तारमेव च
सर्वालङ्कारसंयुक्तं शेषं प्रागुक्तवन्नयेत्  १४४

एवं तु शुकनीडं स्यादथवा तत्पुरोक्तवत्

देवभूसुरभूपानां वैश्यशूद्रस्य योग्यकम् १४५

पादनूपुरकिरीटमल्लिका
कुराडलं च वलयं च मेखलम्
हारकङ्कराशिरोविभूषराम्
किङ्किराीवलयकर्राभूषराम् १४६

केयूरताटङ्कविशेषकं च
कर्राा च चूडामरािबालपट्टम्
नद्मत्रमालामपि चार्धहारम्
सुवर्रासूत्रं परितः स्तनाभ्याम् १४७

रत्नमालिकदुकूलवीरयुक्
स्वर्राकञ्चुकहिरराग्यमालिका
लम्बहारमपि चूलिकादिभिः
पूरिमादिमपि केशकूटलम् १४८

ब्रह्माविष्णुमहेशशक्रसकलैः दिक्पालकैः किन्नरैः
गन्धर्वैरपि सर्वदेवनिकरैः दुर्गाशचीगौरीभिः
चामुराडादि सरस्वतीगरापतेः षारामातुरस्यापि तत्
संख्यातं सकलं विभूषरागरा नित्यादिनैमित्तिकैः १४९

राजाधिराजैरपि राजसर्वैः
वर्रौश्च तस्तैरपि देवदेव्याः
विहङ्गमैः पञ्जरमेवमुक्तम्
कृतं श्रियेत्यन्यदलद्मिम हेतुः १५०

इति मानसारे वास्तुशास्त्रे भूषरालद्मराविधानं नाम पञ्चाशदध्यायः

त्रिमूर्तिलद्मराम्

ब्रह्माविष्णुमहेशानां लद्मरां वद्मयतेऽधुना

हिरण्यरजतेनैव ताम्रेणैव शिले वापि १

दारुजे सुधे वापि शर्कराभासमृत्तिका
एतैस्तु नवधाद्रव्यैः चोत्तमादि त्रयं त्रयम् २

चलं चाप्यचलं चापि नवद्रव्यैस्तु निर्मितः
लोहजैर्मृत् सुधा चैव शर्कराभासमृत्तिका ३

चलद्रव्यमिति प्रोक्तमन्येषां च चलम् विदुः
चित्राङ्गमर्धचित्राङ्गमाभासाङ्गं त्रिधोच्यते ४

सर्वाङ्गं द्रव्यमानं यच्चित्रमेव प्रकथ्यते
अर्धाङ्गद्रव्यमानं च तदर्धचित्रमिति स्मृतम् ५

अर्धार्धदर्शनं मानमाभासमिति कथ्यते
आभासं पञ्चवर्णेन पट्टवित्त्येव कल्पयेत् ६

चित्रं यच्चोत्तमं प्रोक्तमर्धचित्रं तु मध्यमम्
आभासमधमं प्रोक्तं कुर्यादेवं तु सर्वदा ७

उत्तमं सर्वसिद्धिः स्यान्मध्यमं भोगमोक्षकम्
अधमं भोगसिद्धिः स्यादीश्वरेणैव कीर्तितम् ८

स्थावरं जङ्गमं चैव विविधं बेरमुच्यते
जङ्गमं चोत्सवं भवेत्सर्व स्थावरमिष्यते ९

उत्तमं लोहजं बिम्बं पीठाभासं तु चोत्समम्
स्थानकम् चासना शयनं वैशाखं वैष्णवं तथा १०

मृत्तादिसर्वबेराणां द्रव्यमुक्तं सनातनम्
तत्तद्द्रव्यैस्तु बिम्बानां भिन्नपीठं प्रकल्पयेत् ११

लम्बासने च शयने शिलापीठं तु भिन्नकम्
एककाले कृतं सर्वं सुधामृत्कटशर्करैः १२

बेराणां द्रव्यमित्युक्तं मूर्त्तिध्यानं प्रवक्ष्यते
चतुर्भुजं चतुर्वक्त्रं द्विपादं चाष्टलोचनम् १३

अष्टकर्णसमायुक्तं तनुश्चैकाकृतिस्तथा
उत्तमं दशतालेन मानयेत्त्वङ्गमानकम् १४

स्थानकं चासनं वापि चीरबेरधरं तथा
वरदाभयहस्तं च जटामकुटमण्डितम् १५

कुण्डिका चाक्षमाला च वामे वामे करे क्रमात्
स्रुक्स्रुवधारणं वापि प्राग्वरदाभयान्वितम् १६

मकरलाञ्छितं पुष्पं कुण्डलं वाथ कर्णयोः
यज्ञसूत्रोत्तरीयादि मात्रादोदरबन्धनम् १७

हारोपग्रीवसंयुक्तं बाहुमालाविभूषितम्
केयूरकटकाद्यैश्च कुर्यत्तु मणिबन्धनम् १८

कटकत्रयसंयुक्तं नलकाकटकान्वितम्
कटिसूत्रादिपट्टं स्यान्नीव्यं चलनसंयुतम् १९

रत्नाङ्गुलीयकौ हस्तौ पादं जालसरत्नकम्
ललाटे वृत्ततिलकं स्याच्चन्दनागरुमेव च २०

सर्वाङ्गं हेमवर्णं स्यान्नलकान्तं तु चीरयुक्
पार्श्वयोः शक्तिकोपेतं दक्षिणे तु सरस्वती २१

वामपार्श्वे तु सावित्री सर्वाभरणभूषितम्

एवं पितामहं प्रोक्तं कुर्याच्छास्त्रविद्बुधः  २२

चतुर्भुजं द्विनेत्रं च किरीटमकुटान्वितम्
पीताम्बरधरं युक्तं श्यामवर्णाङ्गशोभितम्  २३

सर्वे वक्षःस्थले कुर्यात्तदूर्ध्वे श्रीवत्सलाञ्छनम्
उत्तमं दशतालेन चाङ्गमानं च मानयेत्  २४

कटकं वा गदाधारं चोर्व्यामाश्रितमेव वा
अथवा वरदहस्तं स्यात्पुरतो वामहस्तके  २५

दक्षिणे त्वभयं पूर्वे सव्ये चापर चक्रयुक्
अपरे वामहस्ते तु पाञ्चजन्यावधारणम्  २६

तत्समं कर्णपत्रं स्यात्कुर्यान्मकरकुण्डलम्
प्रसन्नवदनं तुङ्गं नासि दीर्घाक्षिशोभितम्  २७

हारोपग्रीवसंयुक्तं यज्ञसूत्रोत्तरीयकम्
रत्नोदरबन्धं स्याद् बाहुमालाविभूषितम्  २८

कटकं कटिसूत्रं च केयूरं रत्नपूरितम्
रत्नाङ्गुलीयकैर्युक्तं पादजालविभूषितम्  २९

नलकान्तं चलान्तं स्यात्पीताम्बरविलम्बनम्
शिरश्चक्रं शिरःपृष्ठे युक्तं सर्वाङ्गभूषणम्  ३०

द्वयोर्जङ्घावसानं स्याद् वनमालामनोहरम्
एवं तु विष्णुमूर्तिः स्याच्छक्तियुक्तं तु पार्श्वयोः  ३१

त्रिभूमिं दक्षिणे वामे स्थावरे जङ्गमेऽपि वा
कुर्यादासनं वापि स्थानकं चापिमे व च  ३२

चतुर्भुजं त्रिणेत्रं च जटामकुटमण्डितम्
व्याघ्रचर्माम्बरं जानु चोर्ध्वे च समलङ्कतम् ३३

नीव्याञ्चलं च संयुक्तं रक्तवर्णाङ्गशोभितम्
हारोपग्रीववक्षस्तु सालमालावलम्बनम् ३४

करोटिरत्नबन्धं स्याद् रुद्रबन्धमथापि वा
पत्रोदरं च बन्धं वा रत्नोदरनिबन्धनम् ३५

कटकं कटिसूत्रं स्यात्केयूरं पूरिमान्वितम्
बाहुभूलाभिदामैश्च सर्वाभरणभूषितम् ३६

वामे तु लम्बपत्रं स्यादवामे करकुण्डलम्
प्राचभयहस्तं सर्वे वरदं वामहस्तके ३७

अपरे वामसव्ये तु हरिणद्रङ्कधारणम्
मकुटं वामपार्श्वे तु चन्दरेखासमन्वितम् ३८

दक्षिणे चार्कपुष्पैश्च नागं गङ्गा जटान्तरे
दूर्वाभिः सुवर्णसिन्दुरं पुष्करं स्यान्मकुटान्तरे ३९

मध्ये चान्वितवक्त्रं स्याल्ललाटे चैकनेत्रयुक्
ग्रीवस्य वामपार्श्वे तु कालकूटसमन्वितम् ४०

यज्ञसूत्रोत्तरीयं च सर्वरत्नाङ्गुलीयके
स्थानकं चासनं वापि पाद नूपुरशोभितम् ४१

एवं तु रुद्रमूर्तिः स्याद् वामभागे तु पार्वती
उत्तमं दशतालेन मानयेत्त्वङ्गमानकम् ४२

देवीनामपि सर्वेषां मध्यमं दशतालकम्

पद्मपीठं महापीठं त्रिमूर्तीनां च योजयेत्  ४३

प्रभाव तोरणं वापि कल्पवृक्षं च संयुतम्
एवं तु रुद्रविष्णूनां कुर्यात्तत्तु विधिवत्ततः  ४४

सर्वालङ्कारसंयुक्तं देवं ध्यात्वा त्रिमूर्तिनम्
अन्यान्यनुक्तं सर्वेषां शास्त्रमार्गेण योजयेत्  ४५

उत्तमं दशतालवशात्तु यत्
ब्रह्माविष्णुशिवसकलाङ्गकैः
स्थावरे च जङ्गमके
शिल्पिभिः कुरु तात्क मुनिवरैः  ४६

इति मानसारे वास्तुशास्त्रे त्रिमूर्तिलक्षणविधानं नाम एकपञ्चाशदध्यायः

## लिङ्गविधानम्

लिङ्गमानविधिं सम्यगलक्षणं वक्ष्यतेऽधुना
शैवं पाशुपतं चैव कालामुखं महावृतम्  १

वामं च भैरवं चैव लिङ्गवा मान षड्विधम्
समकर्णं वर्धमानं शिवाङ्कं स्वस्तिकं तथा  २

एतच्चतुर्विधं लिङ्गं विप्रादीनां च योग्यकम्
समकर्णं भूसुराणां भूपानां वर्धमानकम्  ३

वैश्यानां च शिवाधिक्यं परेषाम् स्वस्तिकं भवेत्
विप्राणां सर्वलिङ्गं च कुर्याद्दोषो न विद्यते  ४

शिवाधिकं स्वस्तिकं प्रोक्तं लिङ्गं भूपस्य योग्यकम्
स्वस्तिकं च शिवाधिक्य वैश्यानामपि योग्यकम्  ५

शुद्धगर्भगृहे द्वारे प्रासादस्य विशालकम्

अधिष्ठानोदये पादं तुङ्गमानं तथैव च ६

हस्तमानाङ्गुलेनैव यजमानोदयेन च
एतत्तत्तद्विधिः प्रोक्तं प्रत्येकं बहुधा भवेत् ७

श्रेष्ठादीनि कनिष्ठान्तं प्रत्येकं त्रित्रिमानकम्
गर्भे नन्दविभागे तु एकैकं लिङ्गतुङ्गकम् ८

केचित्तदेकभागे तु नवभाग विभाजिते
तदेकाशीति लिङ्गस्य कन्यसादुत्तमान्तकम् ९

प्रत्येकं तत्त्रिधामानमेकैकं लिङ्गतुङ्गकम्
कन्यसा गर्भतारार्थं त्रिपादं मध्यमं भवेत् १०

गर्भतारसमं श्रेष्ठं त्रिविधं लिङ्गतुङ्गकम्
गर्भगेहे तु मानं स्याल्लिङ्गतुङ्गं प्रकल्पयेत् ११

शुद्धद्वारोदयं नन्दभागं कृत्वा विशालकम्
एकैकं लिङ्गतुङ्गं स्यात्कन्यसादीनि पूर्ववत् १२

प्रत्येकं तु त्रिधा मानं साष्टादश च लिङ्गकम्
प्रासादस्य विशाले तु गर्भगेहोक्तवद्भवेत् १३

अधिष्ठानसमं श्रेष्ठं त्रिपादं मध्यमं भवेत्
तदर्धं कन्यसं प्रोक्तं त्रिविधं लिङ्गमीरितम् १४

अथवा नवभागं स्यान्नवलिङ्गमुदाहृतम्
कन्यसादुत्तमान्तं स्यात्प्रत्येकं पूर्ववद् भवेत् १५

पादोदयं नवांशं नवधा लिङ्गमानकम्
तदेवं चैकभागे तु चतुर्भाग विभाजिते १६

एकैकं लिङ्गतुङ्गं स्यात्षट्त्रिशं लिङ्गतुङ्गकम्
कन्यसादुत्तमान्तं स्यात्सर्वं प्रागुक्तवन्नयेत् १७

हर्म्यतुङ्गं देवांशं स्यात्कन्यसादि त्रयं त्रयम्
एवं तु नवलिङ्गं स्यान्नवभेदोदयं भवेत् १८

केचिद्विमानतुङ्गे तु नन्दनन्दांशकं भवेत्
एकैकं लिङ्गतुङ्गं स्यान्नन्दनन्दोदयं भवेत् १९

कन्यसादुत्तमान्तं स्यात्पूर्ववल्लिङ्गमिष्यते
एकहस्तं समारभ्य हस्तैकेन प्रवर्धयेत् २०

एकैकं लिङ्गतुङ्गं स्यान्नवहस्तावसानकम्
एवं तु नवतुङ्गं स्यात्कन्यसादि त्रयं त्रयम् २१

करं त्रिपादमारभ्य तत्समेन विवर्धनात्
पादोनसप्तहस्तान्तं पूर्ववन्नवलिङ्गकम् २२

अथवा हस्तमारभ्य सार्धहस्तेन वर्धनात्
सार्धवेदकराष्टं स्यान्नवलिङ्गोदयं भवेत् २३

पादहस्तं समारभ्य पादहस्तेन वर्धनात्
पादाधिकद्विहस्तान्तं नवलिङ्गं तु पूर्ववत् २४

जातिच्छन्दं विकल्पं च आभासं तु चतुर्विधम्
एकहस्तवशात्सर्वं कन्यसादि त्रयं त्रयम् २५

छन्दादीनां तु मानं स्यात्षट्त्रिंशल्लिङ्गतुङ्गकम्
एकादशाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात् २६

सप्तविंशाङ्गुलान्तं स्यान्नवधा लिङ्गतुङ्गकम्

द्वादशाङ्गुलमारभ्य षट्षडङ्गुलवर्धनात् २७

षष्ट्यङ्गुलावसानं स्यान्नवधा लिङ्गमानकम्
पञ्चविंशाङ्गुलमारभ्य षट्षडङ्गुलवर्धनात् २८

त्रिसप्ततित्रिमात्रान्तं नवधा लिङ्गतुङ्गकम्
सर्वेषां कन्यसं श्रेष्ठं पर्यन्ताङ्गुलमानकम् २९

यजमानस्य मेढ्रान्तं नाभ्यन्तं हृदयान्तकम्
स्तनान्तं बाहुसीमान्तं हन्वन्तं नासिकान्तकम् ३०
नेत्रान्तं समतुङ्गं स्यान्नवलिङ्गोदयं भवेत्
अथवा तुङ्गमाने तु नवभाग विभाजिते ३१

एकैकं लिङ्गतुङ्गं स्यात्कन्यसादि त्रयं त्रयम्
नवत्यंशविधं लिङ्गं यस्समानवशाद्विदुः ३२

बहुधा स्थाप्यलिङ्गं वा नवलिङ्गं परिसंख्यया
अथ हस्तादयमानं सर्वलिङ्गेषु कल्पयेत् ३३

पञ्चादशाङ्गुलं मानं यन्मानं नवलिङ्गके
सप्तादशाङ्गुलान्तं च पञ्चादशाङ्गुलमारभेत् ३४

स्थापयेत्पञ्चलिङ्गे तु इत्यूर्ध्वेन तु कारयेत्
तत्त्रिपादकरादूर्ध्वे चाधिकं सर्वतुङ्गके ३५

सर्वेषां चैकहर्म्ये तु एकैकलिङ्गे तु संमतम्
बहुधा सर्वलिङ्गेषु तत्त्रिकर्णं न कारयेत् ३६

द्विकर्णं बहुलिङ्गे तु त्रिकर्णं चैकलिङ्गके
लिङ्गतुङ्गमिति प्रोक्तं तद्विशालमिहोच्यते ३७

त्रिचतुष्पञ्चाङ्गुलान्तं स्याद्बहुलिङ्गे तु विस्तृतम्
अथवा तुङ्गमाने त्रिचतुष्पञ्चभागिकम्  ३८

तत्तदेकांशविस्तारं बहुलिङ्गविशालकम्
नागरं द्राविडं चैव वेसरं च त्रिधा मतम्  ३९

षट्सप्ताष्टाङ्गुलं चैकलिङ्गतारमिति स्मृतम्
नवपङ्क्तिरुद्रमात्रं स्यात् समलिङ्गविशालकम्  ४०

भानुएकाङ्गुलं चैव चतुर्दशाङ्गुलमेव च
एवं तु चैकलिङ्गं स्याद्विस्तारं परिकीर्तितम्  ४१

पञ्चादशाङ्गुलं चैव षोडशाङ्गुलमेव च
विस्तारदशाङ्गुलं चैव लिङ्गानामिति विस्तृतम्  ४२

अष्टादशाङ्गुलं चैव नवपङ्क्त्यङ्गुलान्तकम्
विंशत्यङ्गुलं चैव लिङ्गतारं त्रिधा मतम्  ४३

एकविंशत्यङ्गुलं चैव द्वाविंशतिकाङ्गुलम्
त्रयोविंशाङ्गुलं चैव त्रिधा लिङ्गविशालकम्  ४४

चतुर्विंशाङ्गुलं चैव पञ्चविंशाङ्गुलं तथा
षड्विंशाङ्गुलं चैव विशालं त्रिविधं मतम्  ४५

सप्तविंशाङ्गुलं चैव अष्टविंशाङ्गुलं तथा
नवविंशतिमात्रं स्याल्लिङ्गतारमिति स्मृतम्  ४६

अथवा त्रिंशदङ्गुल्यमेकत्रिंशतिमात्रकम्
द्वात्रिंशाङ्गुलं चैव लिङ्गतारमिति स्मृतम्  ४७

कन्यसादुत्तमान्तं स्यात्प्रत्येकं त्रित्रिमानकम्

एवं तु नवधा लिङ्गं प्रत्येकं नागरादिभिः ४८

अथवा तुङ्गमानं तु चतुष्पञ्चषडंशकम्
तत्तदंशैकभागेन चैकलिङ्गविशालकम् ४९

नागरं द्राविडं चैव वेसरं च त्रिधा मतम् ५०

इष्टायामे द्व्यंशसत्रिंशदंशम्
कृत्वा क्रमादधिकं तदंशकम्
विस्तारं तत्कन्यसादि त्रिधा
युक्त्या धीमान् वेसरादीनि कुर्यात् ५१

बहुलिङ्गोदये सर्वे ब्रह्मभागं विनोदयम्
द्विभागं समकन्यंस्याद्विष्णुरुद्रांशं तत्समम् ५२

अथवा तुङ्गनवमं स्याद्वेद नारायणोदयम्
पञ्चांशं शिवोदयं स्याद् वर्धमानमिति स्मृतम् ५३

अष्टादशांशकं तुङ्गे वैष्णवं चाष्टभागिकम्
दशांशं शिवोदयं स्याच्छिवाधिकं लिङ्गमीरितम् ५४

उत्सेधे दशभागे तु विष्णुतुङ्गं षडंशकम्
वेदांशं शिवांशं स्यात्स्वस्तिकं बहुलिङ्कके ५५

कमलजहरिहरांशं तत्समं चैकलिङ्गे
मनुवसुनवभागैस्तुङ्गमष्टत्रियाङ्गकम्
कमलजहरिहरांशं सर्वतोभद्रलिङ्गम्
द्विजकुलनृपतिपूज्यं वर्धमाना चैव ५६

पञ्चपञ्चषडंशकोन्नतम्
ब्रह्माविष्णुशिवभाग तत्क्रमात्

तुङ्गमिष्टयुगांशके कृते
तच्छिवाधिक योग्यकम्  ५७

स्वस्तिकस्य शतषट् शिरोन्नतम्
षोडशांशविधि वैष्णवं तथा
भद्रभागविधिवत्समाचरेत्
संपदार्थमिव शूद्रयोग्यकम्  ५८

वेदाश्राभं ब्रह्मभागे च मूले
चाष्टाग्राभं मध्यमे विष्णुभागे
वृत्ताकारमग्रके तच्छिवांशम्
कुर्यात्तु सर्वं चतुर्लिङ्गमेतत्  ५९

वेदाश्रं वस्वश्रकं वृत्तं चैवम्
प्रोक्तानेकलिङ्गाग्र मूले
वृत्ताकारं चाग्रके रुद्रभागे
कुर्यादेवं शिल्पिविद्भिरेव  ६०

एकानेकं चोक्तलिङ्गे शिवांशे
कुर्याद्धारा षोडशादिद्वयेन
वृद्ध्या धारायत् सहस्रावधानम्
धारालिङ्गे चैवमुक्तं तन्त्रैः  ६१

पञ्चषड्मुनिरष्टविस्तृते
द्विद्विभाग शिरमानतुङ्गकम्
तत्तदङ्गकृततच्छिरोदये
द्व्यंशयुग्मधिरोपमानकम्  ६२

वर्तिकस्तमिव तच्छिखं बुधैः
युदार्ध त्रिपुरुषा कृतिस्तथा
अर्धचन्द्रमिति चित्रवद् भवेत्

शिल्पिभिः प्रवर वर्णतः क्रमात् ६३

पूजांशे तत्तुङ्गमष्टद्वयांशम्
कृत्वांशेन द्वित्रिवेदान्विसृज्य
तस्याधस्तल्लक्षणोद्धारशेषम्
शिल्पिः कुर्यान्नागरादिः त्रिधैव ६४

तत्तचैकार्धभागं मध्यभागम्
विस्तारं स्याल्लक्षणोद्धारणे च
अग्रे चैकद्व्यंशत्रिशेन तुङ्गम्
तस्मात्पार्श्वे भूपयेत्पृष्ठकान्तम् ६५

कुर्यादेकां पिण्डिकां तंतु पार्श्वे
चैकद्वित्र्यंशकं चान्तरं च
पृष्ठे युक्त्या कारयेद् विष्णुकान्तम्
एवं युक्त्या नागरादिक्रमं स्यात् ६६

एकानेकलिङ्ग धारणांशे
कुर्याल्लिङ्गे मूर्ध्निवत्कुड्मलं वा
छत्राकारं वाथ मूर्ध्निप्रदेशे
युक्त्या धीमानुद्धरेद्वधस्तात् ६७

लिङ्गादीनां स्थापयेत्सर्वहर्म्ये प्रागुक्तवत्क्रमात् ६८

शुद्धगर्भगृहे मध्ये सप्तभागविभाजिते
मध्ये ब्रह्मपदं चैव परितश्चाष्टदिवौकसः ६९

मानुषांशं तु तद्बाह्ये परितः षोडशांशकम्
चतुर्विंशांशकं बाह्ये परितः पैशाचमेव च ७०

मध्ये ब्रह्मपदे सप्तसप्तभाग विभाजिते

ब्रह्मांशे मध्यमे ब्रह्मसूत्रं तत्परिकल्पयेत्  ७१

तद्वामे विष्णुसूत्रं स्यात्तद्वाह्ये परिकल्पयेत्
तत्सूत्रात् द्वयोर्मध्ये शिवसूत्रं प्रकल्पयेत्  ७२

ब्रह्मविष्णुसूत्रं स्यान्मध्ये च शिवसूत्रकम्
एवं तु चैकलिङ्गं स्यात्स्थापयेच्छिल्पिवित्तमः  ७३

बहुलिङ्गप्रतिष्ठा चेत्तत्तदेकापदोक्तवत्
कुर्यादेव पदे विष्णुं बहुधा चैकमेव वा  ७४

गर्भगेहस्थले धारनीलमध्ये समं भवेत्
अज्ञानादधिकं चेन्निम्नं चेत्सर्वदोषदम्  ७५

तस्मात्परिहरेत्सर्वदेवतास्थापनं बुधः
बेरस्यैकशिला प्रोक्तं लिङ्गानां तच्चतुःशिला  ७६

नन्द्यावर्तकृतिः स्थाप्य तथा चैकाश्मना भवेत्
अथो पाषाणकूर्माख्यं चोर्ध्वधारमिति स्मृतम्  ७७

इत ऊर्ध्वं शिलादौ पीठके वापि चोदयम्
उक्तवत्कल्पयेच्छिल्पी हीनाधिक्यं न कारयेत्  ७८

स्थापयेल्लिङ्गबेरैश्च स्थपतिः स्थापकैः सह
लिङ्गानां पीठकानां च देवदेव्याश्च हर्म्यके  ७९

शिलासंग्रहणं सम्यग्लक्षणं वक्ष्यतेऽधुना
पर्वते वा वने वापि स्थपतिः स्थपकैः सह  ८०

प्रभाते तु समुत्थाय कर्ता चानुचरैः सह
मार्गके चोक्तवत्सर्वं पार्श्वे तु शकुनानि वै  ८१

सुमुहूर्ते सुलग्ने च शिलासंग्रहणं भवेत्
उक्तवच्च रथारोप्य शिल्पशालां प्रविश्यति ८२

पत्रावलीढकाश्मं च अनलावटे कदाश्मना
आतपेनावलीढं चेद् वर्जयेत्सा शिला भवेत् ८३

यत्पूर्वोत्तराग्रं ज्ञात्वा मूलं दक्षिणपश्चिमे
अधोभागा मुखं ज्ञात्वा शयने चापरोर्ध्वकम् ८४

पूर्वाश्रं च शिला सर्वे दक्षिणे सव्यपार्श्वके
उत्तरे वामभागं स्यादुत्तराग्रशिले विदुः ८५

पूर्वे तु दक्षिणं पार्श्वे पश्चिमे वामपार्श्वकम्
ईशानाग्रशिलानां तु मूले नैर्ऋत्यदेशके ८६

अन्यकोणेषु सर्वेषु मूलमग्रं न विद्यते
दिक्षु दीर्घशिला सर्वाः पुंशिलानां प्रकीर्तितम् ८७

चतुष्कोणेषु दीर्घं स्याच्छिलाषण्डः प्रकीर्तितः
प्रभूतं च स्थिता सर्वं पृथिव्याकाशायतं तथा ८८

ऊर्ध्वाग्रमध्यो मूलं प्रागुक्तदिक् तथैशके
तत्तदुन्नतवक्त्रं च यदि स्थापनं भवेत् ८९

तत्पार्श्वं पूर्ववज्ज्ञात्वा तस्याकारमिहोच्यते
मूलमग्रं च मध्यं च समाकारं तु पुंशिला ९०

स्थूलमूलं कृशाग्रं स्यात्स्त्रीशिला तु प्रकाशिता
स्थूलाग्रं च कृशं मध्ये स्थूलं नपुंसकं शिला ९१

चतुरश्रं पुंशिला प्रोक्तं वृत्तं स्याद् वनिता शिला

बहुधा गृह्यशृङ्गं स्यान्नपुंसकं तमुदाहृतम्  ९२

कांसकाध्वनिनादं स्यात्स्त्रीशिला तु प्रकीर्तिता
रत्नभाराडध्वनिनादं शिला च पुरुषं स्मृतम्  ९३

निर्ध्वनि च शिला सर्वं नस्त्री नपुमान् विदुः
तालध्वनिनादं स्याच्छिला वल्याः प्रकीर्तितम्  ९४

महिषध्वनिसंयुक्ता शिला वृद्धाः प्रकीर्तिता
पूर्वोक्तवध्वनीनादं यावना च शिला भवेत्  ९५

शिलासर्वेषु वृत्तं च शिलाञ्छा विवर्धयेत्
पुंशिलेन पुमान् लिङ्गं कुर्याद्रिखां विवर्जयेत्  ९६

शक्तीनां पीठकानां च स्त्रीशिलासंग्रहं भवेत्
प्रासादादीनि सर्वेषां मपुंसकशिला भवेत्  ९७

श्वेतरक्तं च पीतं च शिला कृष्णं यथाक्रमात्
द्विजातीनां च वर्णानां कुर्याल्लिङ्गादिना बुधः  ९८

सर्वेषाम्मपि वर्णानां सा शिला कृष्णमेव वा
सर्वेषां वर्णपाषाणे कृष्णरेखां विसर्जयेत्  ९९

श्वेतं च स्वर्णरेखं च सर्वसंपत्करं शुभम्
शिलासंग्रहणं प्रोक्तं शेषमर्हमागमोक्तवत् स्मृतम्  १००

स्वयम्भुलिङ्गसर्वेषां लक्षणं वक्ष्यतेऽधुना
उद्धूतं दैवकं चैव मानुषं गाणवं तथा  १०१

एवं चतुर्विधं लिङ्गं स्वयम्भुरिति कीर्तितम्
तत्स्थाप्य स्वयमुद्भूतं स्वयम्भूरिति कीर्तितः  १०२

देवैश्च स्थापितं लिङ्गं दैविकं लिङ्गमुच्यते
मानुषैः रचितं लिङ्गं मानुषं चेति कथ्यते १०३

अन्येषु रचितं लिङ्गं चार्षञ्चैव कथ्यते
गणैश्च पूजितं लिङ्गं गणं चेति प्रकथ्यते १०४

उद्धृतं श्वेतवर्णं चेद् दैविकं रक्तवर्णकम्
मानुषं पीतवर्णाभं कृष्णवर्णं च गाणकम् १०५

आर्षं युक्तसूत्रं स्यात् स्वस्तिकाकृतिरेव वा
उद्धृतं शङ्कराकारं रुद्राक्षरं दैविकम् १०६

नगर्दभं गाणवं स्याल्लिङ्गाकारमिहोच्यते
उद्धृतस्तालमूलं स्यात्कृशाग्रं वा समाधिकम् १०७

अन्यथा सर्वलिङ्गानां स्थूलाग्रं कृशमूलकम्
दैविकं डिण्डिमाकारं मानुषार्द्रपुषा कृतिः १०८

उद्धृतं पर्वताकारं कूश्माण्डाकार गाणवम्
पुण्यनद्यद्रिदेशे तु लिङ्गसंग्रहणं भवेत् १०९

एवं परार्थं लिङ्गं स्याच्छेषमागमतोक्तवत्
आत्मार्थं लिङ्गपीठस्य लक्षणं पठ्यतेऽधुना ११०

पीठतुङ्गं समं वाथ त्रिपादं चार्धमेव वा
लिङ्गायाममिति प्रोक्तं नाभं पीठविशालवत् १११

नदीपर्वतदेशे तु लिङ्गसंग्रहणं भवेत्
श्वेतरक्तं च पीतं च कृष्णवर्णं चतुष्टयम् ११२

भूसुरादिचतुर्णां तु वर्णानां लिङ्गतः क्रमात्

अथवा कृष्णवर्णं च तत्सर्वं चार्षकं भवेत्  ११३

अतिकर्षतलिङ्गं यद्भूदेव्यं च शम्भुरुच्यते
तत्र स्वयम्भुलिङ्गे तु विरूपं च विशेषतः  ११४

सम्यक् सूत्रे च संकुर्याद्यावल्लक्षणमुच्यते
तल्लिङ्गं मानुषं प्रोक्तं तत्पर्वतलिन्द्रके  ११५

रेखाबिन्दुकलङ्काङ्कं वर्जयेत्तद् विशेषतः
सौवर्णबिन्दुरेखाढ्यं सर्वसंपच्छुभायतम्  ११६

ईषत्तदुन्नतं लिङ्गं हर्म्यवत्स्वयंभुलिङ्गकम्
वृत्तं वायतवृत्तं वा नाभे चरणायते  ११७

किञ्चित्तदुन्नतं वर्त निम्नं तत्पृष्ठमिष्यते
स्थूलाग्रं यत्कृशं मूले लिङ्गं सर्वं निशाकृति  ११८

स्वभावदन्तोष्ठयुक्तं चेल्लिङ्गं तन्मानुषं भवेत्
सिकतारोपणं ज्ञात्वा चैवं स्वयम्भुलिङ्गकम्  ११९

विनारक्तं विनाकृष्णं सैकते लिङ्गमिष्यते
सर्वं स्वयम्भुलिङ्गेषु आत्मार्थं च परार्थके  १२०

नसंज्ञेषु च रक्तेषु लिङ्गस्योक्तेर्चनं भवेत्
उक्तलिङ्गप्रकारेण शेषमागमतोक्तवत्  १२१

आत्मार्थार्चनलिङ्गस्य वक्ष्यते पीठलक्षणम्
कर्तृनाशं परित्यज्य किञ्चिच्चैव शिला भवेत्  १२२

जलानलातपवातस्पृष्टाश्मानि विवर्जयेत्
पृथ्वीगर्भस्थितं स्निग्धं बिन्दुरेखां विवर्जयेत्  १२३

कलितं चैकभागं स्यात्स्त्रीशिला तु प्रकीर्तितम्
नपूरं सूक्ष्मदष्टं च शिला भवेत् १२४

सम्यक्कृष्णनीलाः प्रोक्ताः वर्णमन्यं विवर्जयेत्
कर्षपाषाणवत्स्वर्णरेखारोपणमिष्यते १२५

एवं परिक्षिते पश्चात् शिलासंग्रहणं भवेत्
एवं लक्षणयुक्तस्य शिलापीठं प्रकुर्वते १२६

कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलमध्यमे
पर्वतायतनस्ताहमङ्गुली त्रिविधं भवेत् १२७

यवेन कल्पिते वापि चाङ्गुलेवापि कल्पयेत्
कर्तृनक्षत्रमित्रं हि मानं युक्त्या प्रयोजयेत् १२८

परार्थे वा स्वयम्भूनां मानाङ्गुलवशेन वा
आयाममिति षड्वर्गमित्थं पीठोदयं भवेत् १२९

लिङ्गमानं वियुक्तं चेत्कुर्यात्तु मानुषादीनाम्
तत्त्रिभिर्यवं समारभ्य द्विद्व्यङ्गुलविवर्धनात् १३०

पञ्चविंशाङ्गुलान्तं स्यात्पीठविस्तारमेव च
अङ्गुलत्रयमारभ्य द्विद्व्यङ्गुलविवर्धनात् १३१

पञ्चविंशाङ्गुलान्तं स्यात्पीठविस्तारं विधीयते
षड्वर्गादिशुभं कुर्याद्यथाभागादि संभवम् १३२

तन्मानं पीठविस्तारं कृत्वा तु चतुरंशकम्
एकांशं लिङ्गमानं स्याच्छेषं तत्पीठतुङ्गकम् १३३

अथवा पञ्चभागांशं तल्लिङ्गोदयमीरितम्

शेषं तु पूर्ववत्पीठं तुङ्गं कुर्याद् विचक्षणः १३४

पीठतारसमं लिङ्गं मध्यनालाग्रकान्तकम्
पीठतारं द्वयं कृत्वा एकांशं नालविस्तृतम् १३५

तच्चतुर्भागिकैकांशं हीनं नालाग्रतारकम्
केचिद् द्वित्र्यंशमेवं स्यान्मूलाग्रान्तक्षयं क्रमात् १३६

तद्विशालत्रिभागैकं प्रणाले विस्तारमेव वा
पीठतारचतुर्थांशं त्रियंशं वृतवारिका १३७

पीठतारसमं चैव लिङ्गं तत् परिणाहकम्
एवमात्मार्थलिङ्गेषु स्वयम्भुवं परार्थके १३८

कुर्यादनेकलिङ्गेषु चैकलिङ्गं न कारयेत्
पीठतुङ्गं त्रिधा कृत्वा एकांशं गलतुङ्गकम् १३९

अथवा पञ्चद्वयांशं वा गलतुङ्गं विशेषतः
शेषं तु चोर्ध्वाधो बन्धं पट्टजन्मसररुहम् १४०

एकांशं जन्मतुङ्गं तु एकभागैकं वेत्रकम्
तत्समं पङ्कजाग्रं स्यात्पद्मकुक्षिर्द्वयांशकम् १४१

तदष्टांशैकवेत्रं स्यात्तत्समं चोर्ध्ववेत्रकम्
पूर्ववत्कर्णसंयुक्तमूर्ध्वखण्डमध उक्तवत् १४२

सपादांशाधिकं हीनं वा यन्मानोरम्यं मानयोः
पीठतारोदयं नालं दीर्घं प्रागुक्तवन्नयेत् १४३

वृत्ताकारं तु पीठं स्यादन्यथाकृतिं वर्जयेत्
पीठतुङ्गे तु गन्धं स्याल्लिङ्गनाहस्य सादृशम् १४४

लिङ्गतुङ्गविशेषं स्याद्वेशनं तन्नयेद्बुधः
मानयेद्बहुलिङ्गे तु चैकानेकादिकैः १४५

एतत्तु सर्वलिङ्गेषु चात्मार्थं च परार्थके
तन्मध्ये स्थापयलिङ्गमादौ रत्नानि विन्यसेत् १४६

लिङ्गस्य परितो रन्ध्रे स्वर्णवर्णावबन्धनम्
अभावे रजतेनैव ताम्रं वायसमेव च १४७

कारयेच्छिल्पिना सम्यग् लिङ्गपीठोदढौः सह
एकानेकलिङ्गानां परार्थे त्वष्टबन्धनम् १४८

केचित्त्रिबन्धनं कुर्याद् द्रव्यैश्च गुग्गुलादिभिः
रत्नलिङ्गैश्च सर्वेषां वर्णपीठं प्रकल्पयेत् १४९

अथवा रत्नपीठं वा रक्तलिङ्गेषु पूर्ववत्
यद्यद्द्रव्येण लिङ्गं तत्तद्द्रव्येण पीठकम् १५०

नवरत्नैश्च संयुक्तं स्वर्णपीठं प्रकल्पयेत्
यत्तद्रत्नैश्च यल्लिङ्गे तत्तन्नाम्नैव नामकम् १५१

पीठं तु लिङ्गके वापि नवरत्नैर्विशेषतः
एककर्णं चैकलिङ्गं बहुभिश्चैकलिङ्गकम् १५२

वज्रलिङ्गमिति प्रोक्तं रत्नानि मिति कथ्यते
एकं वा बहुरत्नं वा नवरत्नैश्च संयुतम् १५३

लिङ्गं यदुक्तं स्वर्णेन पीठे रत्नानि योजयेत्
अथवा केवलं स्वर्णं पीठं वा कारयेद् बुधः १५४

स्वर्णलिङ्गमिति प्रोक्तं लक्षणं पूर्ववद् भवेत्

ग्राचार्यहस्तेन वा लिङ्गं शिष्यस्तु नाहलिङ्गवत्  १५५

पश्चात्पूजां तथा कुर्यादाचार्योक्तोपदेशवत्
ग्रथोक्तलिङ्गपूजायां फलं वक्ष्ये यथाविधि  १५६

नदीपर्वतलिङ्गानां कैलासारोहणं भवेत्
इहलोकस्य पूज्यत्वं भुक्तिमुक्तिफलप्रदम्  १५७

रत्नलिङ्गस्य पूजायां फलं मुक्तिप्रदायकम्
स्वर्णलिङ्गार्चनमेवं फलं स्वर्गापवर्गकम्  १५८

स्वर्णपीठं तु तल्लिङ्गं मुक्तावलिघनमथापि वा विदुः
कर्तृमानसवशात्कल्पयेत्प्रशस्तमिह दोषवर्जितम्  १५९

तोये वा मण्डले वापि पुष्पे वा उत्पलेऽपि वा
सिकते वाथ हस्ते वा चाक्षतैर्वा गुलैस्तथा  १६०

मोदके वाथ पिष्ठे वा गोमये वा यथेष्टकम्
सद्यः पूज्यं रचेल्लिङ्गं प्रोक्तं तत्क्षणिकं भवेत्  १६१

तानि लिङ्गानि सर्वेषां यथालिङ्गाकृतिर्भवेत्
ध्यात्वा दक्षिणका लिङ्गं मानं सर्वं न कारयेत्  १६२

दीर्घे लिङ्गमायादिषड्वर्गशुद्धिं कुर्यात्सर्वथोक्तवत्
मानलिङ्गे चान्यस्वायम्भुवादिमानं च युक्तं तथायादीनि सर्वं न कुर्यात्
१६३

बन्धाष्टनन्दवसुनन्दयुगेन बुद्ध्या
चाष्टार्कपङ्क्तितुरगैर्मुनिभिर्विहन्यात्
योन्यश्च वृद्धिभयं च तु वारमंशम्
लिङ्गैकेन कुर्यात्तु परार्थतुङ्गे  १६४

ध्वजधूमसिंहशुनकवृषगर्दभाश्च
दन्ती च काकश्च वसुयोनिः यथाक्रमेण
ध्वजसिंहहस्तिवृषयोनिः शुभं प्रशस्तम्
अन्येषु योनिरशुभमुदितं पुराणैः १६५

शस्त्र वृद्धिर्मरणं शुभावहम्
चक्षुर्बुद्धिरूपं सुमङ्गलम्
श्रीकरं च सुखदं सुवृद्धिदम्
पुष्कलाय रवि तत्फलं क्रमात् १६६

भुक्तिमुक्तिशुभदं समृद्धिदम्
सम्पदर्थं धनमृद्धिः द्विज
भुक्तिनाशकलहं च मैत्रकम्
चोक्तमेव दशधा फलं भवेत् १६७

आयाधिक्यं चान्यथा हीनमुक्तम्
आयं हीनं चान्यथा चेत्त्वधिकम्
मृत्युदारिद्रावहं नाशहेतुः
आयाधिक्यं संपदर्थं समं वा १६८

जमाद्रश्चेदषड्भिस्त्वष्टन्दाशुभाक्षाभौमम्
शौरिवारं विसृज्य कृतिभ्यंभुक्शक्ति-ऋृद्धिदं च १६९

भूषं शुद्धं धीरं चाधनं वेष्मेव च
भ्रुबन्धन्य वीरं चैव भुक्तिमुक्तिशुभांशम्
अन्य सर्वं तस्कराद्या यथांशम्
युक्त चेत्सर्वसंम्यद्विनाशनम् १७०

इति मानसारे वास्तुशास्त्रे लिङ्गविधानं नाम द्विपञ्चाशदध्यायः

पीठलक्षणम्

सर्वेषामपि लिङ्गानां वक्ष्यते पीठलक्षणम्
लिङ्गतारं त्रिधापीठं तारं स्वयम्भुलिङ्गके १

अथवा लिङ्गनाहे तु स्थूलदेशे समं भवेत्
लिङ्गतुङ्गसमं वापि तत्पादाधिकमेव वा २

अध्यर्धं वा त्रिपादोनं द्विगुणम् त्रिगुणं तु वा
स्वयम्भुलिङ्गपीठस्य चोत्सेधमिति कथ्यते ३

एवं पूजांशमानेन पीठं तन्मानयेद् बुधः
पूर्वोक्तमानलिङ्गानामधुना पीठलक्षणम् ४

लिङ्गस्य बाह्यदेशे तु लिङ्गतारं समन्ततः
यल्लिङ्गपरिणाहस्य समं वा पीठविस्तृतम् ५

वैष्णवांशं समोत्सेधं पीठं स्वस्तिकलिङ्गके
अथवा पादांशमाधिक्यं ब्रह्मांशे संभवं भवेत् ६

अन्यैस्तु सर्वलिङ्गानां ब्रह्मांशोदयं बुधैः
कुर्यात्तन्मान संग्राह्य द्वित्रिवेदशरांशकम् ७

तदेकांशाधिकं विष्णुमानं पीठोदये तथा
पीठांशसार्धयोर्देशे वैष्णवांशं नवधाश्रृतम् ८

पीठं तु योजयेत्तत्तद्विस्तारे तु त्रिभागिकम्
एकांशं नालदीर्घं स्यान्मूलविस्तारं तत्समम् ९

चतुर्भागैकांशहीनं स्यात् शेषाग्रविस्तृतम्
अथवा पञ्चत्र्यंशेन चाग्रनालं विशालकम् १०

तदेकांशाधिकं वापि पूर्वोक्तं नालदीर्घके

ग्रीवोर्ध्वं चोक्तमानं यन्नालस्य बहुलं भवेत् ११

नालतारं त्रिभागैकं जलधारविशालकम्
पीठस्योर्ध्वे विशाले तु चतुष्पञ्चषडंशके १२

एकांशेन शेषं तु वृतवारिविशालकम्
घृतवारिविशाले तु तत्तदश विभाजिते १३

एकांशं निम्नविस्तारं पट्टिकान्तसमन्वितम्
नन्द्यावर्तशिला चोर्ध्वे तस्मान्नारायणान्तकम् १४

पीठतुङ्गमिति प्रोक्तं गरायमानमिहोच्यते
उत्सेधे षोडशांशे तु प्रथमोच्चं द्विभागिकम् १५

पद्मोच्चं तु त्रिभागं स्यात्तदूर्ध्वे क्षेपणांशकम्
कन्धरं च त्रिभागं स्यात्तदूर्ध्वे कम्पमंशकम् १६

ऊर्ध्वपद्मं त्रिंशं स्याद् वाजनं च त्रिभागिकम्
एकांशं घृतवारि स्याद् भद्रपीठमिति स्मृतम् १७

तदेव गलदेशे तु कुमुदं निर्गमं भवेत्
त्रियग्रं वृत्तकुम्भं वा श्रीभद्रमिति कीर्तितम् १८

कुम्भस्योपरि तस्याधश्चार्धोर्धेन पद्मयुक्
तस्याधोऽर्धेन कार्धेन कुर्यात्तत्तद्विचक्षणः १९

शेषं तु पूर्ववत्पीठं श्रीविशालमिति स्मृतम्
अथवा कुम्भं दिग्भागं पद्मतुङ्गं युगांशकम् २०

शेषं प्रागुक्तवत्कुर्यादुपपीठं प्रकल्पयेत्
अथवाधिष्ठानवद् गुह्यं कुर्यात्तत्सर्वलिङ्गके २१

यत्तुङ्गस्य वशावेशं पीठकर्णावसानकम्
उक्ततारादिहीनं स्यात्सर्वदोषसमुद्भवम्  २२

तस्मात्तु निर्गमं कुर्याद् विस्तारं तत्प्रकल्पयेत्
कुर्यात्तु नागरे लिङ्गे पीठं नागरमेव च  २३

द्राविडे द्राविडं प्रोक्तं वेसरे वेसरं तथा
धारालिङ्गं तु सर्वेषां धारा पीठं प्रकल्पयेत्  २४

यत्तदाकारलिङ्गानां तत्तदाकारलिङ्गके
तत्तच्छिखराकारं कुर्यादेवं विचक्षणः  २५

विपरीते भूसुरादीनां विपत्त्य हि समावहेत्
तस्मात्तु पीठलिङ्गादि हर्म्यादि परिहृद्यते  २६

नागरं चतुरश्रं स्यादष्टाश्रम् द्राविडं तथा
वृत्तं च वेसरं प्रोक्तमेतत्पीठाकृतिस्तथा  २७

धारा लिङ्गं तु पीठानां सर्व धारा कृतिस्तथा
कुर्यात्तु शिल्पिभिः सर्वैः सर्वसंपत्करं सदा  २८

स्वयम्भुलिङ्गविस्तृतित्रिगुणं च पीठे
पीठस्य तारत्रिविधं परिशुद्धगेहम्  २९

गेहत्रिधैकं परितो बहिष्कुर्यात् तारम्
केचित्तदायामसमं पीठविशालमेतत्  ३०

इति मानसारे वास्तुशास्त्रे पीठलक्षणविधानं नाम त्रिपञ्चाशदध्यायः

शक्तिलक्षणम्

शक्तीनां चित्रवर्णादिलक्षणं वक्ष्यतेऽधुना
सरस्वती च सावित्री लक्ष्मीश्च मही तथा  १

मनोन्मनी सप्तमातृश्च दुर्गा चैव यथाक्रमम्
पूर्वोक्तद्रव्यसर्वेषां सर्वशक्ति प्रकारयेत् २

पद्मपीठोपरि स्थाप्य देवीं पद्मासनासनाम्
शुद्धस्फटिकसंकाशं मुक्ताभरणभूषणम् ३

चतुर्बहुं द्विनेत्रं च केशबन्धं च मौलिनीम्
शुद्धश्वेताङ्गुलोपेतां ग्राहकुण्डलभूषणाम् ४

ललाटे भ्रमरकं स्यान्मौक्तिकापट्टमेव वा
कर्णपुष्पैश्च मौक्त्येन कर्णदामैरलङ्कृतम् ५

हारोपग्रीवसंयुक्तं मुक्तारत्नावली तथा
कुचबन्धनसंयुक्ता बाहुमालाविभूषणी ६

केयूरकटकैर्युक्तं प्रकोष्ठवलयं तथा
मणिबन्धकटकं वा मौक्तिका पौरमेव च ७

मध्याङ्गुलं विना सर्वे मौलिक रत्नाङ्गुलीयकैः
नीवीं च लम्बनं चैव मौक्तिका पट्टयुक्तिका ८

पादजालां भुजङ्गानां गुल्फस्योपरि भूषणीम्
पादनूपुरसंयुक्तं पादरत्नाङ्गुलीयकैः ९

मौक्तिकोत्तरीयसंयुक्तां सर्वालङ्करभूषणम्
पुरतः सव्य संदर्शं पुस्तकं वामहस्तके १०

दक्षिणे परहस्ते तु चाक्षमालावधारिणीम्
कुण्डिका वामहस्तौ च धारयेत्तु सरस्वती ११

अथवा द्विभुजं कुर्यात्कुन्तलं मकुटं भवेत्

दक्षिणं वरदं हस्तं वामहस्ते च पद्मकम्  १२

करण्डमकुटं वापि हेमवर्णाङ्गशोभितम्
पीताम्बरं यथारत्नं मुक्ताभरणमेव च  १३

कर्णयोः स्वर्णताटङ्कं सूत्रयुक्तं सुमङ्गलाम्
द्विनेत्रीं प्रसन्नवदनां सर्वाभरणभूषणीम्  १४

पितामहस्य पार्श्वे तु स्थानकं चासनं तु वा
वामभागे तु सावित्रीं श्वेतरक्तमथापि वा  १५

श्यामाङ्गवर्णमेवं वा द्विभुजं च द्विनेत्रकम्
स्थानकं चासनं वापि करण्डमकुटान्वितम्  १६

अथवा केशबन्धं वा कर्णे मकरकुण्डलम्
दुकूलाम्बरधरं वापि पीताम्बरमथापि वा  १७

सर्वाभरणसंयुक्तां वरदं वामहस्तके
दक्षिणे चोत्पलं कुर्याच्छेषं प्रागुक्तवन्नयेत्  १८

सरस्वतीं च सावित्रीं दशतालेन कारयेत्
रक्ताब्जं पीठतश्चोर्ध्वे देवी पद्मासना भवेत्  १९

चतुर्भुजं त्रिनेत्रं च मकुटं कुन्तलं भवेत्
प्रसन्नवदनां देवीं शुद्धकाञ्चनसन्निभाम्  २०

पीताम्बरधरां रक्तां शुकपोताम्
विशालाक्षमायतं कुर्यादपाङ्गकोणे स्मिताननाम्  २१

दक्षिणे त्वभयं पूर्वे डिण्डिमं वामहस्तके
अपरे दक्षिणे पद्मं चाक्षमालामथापि वा  २२

वामे नीलोत्पलं वापि रक्तपद्मोद्धृतं तु वा
पीनोन्नतस्तनतटां फाले भ्रमरकान्विताम्  २३

अथवा रत्नपट्टं स्यात्स्वर्णताटङ्कं कर्णयोः
मकरं कुण्डलं वापि कर्णयोः स्वर्णदामयुक्  २४

हारोपग्रीवसंयुक्तां ससूत्रैश्च सुमङ्गलीम्
कुचतटैश्च केकैश्च हेमपट्टविभूषिणीम्  २५

रत्नानि चन्द्रबीरं स्यात्स्वर्णरत्नोत्तरीययुक्
वुष्णीषात् पादपर्यंतं हारांतर शतांशकम्
उष्णीषं तु चतुर्मात्रं नेत्रांतं तु युगांगुलं
पुटांतं वेदमात्रं स्यात् मात्राणा मेढ्राग्रं तु सीमकं
तत्समं भागानुभागं स्यात् मूरुदीर्घ मुखद्वयं
जानुकंठ समा कुर्यात् जंघा च चोरुतुल्यकं
पादजानु समोच्चं स्यात् देवमुक्तंगमानयेत्
अंगुष्ठात् पार्ष्णिपर्यंतं तलंशो उशमात्रकं
चतुर्विंशतिमात्रं स्यात् --सीमकं-- स्यते
कूर्परं च द्विमात्रं स्यात् प्रकोष्ठमष्टादशांगुलं
मध्याङ्गुलाग्रसीमांतं तलं द्वादशमात्रकं
रुद्रांशं मुखतारम् स्यात् गलतारं युगद्वयं
वत्समं बाहुमूलं स्यात् जानुविस्तारं तत्समं
बाहुपर्यंतविस्तारं षड्त्रिंशाङ्गुलं तथा
कुक्षियोरंतरं वापि विंशमात्रं प्रशस्यते
मध्योदरतारं च पंचादशांगुलं भवेत्
श्रोणिदेशविशालं स्यात् सप्तादशाङ्गुलं भवेत्
नवाधिक्यं दशाङ्गुल्यं कटिदेशे विशालकं
ऊरुमूलविशालं स्यात् द्वादशांगुलमिष्यते
वृरुमध्ये विशालं तु सार्द्धपंक्त्यंगुलं भवेत्
जंघामूलविशालं तु सार्धसप्तांगुलं तथा

जिह्वामध्य षडंगुल्यं विस्तारं तु युगांगुलं
नलकां गुल्फविस्तारं सत्रिपादाब्धिमात्रकं
सार्धवेदाङ्गुलं पार्ष्णिविस्तारं परिकीर्त्तितं
षडयवाधिकपंचांशं प्रपादं विस्तारं भवेत्
तलाग्रातारं शरांगुल्यां वेदांशांगुष्ठदीर्घकं
द्विमात्रं तस्य विस्तारं तारार्धमं नखविस्तृतं
तर्जन्यंगुष्ठ तत्तुल्यं दीर्घं विस्तारमंशकं
त्रयंगुल्यं सार्धपञ्चांशं मध्यंगुल्यं च त्रये पादै
मध्यमादि कनिष्ठांतं दीर्घमेव प्रसस्यते
विस्तारं सप्तषट्पंच यवमानमुदीरितम्
तदर्धं च तदर्धं च नखविस्तारमुच्यते
बाहुमध्यविशाले तु सप्तांशं कूर्परं तथा
वेदांगुल्यं प्रकोष्ठं च मणिवंध त्र्ययंशकं
त्रियंशं सार्द्धं पञ्चांशं षडंशं तलमूलां चा
तलाग्रांतर गुगांगुलं
तलदीर्घ षडंगुल्यं शेषांशं मध्यमांगुलं
सार्द्धपंचांगुलं दीर्घं तर्जन्यनामिकाद्वयो
सार्धपंक्त्यंगुलां दीर्घं कनिष्ठये तत्मथापि वा
अंशं षडयवं सप्तषडयवं चतुर्यवं क्रमात्
अंगुष्ठादि कनिष्ठांतं विस्तारं परिकीर्त्तितं
स्थूलमूलं कृशाग्रं तु दुक्तमानेन योज्ययेत्
अग्रे त्रिद्विभागेन नखतारं प्रशस्यते
तच्चतुर्भागमाधिक्यं नखतायामुदाहृतं
एकद्वित्रियवं वापि नखाग्रं कारयेत् सुधो
अंगुष्ठेव च द्विपर्व स्यात् त्रिपंचांचान्यदंगुलैः
ज्ञानरेखादि रेखैश्च कुर्यात्तुतलमध्यमे
केशांता दक्षिणे सूत्रांतं भूवोर्मध्येभूवस्थिति
अक्षायामद्वयंगुलं तदर्धं तस्य विस्त्रितं
भूवायाम युगांगुल्यं द्वयविस्तार भागिकं
त्र्यंगुलं पुटपर्यंतं नासिका विस्त्रितं भवेत्

तदर्धं मध्यविस्तारं तदर्धं स्यात् तदमांगुलं
केयूरकटकस्वर्णरत्नपूरिमसंयुतम् २६

प्रकोष्ठवलयं रत्नैः कटकं मणिबन्धकैः
रत्नेन कटिसूत्रं स्याद्रत्नदामादिभूषिणीम् २७

रत्नहेमं च वस्त्रेण कुर्यान्नीव्यं च लम्बयेत्
नलकान्तं स्त्रिलम्बं स्यात्सर्वरत्नानि शोभिताम् २८

भुजङ्गाङ्गवलयं पादौ चोर्ध्वाधो रत्नबन्धनम्
पादनूपुरसंयुक्ताङ्गुलीरत्नाङ्गुलीयकम् २९

बाहुमूलादि संभूष्य सर्वाभरणभूषिणीम्
अथवा द्विभुजं चैव वामहस्ते च सन्धिमत् ३०

दक्षिणे रत्नपद्मं स्याच्छेषं प्रागुक्तवन्नयेत्
एवं प्रोक्तं महालक्ष्मीं स्थापयेत्सर्वहर्म्यके ३१

सामान्यं लक्ष्मीं कुर्याद् द्विभुजं च द्विनेत्रके
रक्तपद्मोद्धृतं हस्तौ सर्वाभरणभूषिणीम् ३२

शेषं तु पूर्ववत्कुर्याद् देवीं पार्श्वे विशेषतः
ऐरावतद्वयोश्चैव कुर्यादारादयेत्सुधीः ३३

सर्वासमालये द्वारे मध्यरङ्गे तु पूजयेत्
अथवा विष्णुपार्श्वे तु लक्ष्मीलक्षणमुच्यते ३४

द्विभुजां च द्विनेत्रां च करण्डमकुटान्विताम्
अथवा केशबन्धं स्याद्वामहस्तोद्धृताब्जकम् ३५

दक्षिणं हस्तं वरदं च अथवा लम्बनं भवेत्

स्थानकं चासनं वापि स्थापयेद् विष्णुदक्षिणे  ३६

कुर्यात्तु सर्वलक्ष्मीनां मध्यमं दशतालके
सर्वाभरणसंयुक्तां हेमवर्णाङ्गशोभिताम्  ३७

एतेषाम् इन्दिराः प्रोक्ताः महिशक्तिमिहोच्यते
द्विभुजं च द्विनेत्रं च करण्डमकुटान्वितम्  ३८

दुकूलवसनोपेतां मकुटं कुन्तलं तु वा
स्थानकं चासनं वापि विष्णुमूर्त्यापसव्यके  ३९

दक्षिणे चोत्पलं धृत्वा वामभागं तु लम्बनम्
अथवा वरदं वामे श्यामवर्णाङ्गशोभिताम्  ४०

मानयेद् दशतालेन सर्वं शेषं तु पूर्ववत्
मकरकुण्डलसंयुक्तां सर्वाभरणभूषिणीम्  ४१

भूशक्तिलक्षणं प्रोक्तं गौरीलक्षणमुच्यते
द्विभुजं च द्विनेत्रं च कुर्यादासनं स्थानकं तु वा  ४२

करण्डं केशबन्धं वा कुन्तलं मकुटं भवेत्
दक्षिणे चोत्पलं वामे वरदं स्थानमेव वा  ४३

अथवा लम्बहस्तं स्याद्गोबालाकारवद् भवेत्
दुकूलवसनोपेतां पीताम्बरधरामेव वा  ४४

दीर्घबाहुं विशालक्षीं श्यामवर्णां महोदराम्
स्तनतटोतुङ्ग विस्तीर्णश्रोनि देशोद्भवा भवेत्  ४५

कटि चोरु विशालं स्यान्मध्यकञ्चीनलम्बवत्
विशालास्य सुग्रीवं तुङ्गतुण्डं स्मिताननम्  ४६

चन्द्ररेखावतंसं स्याद् भ्रमरावृतमालिकम्
अथवा फालपट्टं स्यात्कर्णयोर्ग्राहकुण्डली ४७

कर्णपुष्पैश्च दामं स्याद्धेमसूत्रं सुमङ्गली
हारोपग्रीवसंयुक्तां बाहुमालाविभूषिणीम् ४८

कटकं कटिसूत्रं स्यात्केयूरपुरिमान्वितम्
रक्तांशुकोत्तरीयं स्यान्मौक्तिकोत्तरीयमेव च ४९

प्रकोष्ठवलयं चैव वलयैर्मणिबन्धकैः
भुजङ्गकटकाङ्घ्रिकौ पादनूपुरसंयुतम् ५०

सर्वाङ्गुलोक्तवज्ज्ञात्वा कुर्याद्रक्ताङ्गुलीयकैः
दक्षिणे कुञ्चितं पादम् वामपादं तु लम्बितम् ५१

पुष्पं च वरदं स्थाने हस्तं वामेऽथ चासने
दक्षिणं स्वस्तिकं पादं वामादन्तकरान्तकम् ५२

कुञ्चितं वामपादं स्याद् दक्षिणं कुञ्चितं तु वा
पुष्पधृक् लम्बहस्तं स्यात्स्थानकं च त्रिभागिकम् ५३

मानयेदङ्गमानं च मध्यमं दशतालके
लिङ्गस्य वामपार्श्वे तु विग्रहाणां तु वामके ५४

स्थापयेत्स्थावरे गौरीं तथा जङ्गममेव च
गौरीं च पार्वतीं चैव मनोमन्यामथ वक्ष्यते ५५

चतुर्भुजां त्रिनेत्रां च जटामकुटमण्डिताम्
समपदस्थानकं देवीं दशतालेन मानयेत् ५६

दक्षिणे चाभयं पूर्वे वरदं वामहस्तके

अपरे दक्षिणे चाब्जं वामहस्ते तु चोत्पलम्  ५७

श्वेतरक्तं च वर्णं वा श्यामवर्णाङ्गशोभितम्
केचित्तु कुन्तलनिभं तुङ्गं मकुटं कुन्तलं तु वा  ५८

वामे बालशशिं कुर्यादवामे तुरगान्वितम्
दुकूलवसनोपेतं सर्वाभरणभूषितम्  ५९

तदेव वृषमाश्रित्य पृष्ठे देवी त्रिभागिकम्
दक्षिणं स्वस्तिकं पादं वामपादं च कुञ्चितम्  ६०

पुरतो वामहस्ताक्षं शिरस्योपरि विन्यसेत्
शेषं तु पूर्वदेवीं च चोत्पलं वासनाभयम्  ६१

तदेव परहस्तौ च वामे रक्ताब्जधारिणीम्
दक्षिणे चाक्षमाला च कुर्यात्प्रोक्तं पुरातनैः  ६२

एवं मनोन्मनीं शक्त्या स्थापयेच्छिवहर्म्यके
वाराही चैव कौमारी चामुण्डी भैरवीं तथा  ६३

माहेन्द्री वैष्णवी चैव ब्रह्माणी सप्तमातरः
एतेषां सर्वशक्तीनां नवतालेन कारयेत्  ६४

भद्रपीठोपरि स्थाप्यमासने सप्तमातरः
शयने दक्षिणे पादान् वामपादान्प्रलम्बयेत्  ६५

चतुर्भुजं त्रिनेत्रैश्च सर्वाभरणभूषिणीम्
चामुण्डी चैव रुद्राणी तानि शक्तिः त्रिलोचनी  ६६

ब्रह्माणी चैव रुद्राणी जटामकुटमण्डितौ
वाराहीपोत्रवक्त्री स्यात् किरीटमकुटान्वितम्  ६७

कौमारी करराडमौली च किरीटी वैष्णवी तथा
चामुराडी ज्वालमौली च भैरवी पिबरालका ६८

शूलं मरुगणं चैव पूर्वं चापरदक्षिणे
कपालं पूर्वहस्ते च पाशं चापरहस्तकौ ६९

एवं तु वानमुद्धृत्य चामुराडी भैरवी उभौ
चामुराडी श्यामवर्णाभा भैरवी रक्तवर्णिनी ७०

केचित्तु भैरवी पूर्वे वरदाभयहस्तकौ
शूलं डमरुकं चैव सव्यवामकेऽपरे ७१

रक्ताम्बरपरा पार्श्वे कुचाभौ रक्तकञ्चुलौ
चामुराडी च शिरोमाला सर्वाभरणभूषिणी ७२

कृष्णाम्बरधरी कृष्णलम्बकूर्चासभैरवी
वैष्णवी चैव वाराही श्यामवर्णा विशोभिनी ७३

चक्रं च दक्षिणे हस्ते शङ्खं वामकरेऽपरे
पूर्वे च वरदं वामे दक्षिणे त्वभयमुभौ ७४

पीताम्बरं च संरक्तां सर्वाभरणभूषिणीम्
एवं तु वैष्णवी प्रोक्ता वाराही दक्षिणे हलम् ७५

वामहस्तोपरि पाशं दक्षिणेत्वभ करे
वरदं वामहस्ते तु सर्वाभरणभूषिणीम् ७६

पीताम्बरधरं चैव कौमारी रक्तवर्णिनी
वरदं चाभयं पूर्वे वामे तु द्वारहस्तकौ ७७

दक्षिणे च स्यात् शक्तिं च वामहस्तकौ

श्यामवर्णाम्बरं चैव सर्वाभरणभूषिणीम्  ७८

कौमारीलक्षणं प्रोक्तं ब्रह्माणी च चतुर्मुखी
वरदाभयहस्तौ च कुण्डिकासाक्षमालाधृक्  ७९

वामेत्ववामपूर्वे तु चा यथाक्रमम्
शुद्धवस्त्राम्बरयुक्तां सर्वाभरणभूषिणीम्  ८०

एवमुक्तं तथा ब्राह्मी रुद्राणी श्वेतवर्णिनी
वरदाभयहस्तौ च पूर्वे च वामदक्षिणे  ८१

वामे च हरिणं सव्ये परुशं परहस्तके
चर्माम्बरधरायुक्ता सर्वाभरणभूषिणी  ८२

वामे तु शङ्खपत्रं स्यादवामे करकुण्डलम्
रुद्रणीलक्षणं प्रोक्तं चामुण्डी वामकर्णके  ८३

शङ्खपत्रं च वामे तु शङ्खकुण्डलसंयुतम्
अन्यथा सर्वशक्तीनां ग्राहकुण्डलभूषिणीम्  ८४

हारोपग्रीवसंयुक्तां केयूरकटकान्विताम्
मणिबन्धनवलयादिसर्वरत्नाङ्गुलीयकैः  ८५

बाहुमाल्यादिसंभूष्य साकं चुलकान्विताम्
उक्तानां सर्वशक्तीनां सर्वाभरणभूषितैः  ८६

भद्रपीठोपरि देशे महिष्य हतः शिरः
तदूर्ध्वे तारकां देवीं स्थानकां ऋजुं भावयेत्  ८७

चतुर्भुजं द्विनेत्रं च श्यामवर्णाङ्गशोभिताम्
किरीटमकुटोपेतां सर्वाभरणभूषिणीम्  ८८

पूर्वेऽभयं करे सव्ये चक्रं चापरदक्षिणे
ऊरुमूलाश्रितं वामवरदं वा करपूर्वके ८९

वामे चान्यकरे शङ्खं पीताम्बरधरं भवेत्
एवं कात्यायनीं प्रोक्तं शेषं प्रागुक्तवन्नयेत् ९०

मूर्ध्नि च मध्ये ललाटमध्ये
नासाग्रमध्ये चन्द्रदेशनाभेः
ऊर्ध्वाधो पादद्वयमध्यगुल्फे
कुर्यात्तु सूत्रं तु सुखासने च ९१

तदेव सूत्रं त्वथ कायदेशे
चोरुद्वयोर्मध्यमके च सूत्रम्
जानुद्वयोर्मध्यमपादयोस्तम्
मध्ये च सूत्रमृजुस्थानके तत् ९२

भङ्गद्वयो मूर्ध्नि ललाटसव्ये
नासापुटे सव्यकचक्षुर्मध्ये
नाभेश्च सव्ये स्थितपादवामे
सूत्रं हि तिष्ठेत्तु कुरु दासने च ९३

इति मानसारे वास्तुशास्त्रे शक्तिलक्षणविधानं नाम चतुष्पञ्चाशदध्यायः

## जैनलक्षणम्

सुगतजैनकादीनां लक्षणं मानपूर्वकम्
संक्षिप्य लक्ष्यतेऽधुना मानसारस्य संग्रहम् १

मानं चापि प्रमाणं च परिमाणं लम्बमानकम्
उन्मानमुपमानं च मानं पद्मं समीरितम् २

पादाङ्गुष्टिससीमान्तं मानं चापि प्रकथ्यते
प्रमाणं विस्तृतं प्रोक्तं परितः परिमाणकम् ३

तत्सूत्राल्लम्बमानं स्यान्निन्ममुन्मानमुच्यते
अन्तरे उपमानं स्याद्बिम्बोदयादि सर्वशः ४

मानमेवं तु षट्भेदं मानेनाङ्गानि मानयेत्
आदिमानविधिं सम्यग्लक्षणं च इहोच्यते ५

हर्म्यतारवशान्मानं गर्भगेहवशोदयम्
द्वारमानवशात्तुङ्गमधिष्ठनवशोदयम् ६

हस्तमानवशान्मानं तालमानवशोदयम्
अङ्गुलेनाभि चोत्तुङ्गं यजमानवशोदयम् ७

मूलबेरवशान्मानमुत्तमादि त्रयं त्रयम्
एवं तु नवदेशे च महामानं तु संग्रहम् ८

हर्म्यमानं चतुर्मानं भोगमोक्षार्थकादिनाम्
हस्ततालवशान्मानं भोगमोक्षप्रदायकम् ९

अङ्गुलानां तु यन्मानं कुर्यात्तु मोक्षकादिनाम्
कर्तृबिम्बवशान्मानं सर्वसिद्धोदयं विदुः १०

कर्तरी चानुवर्तन्ते कायत्वादिमानकम्
तस्मादेवं तु प्रत्येकं नवमानमिहोच्यते ११

हर्म्यतारं नवांशेन चैकैकं बेरतुङ्गकम्
स्थावरं जङ्गमं चैव कन्यसादि त्रयं त्रयम् १२

गर्भगेहसमं श्रेष्ठं नवांशैकांशं कन्यसम्
द्वारतुङ्गविशाले तु नवमानं तु पूर्ववत् १३

अधिष्ठानसमं श्रेष्ठं कन्यसान्तं नवोदयम्

हस्तादि नवहस्तान्तं कन्यसादि त्रयं त्रयम्  १४

एकतालं समारभ्य नवतालावसानकम्
कन्यसादुत्तमान्तं स्याद्यजमानोदयं परम्  १५

केशान्तं नासिकाग्रान्तं हन्वन्तं बाहुसीमकम्
स्तनान्तं हृदयान्तं च नाभ्यन्तं मेढ्रसीमकम्  १६

नवधा कन्यसान्तं स्यात्स्थावरं जङ्गमोदयम्
मूलबेरवशं मानमुत्सवोदयमीरितम्  १७

मूलबेरोदयं श्रेष्ठं त्रिपादं मध्यमं भवेत्
तुङ्गार्धं कन्यसं प्रोक्तं त्रिविधं चोत्सवोदयम्  १८

अथवा तेन मानेन षोडशांशं विभाजिते
एकैकांशकं तस्मात्पञ्चविंशांशकान्तकम्  १९

कन्यसादुत्तमान्तं स्यान्नवमानमुत्सवोदयम्
अथवा मूलबेरस्य केशान्तं तु भ्रुवान्तकम्  २०

नेत्रान्तं नासिकाग्रान्तं हन्वन्तं बाहुसीमकम्
स्तनान्तं हृदयान्तं च नाभ्यन्तं च नवोदयम्  २१

कन्यसादुत्तमान्तं स्यान्नव तदुत्सवोदयम्
उत्सवे चार्धमानेन कौतुकोदयमीरितम्  २२

तन्मानं चाष्टभागैकं नवभागावसानकम्
कन्यसादुत्तमान्तं स्यान्नवमानं कौतुकोदयम्  २३

हर्म्यादि चाष्टधा मानमायाद्यर्थांशं कारयेत्
यथासंग्रहमानैश्च शतभागं विभाजिते  २४

एकैकांशाधिकं त्रिंशच्छतभागावसानकम्
स्थावरजङ्गमादीनां शुभायादिसंभवम्  २५

तदूर्ध्वे जात्यद्रंशसंयुक्तं विधिवद् बुधः
मूलबेराङ्गुलं चैव मानाङ्गुलमेव वा  २६

मात्राङ्गुलं ततः प्रोक्तमङ्गुलं त्रिविधं भवेत्
चतुर्विंशच्चतुर्भागं मूलबेरोदयं भवेत्  २७

मूलबेराङ्गुलं चैव मानयेदुत्सवोदयम्
यवताराष्टमात्रं स्यान्मानाङ्गुलमिति स्मृतम्  २८

कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलमध्यमे
पर्वदीर्घं ततन्नाहं मात्राङ्गुलमुदीरितम्  २९

एवं त्रिविधमुत्कृष्टं मध्यमष्टांशहीनकम्
त्रिपदं कन्यसं प्रोक्तं नवभेदाङ्गुलं भवेत्  ३०

स्थावरं जङ्गमं मानं मानाङ्गुलेन मानयेत्
मात्राङ्गुलेन चात्मार्थं बेरमानं प्रकल्पयेत्  ३१

एकादशाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात्
त्रयोस्त्रिंच्छतान्तं स्याद् देहलब्धाङ्गुलेन वा  ३२

नवाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
त्रयोविंशच्छतान्तं स्यान्मानाङ्गुलेन मानयेत्  ३३

सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
त्रयोदशशतानतं स्यान्मानाङ्गुलेन मानयेत्  ३४

अङ्गुलानां तु सर्वेषां जात्यंशकं विवर्जयेत्

कुर्यादायादिषड्वर्गमुक्तवच्छिल्पिवत्तमः ३५

स्थावरं जङ्गमं चैव लक्षणं वक्ष्यतेऽधुना
द्विभुजं च द्विनेत्रं च मुण्डतारं च शीर्षकम् ३६

ऋजुस्थानकसंयुक्तं तथा चासनमेव च
समाङ्घ्रि ऋजुकारं स्याल्लम्बहस्तद्वयं तथा ३७

आसनं च द्विपादौ च पद्मासनं तु संयुतम्
ऋजुकं च ऋजो भावं योगे तत्परमान्तकम् ३८

सव्यापसव्यहस्तं च मूलोर्ध्वोर्ध्वमुखं करौ
स्थानकं चासनं वापि सिंहासनोपरि न्यसेत् ३९

अपरे तु निर्यूहं कुर्यान्मकरतोरणं
तदूर्ध्वं कल्पवृक्षं स्यात्सहजेन्द्रस्वरैः सह ४०

नारदादि ऋषीन्देवान्देवाङ्गनाभिः सह सेवितान्
यक्षविद्याधराद्यैश्च चक्रमन्यत्र भूपतिम् ४१

नगेन्द्रादि च दिक्पालान्यक्षैश्च सहसेवितान्
यक्षयक्षेश्वरौ पार्श्वे चामरोद्धृतसेवितान् ४२

चतुत्रियान्तरिक्षे तु तस्याधो जिनदेवतान्
स्फटिकश्वेतरक्तं च पीतश्यामनिभ तथा ४३

सिद्धादिश्च सुगन्धश्च जनं चाह तुपार्श्वकम्
एतत्पञ्चपरमेष्टी पञ्चबेरं यथाक्रमम् ४४

उत्तमं दशतालेन देवाङ्गैः सह मानयेत्
चतुर्विंशतितीर्थानां दशतालेन कारयेत् ४५

निराभरणसर्वाङ्गं निर्वस्त्राङ्गं मनोहरम्
समवक्षःस्थले हेमवर्णं श्रीवत्सलाञ्छनम् ४६

द्वारे चण्ड महाचण्डं कुर्यात्सव्यापसव्यके
एवं तु जिनमित्युक्तं शेषमागमतोक्तवत् ४७
इति मानसारे वास्तुशास्त्रे जैनलक्षणविधानं नाम पञ्चपञ्चाशदध्यायः

## बौद्धलक्षणम्

बौद्धस्य लक्षणं वक्ष्ये सम्यक् च विधिनाधुना
जनदेवास्थिरं युक्तं बौद्धस्य च विशेषतः १

स्थानकं चासनं वापि सिंहासनादिसंयुतम्
अश्वत्थवृक्षसंयुक्तं कल्पवृक्षं तथा न्यसेत् २

शुद्धश्वेतवर्णं स्याद् विशालाननसंयुतम्
लम्बकर्णायताक्षं स्यात्तुङ्गकोणं स्मिताननम् ३

दीर्घबाहु विशाला च वक्षःस्थलं च सुन्दरम्
मांसलाङ्गं सुसंपूर्णं लम्बोदरपूर्णकृत् ४

समपादस्थानकं कुर्याल्लम्बहस्तं सुखासनम्
द्विभुजं च द्विनेत्रं च चोष्णीषोज्ज्वलमौलिकम् ५

एवं तु स्थानकं कुर्यादासनादि यथाक्रमम्
पीताम्बरधरं कुर्यात्स्थानके चासनेऽपि च ६

पीतं वामभुजोर्ध्वे तु चार्धकं तु सदना
स्थावरं जङ्गमं वापि दारु शैलं च लोहजम् ७

चित्रं वा चार्धचित्रं च चित्राभासमथापि वा
पट्टे वा भित्तिके वापि कुर्यान्मृत्तिकाशर्करा ८

उत्तमं दशतालेन कारयेत्त्वङ्गमानकम्
शेषं प्रागुक्तवत् कुर्यात्तत्तदागमवद् बुधः ९
इति मानसारे वास्तुशास्त्रे बौद्धलक्षणविधानं नाम षट्पञ्चाशदध्यायः

मुनिलक्षणम्

ऋृषीणां लक्षणं वक्ष्ये शास्त्रे संक्षिप्यतेऽधुना
अगस्त्यः काश्यपश्चैव भृगुर्वासिष्ठो भार्गवः १

विश्वामित्रस्तथा भारद्वाजः सप्तर्षयः क्रमात्
अगस्त्यं सप्ततालेन मानयेत्त्वङ्गमानकम् २

काश्यपं चाष्टतालेन मानयेदपि च भृगुम्
अन्यथा ऋृषिसर्वेषां नवतालेन कारयेत् ३

श्यामवर्णमगस्त्यं च काश्यपं पीतवर्णकम्
भृगुं कृष्णवर्णं स्याद् वसिष्ठं रक्तवर्णकम् ४

भार्गवं पिङ्गलाभं स्याद् विश्वामित्रं च रक्तकम्
भरद्वाजं च हारिद्रं वर्णमेवं क्रमाद् विदुः ५

द्विभुजं च द्विनेत्रं च जटाजूटेन मण्डितम्
पीताम्बरधरं चैव सर्वेषामपि मुनीनाम् ६

कुब्जाकारं बृहत्कुक्षि कषायं पूर्णशोभितम्
अगस्त्यं चमिति प्रोक्तमन्यं चमिति पौरुषम् ७

सर्वेषामपि मुनीनां यज्ञसूत्रोत्तरीयकैः
दण्डं च सव्यहस्तेन वामहस्तेन पुस्तकम् ८

अथवा यष्टिं विना सव्ये हस्तौ सदृश मुनीनाम्
अथवाराध्यवत्कुर्यादासनानान्तुकं तु वा ९

वेदाशिक्यंशकं तुङ्गे मूर्ध्नितुङ्गं गुणांशकम्
दशांशं वक्त्रतुङ्गं स्याद् गुणांशं ग्रीवतुङ्गकम्  १०

दशांशं हृदयान्तं स्यान्नाभ्यन्तं च दशाङ्गुलम्
भूतांशं मेढ्रसीमान्तं पीठांशं शुरगायतम्  ११

जानुतुङ्गं गुणांशं स्याज्जानुदीर्घोरुतुङ्गकम्
पादं जानुसमोच्चं स्यात्सप्तलामिति स्मृतम्  १२

विशांशं बाहुदीर्घं स्यात्कूर्परं चार्धमात्रकम्
प्रोकोष्ठं षोडशांशं स्यात्तलमष्टांशमायतम्  १३

पादायामं च रुद्रांशं मुस्ततारं सप्तमात्रकम्
ग्रीवतारं शरांशं स्यात्तत्समं बाहुमूलके  १४

कक्षान्तं मनुमात्रं स्याद् वक्षःस्थलविशालकम्
हृदयान्तं विशालं च द्वादशाङ्गुलमीरितम्  १५

मध्योदरं विशालं स्यात्षोडशांशेन कारयेत्
कटितारं भास्करांशं स्यादष्टांशं चोरुविस्तृतम्  १६

जानुतारं शरांशं स्याज्जङ्घातारं युगांशकम्
नलकान्तं त्रिमात्रं स्यात्तलतारं युगाङ्गुलम्  १७

बाहोरग्रविशालं स्याद् युगमात्रं प्रशस्यते
प्रकोष्ठताराधबन्धां मणिबन्धं कलाशकम्  १८

त्र्यर्धांशं तलविस्तारं तलदीर्घं युगाङ्गुलम्
अङ्गुल्याङ्गुलदीर्घं स्यादगस्त्यं च समीरितम्  १९

षण्णवत्यधिकांशं स्यादष्टतालोदयं भवेत्

उष्णीषं तु केशांशं मूर्ध्नितुङ्गं गुणांशकम्  २०

तस्मात्तु सार्धपङ्क्त्यंशं हन्वन्तं तन्मुखायतम्
तस्मात्कर्णं गुणांशं स्यात्तस्मात्तु हृदयान्तकम्  २१

सार्धदशांशं तस्मात्समं नाभिकरान्तकम्
मध्योदरं च एतस्मान्मेढ्रांशं तु तत्समम्  २२

तस्याधश्चैकविंशान्तमूरुदीर्घं गुणांशकम्
जानुजङ्घोरुतुल्यं स्यात्पादजानुसमोच्छ्रयम्  २३

मनुमात्रं पादायामं मुखतारं नवाङ्गुलम्
ग्रीवतारं षडङ्गुल्यं बाहुपर्यन्तविस्तृतम्  २४

त्र्यंशं त्र्यर्धमात्रं स्याद् बाहुमूलं रसांशकम्
बाहुदीर्घं कविंशांशं कूर्परं सार्धमात्रकम्  २५

प्रकोष्ठाद्यर्धवक्त्रं स्याद् वक्त्रायामसमं तलम्
अष्टतालमितिप्रोक्तं शेषं प्रागुक्तवन्नयेत्  २६

नवतालोदयेत्वष्टभागाधिक्यं शतांशकम्
शिरस्तुङ्गं गलं जानु पादतुङ्गं गुणांशकम्  २७

मुखं वक्षश्च कुक्षिश्च कुटिदीर्घं द्वादशांशकम्
ऊरुजङ्घायतं बाहुदीर्घ षट्चतुरंशकम्  २८

प्रकोष्ठमष्टदशांशं स्यात्तस्मान्मध्याङ्गुलान्तकम्
मुखायामसमं कुर्यादङ्गुष्ठं पार्ष्णिकान्तकम्  २९

पञ्चादशाङ्गुलं पाददीर्घं प्रागुक्तवन्नयेत्
मुनीनां लक्षणं प्रोक्तं शेषं युक्त्या प्रयोजयेत्  ३०

इति मानसारे वास्तुशास्त्रे मुनिलक्षणविधानं नाम सप्तपञ्चाशदध्यायः

## यक्षविद्याधरादिलक्षणम्

यक्षविद्याधरादीनां लक्षणं वक्ष्यतेऽधुना
द्विभुजम् च द्विनेत्रं च करण्डमकुटान्वितम्  १

चरणाम्बरसंयुक्तं राक्षसाकारवद् भवेत्
श्यामवर्णं च पीतं च यक्षाणां वर्णमेव च  २

श्यामरक्तं च पीतं च वर्णं विद्याधरं तथा
यक्षविद्याधरादीनां नवतालेन कारयेत्  ३

देवस्यानुचरैः यक्षा विद्याधराश्च पारगाः
गानयोग्या गन्धर्वा देवाङ्गुल्यामनार्थकम्  ४

निग्रहा राक्षसा प्रोक्ताः चैव यक्षे तु भेदकम्
यक्षैश्च चामराद्यैश्च सुराणां चिह्नधारिणः  ५

स्थानकं चासनं चैव यक्षविद्याधरादिभिः
दक्षिणा स्वस्तिकं पादं वामपादं तु कुञ्चितम्  ६

चामराद्यैर्वृतं हस्तं तं चोर्वी श्रितमेव वा
एवं तु यक्षरूपं स्याद् विद्याधरासनान्वितम्  ७

पुरतः पृष्ठपादौ च लाङ्गलाकारमेव च
जान्वाश्रितौ हस्तौ गोपुरोद्धृतहस्तकौ  ८

एवं विद्याधराः प्रोक्ताः सर्वाभरणभूषिताः
नृत्तं वा वैष्णवं वापि वैशाख स्थानकं तु वा  ९

गीतवीणाविधानैश्च गन्धर्वमिति कथ्यते

चरण पशुसमानं चोर्ध्वकायं नराभम् १०

वदनं गरूडभावं बाहुकौ पद्मयुक्तौ
मकुट कमलयुक्तं पुष्पसच्छाय वर्णम् ११

परित करुणावीणं किन्नरस्य स्वरूपम् १२
इति मानसारे वास्तुशास्त्रे यक्षविद्याधरविधानं नाम अष्टपञ्चाशदध्यायः

भक्तलक्षणम्

अधुना वक्ष्यते सर्वभक्तानां लक्षणं क्रमात्
पादं चतुर्विधं प्रोक्तं तद्वशान्मानं गृह्यते १

प्रथमं सालोक्यमथ द्वितीयं सामीप्यमुच्यते
सारूप्यं च तृतीयं स्यात्सायुज्यं तु चतुर्थकम् २

भक्तिज्ञानं च वैराग्यं युक्तं सालोक्यमीरितम्
ज्ञानं वैराग्यसंयुक्तं सामीप्यमिति कथ्यते ३

केवलं ध्यानसंयुक्तं सारूप्यमिति निश्चयम्
शुद्धज्ञानसमायुक्तं सायुज्यं परमार्थवत् ४

उत्तमं नवतालेन सालोक्याङ्गं प्रमीयते
अधमं दशतालेन सामीप्याङ्गस्य निर्मितम् ५

मध्यमं दशतालेन सारूप्यं मानयेत्सुधीः
उत्तमं दशतालेन सायुज्यं कथितं बुधैः ६

एवं क्रमेण भक्तानां तालमानं प्रवक्ष्यते
उष्णीषात्पादपर्यन्तं भावोत्तरशतांशकम् ७

उष्णीषं तु चतुर्मात्रं नेत्रान्तं तु युगाङ्गुलम्

पुटान्तं वेदमात्रं स्यात्तत्समं हनुसीमकम् ८

कर्णोच्चं वेदमात्रं स्याद् भद्रकाद्धृदयान्तकम्
हृदयं नाभिसीमान्तं नाभिर्मेढ्रं तु सीमकम् ९

तत्समं भानुभागं स्याच्चोरुदीर्घं मुखद्वयम्
जानु कर्ण समं कुर्याज्जङ्घा चोरुतुल्यकम् १०

पादं जानुसमोच्चं स्यादेवमुत्तुङ्गं मापयेत्
अङ्गुष्ठात्पार्ष्णिपर्यन्तं तलं षोडशमात्रकम् ११

चतुर्विंशतिमात्रं स्याद्बाहुदीर्घं प्रशस्यते
कूर्परं च द्विमात्रं स्यात्प्रकोष्ठाष्टादशाङ्गुलम् १२

मध्याङ्गुल्यग्रसीमान्तं तलं द्वादशमात्रकम्
रुद्रांशं मुखतारं स्याद् गलतारं युगद्वयम् १३

तत्समं बाहुमूलं स्याज्जानुविस्तारं तत्समम्
बाहुपर्यन्तविस्तारं षट्त्रिंशाङ्गुलकं तथा १४

कक्षयोरन्तरं तारं विशमात्रं प्रशस्यते
मध्योदरतारं च पञ्चादशाङ्गुलं भवेत् १५

श्रोणिदेशविशालं स्यात्सप्तादशाङ्गुलं भवेत्
नवाधिक्यं दशाङ्गुल्यं कटिदेशविशालकम् १६

ऊरुमूलविशालं तु सार्धं द्वादशाङ्गुलं भवेत्
जङ्घामूलविशालं तु सार्धसप्ताङ्गुलं तथा १७

जङ्घामध्यं षडङ्गुल्यं विस्तारं तु युगाङ्गुलम्
नलकागुल्फविस्तारं सत्रिपादाङ्घ्रिमात्रकम् १८

सार्धवेदाङ्गुलं पार्ष्णिविस्तारं परिकीर्तितम्
षड्भागिकं च पञ्चांशं प्रपदं विस्तृतं भवेत्  १९

तलातारं शराङ्गुल्यं वेदांशमङ्गुष्ठदीर्घकम्
द्विमात्रं तत्रविस्तारं तारार्धं नखविस्तृतम्  २०

तर्जन्याङ्गुष्ठतत्तुल्यं दीर्घं विस्तारमंशकम्
त्र्यङ्गुलं सार्धपञ्चांशं द्व्यङ्गुलं च क्रमेण वै  २१

मध्यमादि कनिष्ठान्तं दीर्घमेवं प्रशस्यते
विस्तारं सप्तषट्पञ्चयवमानमुदीरितम्  २२

तदर्धं च तदर्धं च नखविस्तारमुच्यते
बाहुमध्यविशालं तु सप्तांशं कूर्परं तथा  २३

वेदाङ्गुलं प्रकोष्ठं च मणिबन्धं त्रियङ्गुलम्
षडंशं तलमूलं चाग्रं तारं युगाङ्गुलम्  २४

तलदीर्घं षडङ्गुल्यं शेषांशं मध्यमाङ्गुलम्
सार्धपञ्चाङ्गुलं दीर्घं तर्जन्यनामिकाद्वयम्  २५

सार्धवह्न्यङ्गुलं दीर्घं कनिष्ठाङ्गुष्ठयोस्तथा
अंशकं षड्यवं सप्त षड्यवं तुर्यवं भवेत्  २६

अङ्गुष्ठादिकनिष्ठान्तं विस्तारं परिकीर्तितम्
स्थूलमूल कृशाग्रं तु उक्तमानेन योजयेत्  २७

अग्रे च त्रित्रिभागेन नखतारं प्रशस्यते
त्रिचतुर्भागमाधिक्यं नखायाममुदाहृतम्  २८

एकद्वित्रियवं वापि नखाग्रं कारयेत्सुधीः

अङ्गुष्ठे च द्विपर्वं स्यात्त्रिपर्वं चान्यथाङ्गुलैः २९

ज्ञानरेखादिरेखैश्च कुर्यात्तु तलमध्यमे
केशान्तं दक्षसूत्रान्तं द्वयोर्मध्ये भ्रुवः स्थितिः ३०

अक्षायाम द्वयाङ्गुल्यं तदर्धं तस्यविस्तृतम्
कर्णायामं युगाङ्गुल्यं कर्णनालं तु तत्समम् ३१

विस्तारं द्वयङ्गुलं प्रोक्तं शेषमूह्यं विचक्षणः
नवतालोत्तमं प्रोक्तं शेषं च दशतालवत् ३२

सद्विरष्टशतं भागं द्वितीये च पदं तथा
पादादुष्णीषसीमान्तं कन्यसपङ्क्तितालवत् ३३

उष्णीषात्केशपर्यन्तमुत्तुङ्गं वेदमात्रकम्
तस्मान्नेत्रं तु सूत्रान्तं सार्धवेदङ्गुलं भवेत् ३४

तस्मात्तु पुटसीमान्तं वेदमात्रं प्रशस्यते
पुटान्ताद्धनुसीमान्तं सार्धवह्नयङ्गुलं भवेत् ३५

गलमध्यर्धमात्रं स्याद् गलतुङ्गं युगाङ्गुलम्
कर्णाद्धृदयमानं हृदयं नाभिसीमकम् ३६

नाभ्यन्तं मेढ्रसीमान्तं समं वा युगत्रयम्
मेढ्रमूरुदीर्घं स्यात्पञ्चविंशाङ्गुलं भवेत् ३७

जानुपादतलं वेदमात्रं जङ्घोरुतुल्यकम्
पार्ष्णिद्वयङ्गुष्ठसीमान्तं सार्धषोडशमात्रकम् ३८

हिक्कासूत्रादधो बाहुदीर्घं पञ्चशराङ्गुलम्
कूर्परं च द्विमात्रं स्यात्प्रकोष्ठमेकोनविंशतिः ३९

मध्याङ्गुल्यग्रसीमान्तं सार्धभान्वंशकं तलम्
सार्धरुद्रांशं वक्त्रं च विस्तारं परिकीर्तितम् ४०

गलतारं सार्धमष्टांशं बाहुजानु च तत्समम्
षट्षट्सार्धैकभागं स्याद्बाहुपर्यन्तविस्तृतम् ४१

सार्धविंशतिमात्रं स्यात्कक्षान्तरमुदाहृतम्
सार्धपञ्चादशाङ्गुल्यं मध्योदरविशालकम् ४२

सार्धमष्टादशाङ्गुल्यं श्रोणिदेष विशालकम्
एकोनविंशतिभागं कटिविस्तारमिष्यते ४३

सार्धद्वादशमात्रं स्यादूरुमूलविशालकम्
जङ्घामध्ये तु विस्तारं सार्धषड्द्व्यङ्गुलं भवेत् ४४

नलकान्तर युगाङ्गुलं गुल्फतारं शराङ्गुलम्
प्रपदं तु षडङ्गुल्यं वेदांशमङ्गुष्ठदीर्घकम् ४५

तत्समं तर्जनीदीर्घमर्धाङ्गुलविहीनकम्
अन्याङ्गुली च दीर्घं स्याद् विस्तारं तत्समूह्यताम् ४६

कूर्परस्य तु विस्तारं सार्धषट्द्व्यङ्गुलं भवेत्
प्रकोष्ठतारं शराङ्गुल्यं मणिबन्धं युगाङ्गुलम् ४७

तलतारं शराङ्गुल्यं तलदीर्घं सप्तमात्रकम्
मध्याङ्गुलायतं सार्धपञ्चमात्रं प्रशस्यते ४८

तर्जन्यायामदीर्घं स्याद्बाणांशं तत्प्रकल्पयेत्
सार्धवद्व्यङ्गुलं दीर्घम् कनिष्ठाङ्गुष्ठयोस्तथा ४९

श्रोत्रदीर्घं युगाङ्गुल्यं नालालम्बनं तत्समम्

अन्यान्यनुक्तसर्वाङ्गमत्तमं दशतालवत् ५०

कारयेच्छिल्पिभिः कुर्यात्तत्र दोषो न विद्यते ५१
इति मानसारे वास्तुशास्त्रे भक्तलक्षणविधानं नाम एकोनषष्टितमोऽध्यायः

हंसलक्षणम्

अथ वक्ष्ये त्रिमूर्तीनां वाहनानां तु लक्षणम्
हंसस्य लक्षणं चैव गरुडस्य तु लक्षणम् १

वृषस्य लक्षणं चैव सिंहरूपस्य लक्षणम्
पितामहोदयं वापि द्वित्रयांशैकमेव वा २

उत्तमादि त्रिधा प्रोक्तं हंसोदयमिति स्मृतम्
द्वितालोत्तममानेन भागं हंसोदयं भवेत् ३

वेदांशं शिरसो तुङ्गमष्टांशेन गलोदयम्
रुद्रांशो हृदयतुङ्गं स्यात्तस्याधोऽधोरुदीर्घकम् ४

सत्रिपादांशकं जानुतुङ्गमेकांशमीरितम्
ऊरुतुङ्गसमं जङ्घायामं पादोदयांशकम् ५

मुखायामं त्रियंशं स्याच्छिरःपृष्ठे द्वयांशकम्
मुखतारं युगांशं स्यान्मूलग्रावं शिवांशकम् ६

अग्रमूलाग्रक्षयं तारं ग्रीवस्य द्विवक्त्रयुक्
कुक्षिताराष्टमात्रं स्यादुरस्थानं तु तत्समम् ७

तदुत्तरात्पुच्छमूलादायामं षोडशांशकम्
अक्षतारं शराङ्गुल्यं पक्षायामाष्टमात्रकम् ८

विस्तारं च द्विमात्रं स्यादग्रमेकाङ्गुलं भवेत्

घनमेकाङ्गुलं चैव बाहुदीर्घाष्टमात्रकम् ९

अंशेन कूर्परं स्यात्कराग्रायामं षडङ्गुलम्
लाङ्गुलाकारहस्तौ च पक्षस्यान्तं प्रविष्टके १०

ऊरुमूलविशालं स्यात्सार्धद्व्यंशं सुवृत्तकम्
अध्यर्धांशाग्रविस्तारं पादांशं जानुविस्तृतम् ११

जङ्घायामं शिवांशं स्यात्तलतारं द्विमात्रकम्
वरदो मध्यमाङ्गुल्ययामं तु युगांशकम् १२

तत्पार्श्वे द्विद्विमात्रं स्याद् द्विमात्रायां प्रशस्यते
पृष्ठे मूलाङ्गुलायामं द्विमात्रं तत्प्रशस्यते १३

पुरतो मात्रविस्तारं पृष्ठे च तत्सबन्धनम्
अध्यर्धमङ्गुलतारं तदर्धमन्याङ्गुलानि च १४

आस्यायामं त्रिमात्रं स्याद् विस्तारं चैकमात्रकम्
अक्षायाममर्धमात्रं स्याद् विस्तारं युक्तितो न्यसेत् १५

मुखायामे तु तन्मध्ये चाक्षं कुर्याद् विचक्षणः
द्वियवं कर्णसूत्रं स्यादक्षायाममन्तरं भवेत् १६

शिरोर्ध्वे स्तूपितुङ्गं स्याद् द्व्यङ्गुलैकाङ्गुलं घनम्
तदायामं षडङ्गुल्यं शिरःपृष्ठावसानकम् १७

विस्तारं तु युगाङ्गुल्यं शे युक्त्या प्रयोजयेत्
सर्वाङ्गं धवलाकारं पादौ च रक्तवर्णयुक् १८

तदास्यं हेमवर्णाभं कुर्यात्तु ब्रह्मवाहनम्
सर्वेषामपि मूर्तीनां दोलयानं च कल्पयेत् १९

एवं हंसे पुच्छके पत्रयुक्तम्
पृष्ठे ग्रीवे स्तूपिकापत्रवल्या
लम्बं कुक्षिरावृत्त पत्रैः
सर्वैर्वर्णैरभिरामं संभूषम्  २०

देवानां भूतैतिलानां नृपाणाम्
हर्म्ये देशे प्रस्तरे चोत्तरोर्ध्वे
कूटैर्नीडैः सर्वतो ग्रीवदेशे
युक्त्या कुर्यात् श्रेणिकाहंसं भूष्यम्  २१
इति मानसारे वास्तुशास्त्रे वाहनविधाने हंसलक्षणं नाम षष्टितमोऽध्यायः

गरुडलक्षणम्

विहङ्गराजमानं च लक्षणं वक्ष्यतेऽधुना
मूलबेरसेमोत्तुङ्गं त्रिपादमर्धमेव वा  १

उत्सवोच्चं समं वापि द्विगुणं त्रिगुणमेव वा
त्रिगुणार्धाधिकं वापि तच्चतुर्गुणमेव वा  २

एवं नवोदयं प्रोक्तमुत्तमादि त्रयं त्रयम्
तत्तत्त्रिंशतिकं कृत्वा एकैकांशविवर्धनात्  ३

पञ्चविंशच्छतान्तं स्याद्यच्छुभायादिसंभवम्
अथवाङ्गुलमानेन कल्पयेद् गरुडोदयम्  ४

एकाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात्
त्रयोविंशच्छतान्तं स्यान्मानायादिं कारयेत्  ५

द्विजराजायं वापि मानयेद् गरुडोदयम्
पीठतारसमाध्यर्धं पादोनं द्विगुणं तु वा  ६

द्विगुणात्पादमाधिक्यं द्विगुणार्धाधिकं तु वा

पादोनत्रिगुणं वापि त्रिगुणं पादमधिकम्  ७

एवं नवविधं मानं कन्यसादीनि कारयेत्
तदायामसमं वापि त्रिपादं चार्धमेव वा  ८

उत्तमादि त्रयं प्रोक्तं गरुडस्योदयं विदुः
न कुर्यात्षट्शुभायादि कुर्यात्तदंशमानतः  ९

स्थानकं चासनं चैव गमनं च यथाविधि
उष्णीषात्पादपर्यन्तं गृहितोत्तुङ्गं मानतः  १०

तत्तन्मानवशात्केचिन्मूलबेरवशान्नयसेत्
उत्सवे चोत्सवं प्रोक्तमङ्गुलं मानविश्वतः  ११

एवं मानं तु संग्राह्य यावत्प्रागुक्तवद् भवेत्
चलं वाप्यचलं वापि कारयेच्छिल्पवित्तमः  १२

षड्वर्गायादिषु सुलक्षणं वक्ष्यतेऽधुना
सर्वेषां वाहनानां चायादांश्च यथा तथा  १३

यथावाहनतुङ्गे तु वृद्धिहान्या यथाक्रम
गरुडं चैव हंसं च वृषभं चैव सिंहके  १४

आयमष्टाभिर्वृद्धिः स्याद् द्वादशाक्षयमेव च
पञ्चवेदैश्च वृद्धिः स्याद् व्ययं हत्वा दशमेव वा  १५

योनिश्च त्रय वृद्धिः स्याद् धृदे चाष्टकमेव च
तदृक्षोऽष्टकवृद्धिः स्याद् गुप्तविंशक्षयो भवेत्  १६

वारं ग्रहेण वृद्धिः स्यात्सप्तमी च क्षयो भवेत्
अंशं च चतुर्वृद्धिः च नवमी च क्षयो भवेत्  १७

तच्छेषं सर्वमायादि षड्वर्गं चैव कारयेत्
आयाधिक्यं व्ययं हीनं चोत्तरं तु व्ययाधिकम् १८

ध्वजो सिंहो वृषो हस्तो शुभयोनिरिति स्मृतम्
सिंहे च गजयोनिश्चेत् शुभं तस्माद्विना गजम् १९

विवत्प्रत्यरगोहस्ति हीनान्यानदिनं शुभम्
सौर्यार्काङ्गारवारं च वर्जयेच्छुभमन्यथा २०

तस्करादि न षण्डं च प्रेष्यांशानि विवर्जयेत्
एवमायादिकं कुर्यादङ्गमानं प्रवक्ष्यते २१

उवार चरणरविबन्धैः द्वादशार्कार्कभानु
द्वयरसगुणचतुष्कं बन्धकेशाननं च

गलधरमधरगुह्ये स्थाणुजान्वस्त्रिकं तत्
पदमिति गरुडतुङ्गं नन्दतालं क्रमेण २२

अथ सिंहपदतलानां पञ्चादशदशांशम् २३

वदनं द्विगुणं बाह्यायतं कूर्पराक्षं प्रमुखकरैर्याष्टिपदम्
तलातलं तत्कथितमिति पुराणैः सुरिभिस्तत्र तन्त्रज्ञैः २४

वनविपुलतालं कर्णमष्टांशतारम्
विस्तृतं शरयुगांशं कक्षयोरन्तरस्त्रम्
हृदयविस्तृतं चैकाधिक्यमष्टद्वयांशम्
उदरतति युगष्टं श्रोणितुल्यं च तारम् २५

तस्याधः कटिविशालं सप्तपङ्क्त्यंशं चोरुः
वृत्तं तत्समविशालं मूलपिण्डाष्टभागम्
तत्र जैनन जङ्घामूलविस्तारमध्ये

विस्तृतचर युगांशं गुल्फविस्तारमेव २६

पदमिति विपुल भूताङ्गुष्ठदीर्घं गुणांशम्
तदपि च सम विमूह्यातर्जनीदीर्घमुक्तम्
नवपदसदृशमन्यैरङ्गुली चान्यतुर्यम्
नराभिमानं शिल्पिविद्वद्भिरेव २७

मुनिरसशरयुगंशं बाहुसन्धिप्रदेशे
प्रमुखरविबिशालैर्मध्यमाग्रक्रमेण
अनलमणिविशालां तत्तदायामषड्भिः
प्रसृतरसयुगांशं मध्यमात्रायतं च २८

शरयुगयवाधिकांशानामिका तर्जनीयौ
गुणमलं कनिष्ठदीर्घाङ्गुष्ठकायाममेतत्
त्रयकृतमुखविधिज्ञैः स्मायते चाह्निकान्तम्
स्फुटमिति मतिः वेन्द्रैश्च सदृक् तारम् २९

भ्रुवयुतनयनकेशान्तयोर्मध्यदेशे
गुणयुतनयनमेवं तत्पुटान्तयोस्तत्
युग यवविहृतदीर्घं तद्गोजिमूलात्तु नाभि
तदुदयविपरीतमंशं विहृतस्याग्रमंशम् ३०

विशालाधिकगोजिकाग्र चोत्तरमष्टार्धमात्रम्
विस्तृततमिव तदुच्चं वेदमात्रायतं च
अधरविहृतपादत्रितुङ्गश्चायतान्तम्
विस्तृतदीर्घशेषमन्तं तु युक्त्या ३१

वक्त्रायामं तत्समं नासिकाग्रम्
युक्त्या मानं कर्णरन्ध्रावसानम्
हन्वंशं तं श्रोत्रतुङ्गं तदर्धम्
तदर्धं विस्तारं नालमेवं तथैव ३२

एवं प्रोक्तानुक्तमानं तु सर्वम्
मानं कुर्यात्पङ्क्तितालोक्तवत्
हावं यावत्कूर्परबन्धकान्तम्
बाहुपत्तौ चाङ्गुलं कञ्चुकेन ३३

नासिका शुकतुराडं पदाग्रे
हंसकास्यदंष्ट्रवत्कुर्यात्
श्वेतवर्णनखैरपि वक्त्रयुक्
श्यामवर्णमतितुराडाग्रके ३४

अष्टनागविभूषणपत्तिवत्पत्तयुक्
उग्रदृक् मकुटं सकरराडकम्
वर्णनीलसमरत्नमराडलं कृतम्
तप्तहेमनिभं गरुडं भवेत् ३५

पञ्चवर्णसमन्त्रितपत्तयुक्
अङ्कुरवत्कर्णशिरावृतम्
कुञ्चितः सहितगमनेऽपि च
सञ्चितस्थितभावमिति स्मृतम् ३६

मूर्ध्नि शङ्कं त्तीरवर्णावृतं च
वामे कर्णे पद्मवर्णाभपद्मा
सव्ये कर्णे तन्महापद्ममेव
धुम्रवर्णं हारकार्कोटकं च ३७

गुलिकस्कन्धौ लम्बयेत्कृष्णवर्णम्
व्याधृक्वर्णं वा सङ्गिवक्त्रसूत्रम्
अन्तन्तं शुक्लवर्णाभं वामप्रकोष्ठे
हिरगयवर्णं तात्त्र्यकस्य कटकम् ३८

केचित्तच्छ्रयार्थं तु तात्त्र्ये वर्णं विशेषतः

केशान्तात्कर्णसीमान्तं श्यामनीलाग्रसीमकम् ३९

भित्तिकाद्धृदयान्तं च तद्द्वयो कूर्परान्तकौ
पञ्चवर्णसमं श्रितपद्मकांशुककञ्चुकी ४०

हृदयात्कटिसूत्रान्तं प्रकोष्ठादिकराग्रयोः
पीतवर्णमिति प्रोक्तं तस्माद् जानुकान्तकम् ४१

रक्तवर्णं तु पादान्तं श्वेतवर्णनिभं भवेत्
द्विभुजाग्रं च वक्त्रं च द्विपादौ कुञ्चितौ भवेत् ४२

स्थानकं चासनं वापि विष्णुं ध्यात्वा कृताञ्जलिः
सर्वालङ्कारसंयुक्तं ग्रामे स्थाप्यं स्वतन्त्रकम् ४३

एवमैश्वर्यसिद्धिः स्यात्तन्मात्रैरर्चयेत्सुधीः
अभिचारादिकाम्यर्थं तार्क्ष्यरूपं विशेषतः ४४

पाद स्थानकं कुर्याद् वक्त्रं चासनं भागतः
सर्वाङ्गं स्वर्णवर्णं स्यात्पद्मकञ्चुकिपूर्वकम् ४५

वपुषं तु निर्वाणमधोहस्तौ कृताञ्जलिम्
शीर्षं च सिंहपत्रैश्च संयुक्तं पञ्चवर्णयुक् ४६

नाभिषेकं शिरोर्ध्वे तु कुक्कुटस्य शिरोऽग्रवत्
रक्तवर्णं तु पुच्छाग्रं पञ्चमान्तं तदायतम् ४७

घनं चोर्ध्ववक्त्रं च न प्रच्छादनमास्यकम्
सप्ताष्टपूर्ववत्साङ्गैर्वर्णवैपर्यं विश्वतः ४८

सौग्रामे क्षेत्रसीमान्ते चान्यग्र निरीक्षणम्
क्षणिकालयं संस्थाप्य पूजयेत्तन्त्रवित्तमः ४९

त्रिनाडि त्रिदिने वापि त्रिपक्षे वा त्रिमासके
नित्यं त्रिकालं संपूज्य शत्रुनाशं न संशयः ५०

रिपुसंग्रहणार्थं चेद्धस्तौ रात्रौ च कारयेत्
युद्धकाले रिपुसंभं स्तम्भं हस्तौ च बन्धनम् ५१

शिलामृण्मये वापि दारुजे कटिशर्करा
एतेषां वैनतेयं च वर्णसंस्कारमेव च ५२

त्रिंशत्यंशमग्रपक्षम्
तस्मादूके पक्षकैकांशहीनम्
तद्वदग्रे मूलतारं शरांशम्
पक्षैः सर्वैश्चाग्रतारं यथेष्टम् ५३

बाह्याबाह्ये पक्षसंयुक्तमेतत्
बाह्योश्चाग्रे संयुक्तं चाग्रपत्रम्
मानं कृत्वा पञ्चपक्षैः प्रधानम्
मानानुक्तं कन्यसा शोभनार्थम् ५४

पीतं श्वेतं श्यामरक्तं च कृष्णम्
मूलाग्रान्तं पञ्चवर्णं क्रमेण ५५

मालावर्धांशवत् कर्णसंयुक्तम्
श्रोण्यां च पक्षैः पङ्क्तिः पक्षधा स्यात्
वक्त्रं तुङ्गं विस्तृतं विहीनके
कर्तुर्मरणं न संशयः ५६

यत्र मानं विधिवत्प्रकारयेत्पुत्रवृद्धिः ५७

इति मानसारे वास्तुशास्त्रे गरुडमानविधानं एकषष्टितमोऽधायः

वृषभलक्षणम्

वृषभस्य लक्षणं सम्यग्वक्ष्यते विधिनाधुना
वायोरभिमुखं स्थाप्य पीठे वाथोत्सवेपि वा १

विमाने मण्डपे वापि चारोपरि परिन्यसेत्
द्वारतुङ्गसमं श्रेष्ठं त्रिभागं मध्यमं भवेत् २

कन्यसं द्विभागं स्यात्त्रिविधं वृषभोदयम्
एकहस्तं समारभ्य एकहस्तेन वर्धनात् ३

नवहस्तान्तमुत्सेधं कन्यसादि त्रयं त्रयम्
पञ्चविंशाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात् ४

एकत्रिंशति मात्रान्तं यः शुभायादिसंभवम्
बेरोत्सेधसमं श्रेष्ठं कर्णान्तं मध्यमं भवेत् ५

बाह्वन्तं कन्यसं प्रोक्तमुत्सवं वृषभोदयम्
पीठायामे त्रिभागैकं पीठतारसमं तु वा ६

पीठतारं त्रिपादं स्यात्त्रिविधं वृषभोदयम्
पादादुष्णीषसीमान्तं स्थानकं मानसंग्रहम् ७

स्थानकं शयनं वापि लोहजे वा शिलेऽथवा
दार्वाभासरत्नेन सुधामृतकटशर्करा ८

घनं वाप्यघनं वापि कुर्यात्तु शिल्पिवित्तमः
एवं तु वृषभोत्सेधं पञ्चादशाङ्गुलं भवेत् ९

उष्णीषात्तु गलाग्रान्तं दशमात्रं प्रशस्यते
तस्याधो वसुभागं स्याद् ग्रीवतुङ्गमिति स्मृतम् १०

तस्याधो चोरुमूलान्तं षोडशाङ्गुलमेव च

षडङ्गुलं चोरुदीर्घं द्विमात्रं जानुतुङ्गकम्  ११

जङ्घा चोरुसमं दीर्घं खुरोत्सेधं द्विमात्रकम्
ग्रीवात्तु पुच्छमूलान्तं चत्वारिंशाङ्गुलायतम्  १२

शृङ्गायामं युगाङ्गुल्यं शृङ्गतारं त्रिमात्रकम्
तदष्टांशैकभागं स्यात् शृङ्गाग्रस्य विशालकम्  १३

फालतारं नवाङ्गुल्यं मुखतारं शराङ्गुलम्
तत्समं चोच्छ्रयं कुर्यान्नेत्रायामं द्वयाङ्गुलम्  १४

अत्यर्धाङ्गुलमुत्सेधं निर्गमं सार्धमात्रकम्
नेत्रमध्ये मुखायाममष्टाङ्गुलमिति स्मृतम्  १५

तस्मात्कृकरकान्तं स्यात्षरामात्रं तदुदाहृतम्
शृङ्गमध्यं युगाङ्गुल्यं भालतुङ्गं तथैव च  १६

नेत्रान्मूलान्तं वेदमात्रान्तरं भवेत्
शरांशं श्रोत्रदीर्घं स्याच्छ्रोत्रमूलं द्विमात्रकम्  १७

तत्समं विस्तृतं चैव मध्यतारं युगाङ्गुलम्
शिवाङ्गुलाग्रवितारं यथाहलमर्धाङ्गुलम्  १८

अत्यर्धाङ्गुलं संप्रोक्तं नासिकायाममेव च
अङ्गुलं सुरविस्तारं तत्समं नासिकाग्रकम्  १९

पञ्चाङ्गुल स्यायतं स्यादुत्तरोष्ठं त्रिमात्रकम्
अधरोष्ठं त्रिमात्रं स्याज्जिह्वायामं गुणांशकम्  २०

तद्विस्तारं द्विमात्रं स्यात्तदर्धं तद् घनं भवेत्
ग्रीवतारं तु पञ्चांशं मूलतारं त्रिमात्रकम्  २१

पृष्ठग्रीवस्य मूले तु घनमष्टाङ्गुलं भवेत्
अग्रं षडङ्गुलं चैव कुर्याद् वासं षडङ्गुलम् २२

तदुत्सेधं चतुर्मात्रं ग्रीवात्वे लम्बनं बुधः
मूलमध्याग्रविस्तारं वेदबद्धकलाङ्गुलम् २३

घनमष्टाङ्गुलसंयुक्तं कुर्यात्तत्रैव योजयेत्
ग्रीवस्य पुरतो बिम्बं मूलव्यास द्वयाङ्गुलम् २४

हृदयात्स्निग्धपर्यन्तं तत्रोच्चं द्विर्नवाङ्गुलम्
पृष्ठोच्चं मनुमात्रं स्यात्पृष्ठतारं चतुस्त्रयम् २५

पृष्ठोरुमूलविस्तारं दशमात्रं प्रशस्यते
मध्यमं चाष्टमात्रं स्यादग्रं तु चतुरङ्गुलम् २६

शराङ्गुलं चोरुदीर्घं स्याज्ञानुतुङ्गं कलाङ्गुलम्
जङ्गायामं शराङ्गुल्यं खुरतुङ्गं द्विमात्रकम् २७

सार्धवह्न्यङ्गुलं जानुविस्तारं परिकीर्तितम्
खुरायामं द्विमात्रं स्यात्पुच्छमूलं द्विमात्रकम् २८

अपरोरुद्वयोर्मध्ये मुष्कशेषोदरान्वितम्
स्कन्धतारं षडङ्गुल्यं तस्याधो रुविशालकम् २९

मूलं वेदाङ्गुलं प्रोक्तमग्रस्यार्धगुणाङ्गुलम्
जानुतारं गुणाङ्गुल्यं तथो जङ्घाविशालकम् ३०

सार्ध द्व्यङ्गुलयोर्मध्ये तत्समं तत्खुरं भवेत्
शेषं युक्त्या च संयुक्तं श्वेतवर्णे शोभितम् ३१

श्वेतवर्णनिभं भद्रमग्रं हि कृष्णसधूमवत् ३२

वेदपादखुरैरपि कर्णयोः
श्वेतरक्तसमग्रमनोहरम्
शङ्खशत्यैः त्तणमरक्तं च माला
कर्णबन्धैः कर्णरुद्राक्षमाला ३३

अन्यैर्युक्तं किंशुकपुष्पमालैः
वंशस्योर्ध्वे व्याघ्रचर्माभिरामम्
भृङ्गकोलकललाटपट्टधृक्
पत्रवल्लिबहुरत्नशोभितम् ३४

कर्णयोर्वपुरपार्श्वचामरैः
पादनूपुरसभूषणान्वितम् ३५
इति मानसारे वास्तुशास्त्रे वृषभलक्षणविधानं नाम द्विषष्टितमोऽध्यायः

## सिंहलक्षणम्

देवानां वाहनं सिंहं लक्षणं वक्ष्यतेऽधुना
उष्णीषात्खुरवर्यन्तं तुङ्गं पञ्चशराङ्गुलम् १

उष्णीषं द्व्यङ्गुलं तुङ्गं सप्ताङ्गुलं मुखायतम्
उत्तरोष्ठं दशाङ्गुल्यं तस्मात्पाद रसाङ्गुलम् २

उत्तरान्तात्पुच्छमूलान्तमायामं पञ्चदशाङ्गुलम्
पृष्ठपादं शराङ्गुल्यं दीर्घ युक्त्या प्रयोजयेत् ३

मुखतारं कपोलान्तं नवमानं प्रशस्यते
कर्णमूलद्वयोरुक्तं मुखतारं विशालकम् ४

तत्तुल्यं व्यालविस्तारं मुखतारं शराङ्गुलम्
ललाटोच्चं शिवाङ्गुल्यं भ्रुवोच्चं तत्समं भवेत् ५

अक्षितारोच्चमेकांशं नासिकामूल शिवांशकम्

विस्तारं तत्समं स्यात्पुटमत्यर्धाङ्गुलं भवेत्  ६

नेत्रसूत्रादधो हृत्वा द्व्यङ्गुलं तत्प्रकीर्तितम्
कुर्यायामं शरांशं स्यादुत्सेधं सार्धमात्रकम्  ७

अधरोष्ठमर्धमात्रं स्यात्तदूर्ध्वे अंशमवसानकम्
अद्विसूत्रादधोशरन्तमुत्तरोष्ठं प्रकल्पयेत्  ८

कपोलं च द्विमात्रं स्यात्कर्णायामं शिवाङ्गुलम्
कर्णतारमर्धमात्रं स्यात् कर्णमूले तु तत्समम्  ९

दन्तदीर्घं शिवांशं स्यात्तदर्धं मूलविस्तृतम्
अर्धचन्द्रार्धवद् दन्तं संख्यया षट् कारयेत्  १०

पुरमिति प्रोक्तमसृक् वातायनं भवेत्
जिह्वायामं त्रिमात्रं स्यात्तद्विशालं शिवांशकं  ११

विशालार्धं घनं प्रोक्तं नासिकाघनं तत्समम्
नेत्रयोर्मध्यविस्तारं शिवाङ्गुलं तत्कथ्यते  १२

नासिमूले युगाग्रे च कर्णमूले कपोलके
पत्रवल्ल्यादिसंयुक्तं सिंहवक्त्रमिति स्मृतम्  १३

वक्त्रस्य प्रदेशे तु भ्रमरं कुर्यात्सुधीर्बुधः
लम्बकेशावृतं चैव स्तनयोरर्धांशदेशके  १४

नवाङ्गुलं तु वक्षस्य विस्तारं परिकीर्तितम्
त्रिमात्रं पादविस्तारं तलायामं शराङ्गुलम्  १५

तारं त्रिमात्रं स्यादायाममर्धाङ्गुलायतम्
व्याघ्रपादवदाकारं कुर्यात्पादचतुष्टयम्  १६

पृष्ठतारं दशांशं स्यात्पृष्ठोत्सेधं पडङ्गुलम्
शराङ्गुलं चोरुविस्तारं चोरुदीर्घं दशाङ्गुलम्  १७

पञ्चांशं कुक्षिविस्तारं तत्समं घनमेव च
सिंहोत्सेधसमं पुच्छं दीर्घ तारं शिवाङ्गुलम्  १८

मूलाग्रार्धमात्रं स्यान्मूलाग्रक्षयं क्रमात्
पुच्छाग्रे वलसंयुक्तमुक्षायामं त्रिमात्रकम्  १९

मूलतारं शिवाङ्गुल्यमग्रतारं त्रिमात्रकम्
लिङ्गायामं त्रिमात्रं स्यादर्धांशं लिङ्गविस्तृतम्  २०

श्वेतवर्णनिभं सिंहं रक्तवर्णं च केसरम्
अन्तस्थले तथैवास्यं कर्णान्तं तिथिरक्तयुक्  २१

बालचन्द्रवदाकारं नख दन्ताकृति तथा  २२

एवं प्रोक्तं सिंहरूपं जनानाम्
देवानां कल्पयेद् वाहनं स्यात्
मानं सर्वं चोक्तवद् गृह्यमेवम्
शयनं वा स्थानकं चासनं वा  २३

इति मानसारे वास्तुशास्त्रे सिंहलक्षणविधानं नाम त्रिषष्टितमोऽध्यायः

प्रतिमाविधानम्

षोडशप्रतिमादीनां विष्णुविभवसर्वतः
उष्णीषात्पादपर्यन्तं मानं संक्षिप्यतेऽधुना  १

लिङ्गमानवशाद् विष्णुमूलबेरवशात्क्रमात्
उत्तमं मध्यमं सार्धगर्भगेहविशालके  २

हर्म्यतारवशाद् द्वारं वंशाधिष्ठानपादुके

हस्तमानवशाद् गृह्यं तालमानावतालके ३

यजमानवशान्मूलबेरलिङ्गाङ्गुलं तथा
मानाङ्गुलवशान्मानं मानद्वादशभेदकम् ४

लिङ्गमानादिषरामानं भोगमानं सिद्धिदम्
हस्तादिवशान्मानं भोगमोनं प्रशंसितम् ५

अङ्गुलं मुक्तिकामस्य कर्तुरिच्छावशान्नयेत्
तस्मात्तन्मूललिङ्गादिमानं मानधृतमुच्यते ६

लिङ्गे स्वयंभुवे ज्ञात्वा मानुषे च द्विधा भवेत्
स्वयंभुलिङ्गे तु शिरोमानं च संग्रहम् ७

परिणाहे यथा स्थूलं देशे विस्तारं मानयेत्
मानुषं लिङ्गतुङ्गे तु तच्छिरोमानकं त्यजेत् ८

विस्तारे परिणाहे तु यदिच्छं देहं गृह्यते
एवं लिङ्गद्वयोत्तुङ्गे पीठमानं त्यजेद् बुधैः ९

लिङ्गशुद्धोदयं वाथ तत्तन्नाहसमं भवेत्
केचित्तत्त्रियमानं तु षोडशांश विभाजिते १०

तत्तदंशेन वृद्धिः स्याद्धीनं वा देशकान्तकम्
अथवा तत्तदंशेन लोकभूततलांशकम् ११

नवमेकादशं चैव द्व्यधिक्यं वाध हीनकम्
एवं लिङ्गवशात्प्रोक्तं विष्णुबेरवशोच्यते १२

मूलबेरसमं वापि नेत्रान्तं वा पुटान्तकम्
हन्वन्तं बाहुसीमान्तं स्तनान्तं हृदयान्तकम् १३

नाभ्यन्तं मेढ्रसीमान्तं नवमानम् चोत्सवोदयम्
तदर्धं कौतुकोत्सेधं कन्यसादि त्रयं त्रयम्  १४

शुद्धगर्भगृहं कृत्वा नन्दनन्दोदयं भवेत्
तदेवं नवमानं स्यान्नवतिविधमानकम्  १५

एवं गर्भगृहमानवशान्मानं प्रकल्पयेत्
प्रासादविधृते मानं गर्भगेहप्रमाणवत्  १६

शुद्धद्वारोदयं वाथ विस्तारे मे व वा
तत्पादाधिकहीनं वा तत्तयोर्मध्यमानके  १७

समं वा पादमाधिक्यं द्वारमानं दशोदयम्
अधिष्ठानोदयं चैव पादतुङ्ग द्वयं ततः  १८

प्रत्येकं नवधा कृत्वा नवमानमुदीरितम्
हस्तादिनवहस्तान्तं हस्तमानवशोदयम्  १९

तालादिनवतालान्तं नवतालादिमानकम्
मुष्ट्यादि नवमुष्ट्यन्तं मुष्टिमाननवोदयम्  २०

कर्तृतुङ्गसमं वापि नेत्रान्तं च पुटान्तकम्
हन्वन्तं स्कन्धसीमान्तं स्तनान्तं हृदयान्तकम्  २१

स्यात्कर्तृमानं नवोदयम्
एतेषां चाष्टमानं तज्जात्यंशैस्तु नियोजयेत्  २२

तन्मानं शिल्पिभिः प्राज्ञा षट्शुभायादि कारयेत्
अशुभायादिकं चोक्तं त्रिंशद्भाग विभाजिते  २३

तद्भागैकेन वृद्धिः स्याद् यश् शुभायादिसंभवम्

सकलं चोत्सवादीनां यश् शुभांशावसानकम्  २४

अंशकं मानमेवोक्तमङ्गुलैर्मानमुच्यते
यल्लिङ्गतुङ्गं संग्राह्य चतुर्विंशच्छतान्तकम्  २५

लिङ्गाङ्गुलमिति प्रोक्तं बेरं तालवशादपि
कृत्वा बेराङ्गुलं प्रोक्तं मानाङ्गुलमिहोच्यते  २६

यवताराष्टमात्रं स्याद् देवानामङ्गुलं भवेत्
मध्यं मुनियवाङ्गुल्यं षट्पञ्चाङ्गुलायतम्  २७

मानाङ्गुलमिति प्रोक्तं देहलब्धाङ्गुलं भवेत्
अङ्गुलद्वयमारभ्य जात्यंशम विनोदयम्  २८

द्वित्र्यङ्गुलं समारभ्य मध्यं भूताङ्गुलारभेत्
सप्ताङ्गुलं समारभ्य द्विद्वयङ्गुलविवर्धनात्  २९

पञ्चविंशच्छतान्तं स्याद् यश् शुभायादिसंभवम्
नागं नन्दं गुणं चाष्टनववेदगुणास्तथा  ३०

भानुपङ्क्त्यष्टहर्मौ निनन्दक्षयं क्रमात्
शेषमायामयोन्यं च नक्षत्रं वारमंशकम्  ३१

दरिद्रं दारनाशं च श्रीकं विजयाद्भुतम्
भुक्तिं मुक्तिं च भोगं च अर्थलाभद्वयावहम्  ३२

कीर्तिदं पुष्कलं चैव द्वादशायां च तत्फलम्
सिद्धिदं विजयं चैव श्रीकरं चार्थहानिकम्  ३३

भोगं च शत्रुनाशं च चक्षुमायार्थलाभकम्
मुदितं सौख्यकं चैव दशधा वेथतत् फलम्  ३४

आयं सर्वहरं पुण्यं व्ययं सर्वहरं सुखम्
आयाधिक्यं व्ययं हीनं सर्वसंपत्क सदा  ३५

यत्फलं शुभयुक्तं चेदायहीनं तदूषणम्
पूज्यं व्ययं सममेवं तत्र दोषो न विद्यते  ३६

ध्वजः सिंहो वृषो हस्ति स तेषां शुभयोनयः
जन्मद्वयं चतुःषष्टिभिरष्टनन्दशुभन्वतम्  ३७

नामजन्मादिनन्दं च गणनैस्तु विधीयते
कर्तृराश्यादिनाश्यं च सेना द्वितीयान्तकम्  ३८

तृतीये मानजन्वादौ पूर्ववद् गणनैस्तु वा
तस्मात्तृतीयपर्यन्तमृन्वैः सर्वशुभावहम्  ३९

गुरुशुक्रबुधचन्द्रमुख्यवारं प्रशस्यते
तस्करोधन षण्डश्च प्रेष्यान्यानि शुभांशकम्  ४०

वर्ज्यं षष्ठाष्टमं राशिमन्यत्सर्वं शुभं भवेत्
गस् सर्वशुभं प्रोक्तं मानुषासुरं वर्जयेत्  ४१

एकनेत्रं द्विनेत्रं वा संयुक्ता सं विसर्जयेत्
शुभयोगं शुभमेवं मृत्युयोगविनाशनम्  ४२

यत्र दोषो गुणाधिक्यं तत्र दोषो न विद्यते
तेषामधिकगुणं वानं सर्वदोषकरं भवेत्  ४३

तस्मात्परिहरेद् विद्वान् जनमेवं प्रकल्पयेत्
तन्मात्राङ्गुलमानोच्चमात्मार्थं प्र   यम्  ४४

कुर्यादायादि सर्वेषां चोक्तवच्छिल्पिवित्तमः

अन्यान्यमन्यतो ग्राह्यं चोक्तवत्तत्र वित्तमः ४५

ब्रह्माविष्णुरुद्राणां बुधस्य जनकस्य च
अन्यैश्च व मानं तु संग्रहम् ४६

एवं तु चोत्सवादीनां स्थावरं जङ्गमादिनः ४७
इति मानसारे वास्तुशास्त्रे प्रतिमाविधानं नाम चतुःषष्टितमोऽध्यायः

## उत्तमदशतालविधानम्

उत्तमं दशतालस्य लक्षणं वक्ष्यतेऽधुना
भूर्धादिपादपर्यन्तं तुङ्गमानं प्रशस्यते १

चतुर्विंशच्छतं कृत्वा तथैवांशेन मानयेत्
उष्णीषात्केशपर्यन्तं चतुर्मात्रं प्रशस्यते २

केशान्तादिहन्वन्तं सैकार्कांशं मुखायतम्
अर्धांशं गलमानं स्याद् वेदांशं गलतुङ्गकम् ३

गलान्ताद्धृदयान्तश्च उदरं नाभिसीमकम्
नाभेस्तु मेढ्रसीमान्तं सार्धत्रयोदशांशकम् ४

मेढ्रान्तमूरुदीर्घं स्यात् सप्तविंशाङ्गुलं भवेत्
जानुतुङ्गं युगाङ्गुल्यं जङ्घा चोरुसमायतम् ५

पादजानुसमोत्तुङ्गं मुखायामं त्रिधा भवेत्
अक्षिसूत्रावसानं च तस्याधो तत्पदान्तकम् ६

हिक्कासूत्रादधो बाहुदीर्घमृक्षाङ्गुलं भवेत्
कूर्परं च द्विमात्रं स्यान्मणिबन्धावसानकम् ७

प्रकोष्ठमेकविंशांशं दीर्घं तस्य तलायतम्

मध्याङ्गुल्याग्रपर्यन्तं सार्धत्रयोदशांशकम् ८

तन्मध्यमङ्गुलायामं सार्धं षडङ्गुलं भवेत्
शेषं चान्तस्तलायामं पाद सप्तदशांशकम् ९

अङ्गुष्ठात्पार्ष्णिपर्यन्तं तद्दीर्घाङ्गुष्ठ मायतम्
सपादवेदाङ्गुलं प्रोक्तं तदर्धं विस्तृतं भवेत् १०

तदर्धं नखविस्तारं तत्पादोनायतं तथा
नखं वृत्तायतं चैव चांशं तन्मुखं मांसलम् ११

नखं तत्पार्श्वयोश्चैव शेषं तु तत्समाङ्गुलम्
यवहीनार्धवेदांशं तर्जनीदीर्घकं भवेत् १२

पादहीनं चतुर्भागं मध्यमाङ्गुलमायतम्
सयवत्र्यंशकं चैवानामिकायाममिष्यते १३

अर्धांशकद्वयाङ्गुल्यं कनिष्ठाङ्गुलदीर्घकम्
यवाधिक्यांशकं सार्धं यवहीनांशकं तथा १४

यवाधिकं त्रिपादं च त्रिपादं तद्यथाक्रमम्
प्रादेशिन्यादि कनिष्ठान्तं विस्तारं तत्प्रशस्यते १५

स्वस्वताराधविस्तारं नखं प्रागुक्तवद् भवेत्
गुल्फाद्धिं मध्यसूत्र तु तलग्रान्तं तलायतम् १६

षडयवाधिकमष्टांशं तत्सूत्रात्पार्ष्णिमूलकम्
वेदांशं चायतं तारं यवोपेतशरांशकम् १७

पश्चात्पार्ष्णिकपर्यन्तं वह्न्यर्धांशकमायतम्
पार्ष्णिमूलं षडंशं स्याद् गुल्फाधो तत्प्रदेशके १८

तलमध्यमविस्तारं षडंशं यडयवाधिकम्
अग्रतारं षडंशं तु तद्धनं च त्रयाङ्गुलम्  १९

पादमध्योच्छ्रयं सार्धवेदमात्रं प्रशस्यते
अङ्गुलीनां द्विपर्वं स्याच्छेषं युक्त्या प्रयोजयेत्  २०

सपादभूताङ्गुलं चैव गुल्फतारमिति स्मृतम्
सपादवेदाङ्गुलं चोर्ध्वे नालिकाविस्तृतं भवेत्  २१

जङ्घामध्ये च विस्तारं सार्धषरामात्रं मानयेत्
जङ्घामूलस्य विस्तारं वसुमात्रं प्रशस्यते  २२

नवाङ्गुलं प्रकर्तव्यं जानुदेशविशालकम्
ऊरुमध्यविशालं तु द्वादशाङ्गुलमीरितम्  २३

सार्धत्रयोदशांशं स्यादूरुमूलविशालकम्
विंशांशं च कटितारमूर्ध्वे श्रोणि विशालकम्  २४

सार्धमष्टादशाङ्गुल्यं मध्योदरविशालकम्
षोडशांशं भवेच्चोर्ध्वे हृदयावधितारकम्  २५

सार्धद्विनवमात्रं स्याद् वक्षस्थलविशालकम्
एकविंशाङ्गुलं चोर्ध्वे कक्षयोरन्तरस्थलम्  २६

द्वाविंशांशकं चोर्ध्वे चत्वारिंशार्धमात्रकम्
बाहुपर्यन्तविस्तारं बाहुमूलविशालकम्  २७

नवांशं ग्रीवविस्तारं तत्समं तद् विधीयते
मुखविस्तारं भान्वंशं पुरस्तस्मात्प्रदेशके  २८

केशान्तोपरि माने तु शिरोतारं दशाङ्गुलम्

केशान्तान्नेत्रसूत्रान्तं द्विभागं तद् विभाजिते २९

तदेकांशं ललाटोच्चं शेषं दृष्टिप्रदेशकम्
दृष्टिभालद्वयोर्मध्ये सुभ्रूस्थानं प्रकल्पयेत् ३०

भ्रुवायामं शराङ्गुल्यं भ्रुवतारमर्धमात्रकम्
तदर्धं मध्यता स्थान्मूलाग्रान्तं क्षयं क्रमात् ३१

भ्रुवयोरन्तरायान्तं पादांशं षड्यवांशकम्
नेत्रायामं त्रिमात्रं स्याद् विस्तारं तच्छिवांशकम् ३२

नेत्रयोरन्तरं मध्ये द्विमात्रं तत्प्रशस्यते
त्रिंशैकद्वयपञ्चैव नेत्रमूर्धाग्ररक्षयोः ३३

शेषमभ्यन्तराद्विः स्यात्तत्त्रिभाग विभाजिते
कृष्णमण्डलमेकांशे शेषं तच्छ्वेतमण्डलम् ३४

कृष्णमण्डलसंकाशं ज्योतिर्मण्डलमंशकम्
कृष्णमण्डलमध्ये तु ज्योतिर्मण्डलकं विदुः ३५

नेत्रमध्ये तथा कृष्णज्योतिरन्तांशकमंशकम्
दृष्टिमण्डलमेवोक्तं ज्योतिर्मण्डलमध्यमे ३६

ऊर्ध्वाधो वर्मविस्तारं द्व्यङ्गुलार्धं त्रिमात्रकम्
मत्स्याकाराद्विमात्रं स्याद् भ्रुवः कोदण्डवत्सुधीः ३७

श्रोत्रायामं तु वेदांशं नालायाममर्धमधिकम्
भ्रूमध्यसमं श्रोत्रमग्रमेवं प्रकल्पयेत् ३८

पिप्पल्यायामविस्तारं तदर्ध विस्तृतं भवेत्
नालान्तरं त्रिमात्रं स्यात्तदर्धं श्रोत्रवद् घनम् ३९

श्रोत्रतारं द्वियर्धांशं शेषमूह्यं विचक्षणः
नेत्रान्तात्कर्णसीमान्तं द्व्यन्तरं सप्तमात्रकम् ४०

द्व्यर्धांशं नास्य विस्तारमग्रमेकाङ्गुलं भवेत्
पुटतारार्धमात्रं स्यात्तद्दीर्घं षडयवं भवेत् ४१

सुषिरं चार्धमात्रं स्यात्तारं पञ्चयवं भवेत्
पुष्करोत्सेधमंशं स्याद् विस्तारं तद्द्वयं भवेत् ४२

एकांशं द्वयमाधिक्यं नासिमध्यं तु विस्तृतम्
तदर्धं मूलविस्तारं तुङ्गमेवं यथाक्रमम् ४३

गोजिमूलं तदग्रान्तं नासितुङ्गं द्वयाङ्गुलम्
पुष्करं स्यादधोगोजि दीर्घं चतुर्यवं भवेत् ४४

निम्नं तु यवं चैव विस्तारं त्रियवं तथा
तस्मात्तथोत्तरा पालि यवमेवं विधीयते ४५

तस्याधश्चोत्तरोष्ठं च तारं षडयवं भवेत्
आहृत्वार्धयवं चैव तद्वायाधारयुक् ४६

अधरोष्ठं शिवांशं स्याद् विस्तारं चोन्नतसमम्
अस्यायामं चतुर्मात्रमसृक्कान्तं तु कारयेत् ४७

त्रियंशार्धाधरायामं चार्धं चन्द्रवदाकृति
त्रिवक्त्रं चोत्तरा पाली चान्तैश्चैव संयुतम् ४८

द्वयं तत्तद्विस्तारं तत्समं चायतविस्तृतम्
अधरोर्ध्वं तु दन्तं च तद् द्व्यत्रिंशत्तु दन्तकम् ४९

अधरस्याधोदेशे चिबुकायाः शिवांशकम्

शेषं यच्चान्तरमुत्सेधं हन्वन्तं तत्प्रदेशके ५०

हन्वन्तं विस्तृतं ज्ञात्वा सार्धवह्नयङ्गुलं भवेत्
हन्वन्तं कर्णबन्धान्तं द्वयान्तरं दशाङ्गुलम् ५१

हन्वन्तरद्वयोर्मध्ये निम्नतुङ्गं शिवायतम्
हन्वन्तायतवृत्तं स्याद् विस्तारार्धसमं भवेत् ५२

द्वियवाधिकमंशं च हन्वन्ताद् गोजि तद् भवेत्
हन्वन्तं मध्यमूले तु गले तद् द्वयमात्रकम् ५३

एवं तु गलमानं स्यात्तदर्धं निर्गमं बुधैः
नयन तत्त्रित्रिपादं च ललाटे नेत्रमानकम् ५४

अथवा तत्त्रिपादं च चार्धं वाथ त्रिधा भवेत्
संहारं च स्थितिः सृष्टिर्दृष्टिरेवं शिवस्य च ५५

नवत्यष्टरोमदृष्टिनन्दं ध्यात्वा शिल्पिवित्तमः
ग्रीवरोम यथा कृत्वा तस्य मानं न योजयेत् ५६

यथा युक्त्या तथा वक्त्रे कुर्यात्तु तत्प्रदेशके
द्वियवाधिकमष्टांशं बाहुमध्यमविस्तृतम् ५७

कूर्परं तद् विशालं स्यात्सप्तमात्रं प्रशस्यते
प्रकोष्ठमध्यविस्तारं यवोपेतशरांशकम् ५८

मणिबन्धविशालं तु सार्धवह्नयङ्गुलं भवेत्
तत्तले मूलविस्तारं सप्तमात्रं तु कारयेत् ५९

तन्मध्यमविशाले तु सार्धषण्मात्रकं भवेत्
तलादग्रतारमर्धमाधिक्यं पञ्चाङ्गुलं विधीयते ६०

बहिः सार्धषडङ्गुल्यं मणिबन्धा तलायतम्
तस्मात्तु चाङ्गुलानां च दीर्घं युक्त्या तद्बहिर्भवेत् ६१

पुरोक्तानां तत्तद्दीर्घमङ्गुलीनां तत्तदायतम्
सपादोपेतवेदांशं चानामिकाङ्गुलदीर्घकम् ६२

प्रादेशिन्यायाम भूतांशं स वेदाङ्गुष्ठकनिष्ठकम्
अङ्गुष्ठमूलविस्ता सपादाङ्गुलमेव च ६३

तर्जन्यनामिमूले तु विस्तारं तच्छिवांशकम्
मध्यमाङ्गुलिमूले तु विशालं स्यात्त्रियंशकम् ६४

षडच तत्कनिष्ठे तु विशालं तस्य मूलके
तत्तदिद्वरष्टभागे तु तदेकांशविहीनकम् ६५

शेषाङ्गुल्यग्रविस्तारं विभजेत्त्रियंशकम्
द्विभागं नखविस्तारं शेषं तु तद् द्विपार्श्वयोः ६६

अङ्गुलं नखविस्तारे चतुर्भागैकमधिकम्
नखायाममिति चाग्रं द्वियवं तत्प्रशस्यते ६७

तर्जन्याद्यङ्गुलादीनां दीर्घं वह्न्यंशकं भवेत्
पर्वदीर्घं तदेकांशं युगलानां त्रिपर्वकम् ६८

अङ्गुष्ठे तु द्विपर्वं स्यादायामे तद्विभागतः
तर्जनीमूलपार्श्वे तु श्रेष्ठोर्ध्वे मूलकावनी ६९

तद्द्वयोर्मध्यदीर्घं स्यात्त्र्यंशं द्व्यंशं तद्घनम्
शेषं तं मणिबन्धान्तं दीर्घं साङ्घ्रियुगाङ्गुलम् ७०

तस्याङ्गुष्ठादधोदेशे सार्धद्व्यङ्गुलं घनम्

तद्विशालं गुणांशं स्यात्पार्ष्णितारं युगाङ्गुलम्  ७१

तद्घनं च त्रियंशं स्यादग्रं तु द्वियवांशकम्
अन्तस्तलं द्विमात्रं स्याद् विशालं निम्नर्यवम्  ७२

पद्मं त्रिशूलवत् शङ्खं चक्रवत् सूक्ष्मरेखया
शेषं युक्त्या तथा हस्ते प्रदेशं कारयेद् बुधः  ७३

शिरःपृष्ठे विशालं स्यान्नवमात्रं प्रशस्यते
कर्णान्तं नासिकाग्रान्तं सार्धत्रयोदशांशकम्  ७४

हिक्कासूत्रोपरि स्कन्धं गलसन्धि युगांशकम्
गलसन्ध्या ककुद्मानं पञ्चमात्रं प्रशस्यते  ७५

तस्मात्कटिसूत्रान्तं सप्तविंशाङ्गुलं भवेत्
तस्मात्तु पायुसीमान्तं सार्धत्रयोदशांशकम्  ७६

पश्चिमे तदेकविंशत्यंशं तत्तदङ्गुलविस्तृतम्
सप्तादशाङ्गुलं पञ्च श्रोणिदेशे विशालकम्  ७७

तदूर्ध्वे मध्यकायं तु विशालं श्रोणिविशालकम्
एकविंशाङ्गुलं चैव तदूर्ध्वे च स्तनापरौ  ७८

सप्तविंशाङ्गुलं चैव कक्षयोरन्तरं स्थलम्
वंशनिम्नं शिवांशं स्यात् कटिमध्यान्तरायतम्  ७९

विस्तारं तु द्विमात्रं स्याद् युक्त्या तत्रैव कारयेत्
तस्मात्कुक्षिवसानं स्याद् भान्वंशं फलकायतम्  ८०

फलकाद्वयोर्मध्ये द्व्यन्तरं वेदमात्रकम्
फलकांशे तु स्कन्धसीमान्तं बाणार्धांशमुन्नतम्  ८१

बृहती सप्तांशकं कक्षान्तरसमायतम्
बृहती स्तनसीमान्तं सार्धद्विरष्टमात्रकम् ८२

त्रयोदशांशकं चैव कटिसूत्रं तु विस्तृतम्
ऊरुमूलं तु निर्गमं च तत्समं तु युगाङ्गुलम् ८३

विस्तारं नवांशं स्यात्तत्तत्पिण्डौ सुवृत्तकौ
स्तनपीठं द्विमात्रं स्याद् विस्तारं तत्सुवृत्तकम् ८४

स्तनपक्षद्वयस्यान्तं तत्समं चोदयं तथा
हिक्का च हृदयं चैव निम्नकं च यवं स्मृतम् ८५

हिक्कात् स्तनान्तं स्यात् हिक्काया कक्षान्तरं तथा
सार्धत्रयोदशांशं स्याद् द्वियवं नाभिनिम्नकम् ८६

नाभिप्रदक्षिणवृत्तं मूलवत्कारयेद् बुधैः
नाभ्यधः कटिसीमान्तं कुक्षिदीर्घं षडङ्गुलम् ८७

नाभ्या वस्त्रसीमान्तं वेदमात्रं प्रशस्यते
कटितुङ्गार्धसप्तांशं तस्यान्तं मेढ्रमूलकम् ८८

मेढ्रपीठस्य विस्तारं चतुर्मात्रं प्रशस्यते
तस्मात्तु लिङ्गदीर्घं स्याद् द्वादशांशं विधीयते ८९

मुष्कायामं द्वयार्धांशं तद्विस्ता तथांशकम्
लिङ्गतारं शिवांशं स्यात् शेषं युक्तितो न्यसेत् ९०

तदेवाधिकहीनं वा शोभार्थं चैकमात्रकम्
उक्तमानाङ्कैः सर्वैः तत्र दोषो न विद्यते ९१

तदूर्ध्वेऽधिकहीनं चेत्सर्वदोषसमुद्भवम्

तस्मात् परिहरेच्छिल्पी प्रतिमानं तु सर्वदा ९२

ब्रह्माविष्णुरुद्राणां मानयेन्मानवित्तमः
अन्येषां चैव देवानां मानं कुर्याच्छुभावहम् ९३

एवं तु चोत्तमं पङ्क्तितालं प्रोक्तं मुनीश्वरैः ९४
इति मानसारे वास्तुशास्त्रे प्रतिमानामुत्तमदशतालविधानं नाम
पञ्चषष्टितमोऽध्यायः

## मध्यमदशतालविधानम्

स्त्रीमानं दशतालं च लक्षणं वक्ष्यतेऽधुना
पादादुष्णीषसीमान्तं सविंशतिशताङ्गुलम् १

तदेकाष्टांशकं चैव यवमानमुदीरितम्
उष्णीषात्केशपर्यन्तं चतुर्मात्रं शिरोदयम् २

तस्याधो नेत्रसूत्रान्तं पञ्चाङ्गुलमिति स्मृतम्
पुटान्तं नासिदीर्घं स्याद् वेदमात्रं प्रशस्यते ३

पुटान्ताद्धनुपर्यन्तं सार्धं वह्नयङ्गुलं भवेत्
अर्धांशं गलसन्धिः स्याद् गलोत्तुङ्गं युगाङ्गुलम् ४

हिक्कात् हृदयान्तं च सैकार्कमङ्गुलं भवेत्
तस्मान्नाभिसीमान्तं मेढ्रान्तं तत्समं भवेत् ५

मेढ्रात्तु चोरुतुङ्गं स्यात्षड्विंशमङ्गुलं भवेत्
जानुतुङ्गं चतुर्मात्रं जङ्घा चोरुसमं भवेत् ६

पादोत्सेधं युगाङ्गुल्यं पार्ष्ण्याऽङ्गुष्ठावसानकम्
तलं षोडशमात्रं स्यादायाममिति कथ्यते ७

हित्का सूरादधो बाहुदीर्घं षड्विंशदङ्गुलम्
कूर्परं च द्विमात्रं स्याद् विंशांशं प्रकोष्ठायतम् ८

मध्याङ्गुल्याग्रपर्यन्तं तलं त्रयोदशांशकम्
आयामं तत्षडङ्गुल्यं मध्यमाङ्गुलिदीर्घकम् ९

शेषं तु तलदीर्घं स्याद् वेदमङ्गुष्ठमायतम्
सार्धपञ्चाङ्गुलायामं तर्जन्यनामिकायतम् १०

कनिष्ठाङ्गुलायतं चैव चतुर्मात्रं प्रशस्यते
मुखतारमर्कमात्रं स्यात्कर्णपर्यन्तमेव वा ११

तस्याधो मुखविस्तारं कर्णान्तं रुद्रमात्रकम्
सप्ताङ्गुलं गलतारं मध्यमूलं तदग्रकम् १२

पञ्चादशाङ्गुलं प्रोक्तं वक्षयोरन्तरं स्थलम्
तस्याधो स्तनदेशे तु तारं पञ्चदशाङ्गुलम् १३

प्रत्येकं स्तनविस्तारमर्धाधिकनवाङ्गुलम्
वेदार्धार्धाङ्गुलं तुङ्गमक्षिमध्याङ्गुलं भवेत् १४

विस्तारं द्व्यङ्गुलं प्रोक्तं स्तनचूचुकमण्डलम्
स्तनान्तं हृदयान्तं स्यात्तारं त्रयोदशाङ्गुलम् १५

मध्योदरविशालं स्यादेकादशाङ्गुलं भवेत्
तस्याधो नाभिदेशे तु तारं त्रयोदशाङ्गुलम् १६

नाभिदेशादधोदेशे तारं पञ्चादशाङ्गुलम्
तस्याधो श्रोणिविस्तारं विंशत्यङ्गुलमेव च १७

चतुर्विंशाङ्गुलं श्रोण्यादधः कटिविशालकम्

त्रयोदशांशं प्रत्येकं चोरुमूलविशालकम्  १८

ऊरुमध्यविशालं स्याद् द्वादशाङ्गुलमीरितम्
नवाङ्गुलं चाग्रविस्तारं सप्तांशं जानुविस्तृतम्  १९

जङ्घामूलं रसाङ्गुल्यं मध्यतारं शराङ्गुलम्
नलकान्तं युगाङ्गुल्यं गुल्फं सार्धयुगाङ्गुलम्  २०

तारं स्यात्तलविस्तारं चतुर्मात्रं प्रशस्यते
अग्रतारं शराङ्गुल्यं पार्ष्णितारं युगाङ्गुलम्  २१

अङ्गुष्ठायाम वेदांशं तर्जनी तत्समं भवेत्
मध्यमाङ्गुलीदीर्घं स्यात्सार्धं वह्न्यङ्गुलं भवेत्  २२

वह्न्यंशमनामिकायामं कनिष्ठं द्विमात्रकम्
दीर्घाङ्गुष्ठं च विस्तारं द्व्यङ्गुलेनांशं तर्जनी  २३

तारं सप्तषट्पञ्चयवमन्याङ्गुलं त्रयम्
मध्याङ्गुल्यकनिष्ठान्तं विस्तारं परिकीर्तितम्  २४

बाहुमूलविशालं च चाग्निं जङ्घाङ्गुलं भवेत्
मध्यतारमर्धषरामात्रमग्रतारं षडङ्गुलम्  २५

कूर्परं सार्धपञ्चांशं विस्तारं परिकीर्तितम्
प्रकोष्ठमूलविशालं तु पञ्चाङ्गुलमिति स्मृतम्  २६

मध्यं सार्धयुगाङ्गुल्यं तारं चाग्रं युगाङ्गुलम्
मणिबन्धविशालं स्याद् वह्न्यङ्गुलमिति स्मृतम्  २७

तलतारं शराङ्गुल्यं कन्याङ्गुलाङ्गुष्ठविस्तृतम्
षडयवं तर्जनीतारम्  तत्तुल्यमनामिकाविस्तृतम्   २८

सार्धपञ्चयवं तारं कनिष्ठाङ्गुलिमूलके
मध्याङ्गुलविस्तारं च मूल सप्तयवं भवेत् २९

केशान्तं नेत्रसूत्रान्तं द्वयोर्मध्ये भ्रुवः स्थितिः
एकांशं नेत्रविस्तारं नेत्रायामं गुणाङ्गुलम् ३०

पुटबाह्यासानं स्याद् द्व्यङ्गुलं नासिविस्तृतम्
मध्यतारं शिवाङ्गुल्यं तदर्धं मूलविस्तृतम् ३१

पादोनद्विमात्रं स्यात्कक्षयोरन्तरं भवेत्
भ्रूमूलं च द्वयोर्मध्ये चैकाङ्गुलमुदीरितम् ३२

भ्रुवायामं नवाङ्गुल्यं भ्रुवतारं द्विमात्रकम्
अक्षायामं त्रिधा चैकं तन्मध्ये कृष्णमण्डलम् ३३

आपाकारं भ्रुवाकारं मत्स्याकारमक्षकं तथा
पुटतारोदयं चार्धमात्रं युक्त्या प्रयोजयेत् ३४

तिलपुष्पाकृतिर्नासि पुटं निष्पावबीजवत्
कुर्यादास्यायतं वेदमात्रं सृक्कान्तमेव च ३५

उत्तरोष्ठविशाले तु यवपञ्चकमेव च
अधरोष्ठं षड्यवं स्यादायामं च द्विमात्रकम् ३६

कुक्कुटाण्डसमाकारं मुखं युक्त्या प्रकारयेत्
भ्रूमध्यसमं कर्ण श्रोत्रतुङ्गं युगाङ्गुलम् ३७

तत्समं नाललम्बं स्याद् घनमर्धाङ्गुलं भवेत्
अश्वत्थपत्रवत्कुर्याद् योनितारं युगाङ्गुलम् ३८

दीर्घं सप्ताङ्गुलं प्रोक्तमूर्ध्वतारायतं तत्समम्

शेषं तु चोत्तमपङ्क्तितालवत्कारयेत् सुधीः  ३९

इति मानसारे वास्तुशास्त्रे स्त्रीमानमध्यमदशतालविधानं नाम
षट्षष्टितमोऽध्यायः

## प्रलम्बलक्षणम्

सर्वेषां देवदेवीनां ऋजुस्थानके चासने
मानसूत्रविधिं सम्यग्लक्षणं वक्ष्यतेऽधुना  १

बेरायामसमं वापि त्रिपादं चार्धमेव वा
आयामं त्रिविधं प्रोक्तं तत्तदूर्ध्वविशालकम्  २

देवलब्धाङ्गुलं चैव चतुस्त्रिद्व्यङ्गुलं घनम्
एवं प्रलम्बफलका प्रक्षणं चतुरश्रकम्  ३

तत्समं चासनं कुर्याद् घनं मानाङ्गुलेन च
चतुष्पादं त्रिपादं च द्विपादैकाङ्घ्रिमेव वा  ४

आसनस्योपरि स्थाप्य मध्यबेरं विनिक्षिपेत्
सपादबेरायतं वाप्यध्यर्धेनाङ्घ्रितुङ्गकम्  ५

पादतारं यथायुक्त्या कारयेत्तक्षकेन तु
फलका चासने चैव मुनिसूत्रं प्रसारयेत्  ६

कुर्याद्युक्त्या च पादोर्ध्वे प्रलम्बफलकां न्यसेत्
सूत्राग्रे कन्दुकाकारं लौहे पाषाणकेऽथवा  ७

तन्मध्ये सुषिरं कृत्वा बन्धयेच्छिल्पिवित्तमः
फलके योजयेत्सर्वं सूत्रमेवं प्रशस्यते  ८

पूर्वापरपार्श्वे तु कायमध्ये प्रलम्बयेत्
स्थानके चासने वापि पञ्चसूत्रमुदीरितम्  ९

मुखान्तं द्विद्विमात्रं स्याल्लम्बं सप्तमिति स्मृतम्
तत्पृष्ठशिरःपार्श्वे तु वक्त्रान्तं रज्जुं लम्बयेत् १०

नवसूत्रमिति प्रोक्तमेकादशमिहोच्यते
कक्षतारं द्वयो सूत्रं लम्बयेद् रुद्रसूत्रकम् ११

अथवा पृष्ठमध्ये तु सूत्र मन्वन्त लम्बयेत्
चतुर्दिक्षु चतुर्मध्ये पञ्चसूत्रं प्रधानकम् १२

अन्यथा पुरतो देशे सर्वं मध्यादि लम्बयेत्
पुटपार्श्वौ मखान्तौ च कुक्षौ बाहुपार्श्वकौ १३

लम्बयेत्सूत्रमित्युक्तमेतदेकादश तथा
परहस्तौ पुटपार्श्वे सूत्रं त्यक्त्वा चतुष्टयम् १४

शेषं तु सर्वसूत्रं स्यादासने च प्रकल्पयेत्
स्थानके रुद्रसूत्रं स्याल्लम्बयेद् विचक्षणः १५

शिखामणिस् तु मौल्यग्रे मध्यमे मौलिमध्यमे
मौलिमूलं च पट्टं च ललाटस्य तु मध्यमे १६

भ्रुवयोर्मध्यमे नासिमध्यमे हनुमध्यमे
हिक्काच मध्यमे चैव तथा हृदयमध्यमे १७

तस्याधो नाभिमध्ये च मेढ्रमध्यं तथैव च
ऊरुमूलद्वयोर्मध्ये जान्वयोर्मध्यमे तथा १८

नलका द्वयोर्मध्ये पार्ष्णियोर्मध्यमे तथा
तलमध्यद्वयोर्मध्यमङ्गुष्ठयोर्मध्यमे तथा १९

एवं तु लम्बयेत्कुक्षिनासाग्रे स्पर्शयेद् बुधः

सूत्रात् शिखामणिं स्याद् द्व्यन्तरं द्वादशाङ्गुलम्  २०

सूत्रान्मौलिमूलान्तं रसमात्रान्तरं भवेत्
सूत्रं ललाटमध्यं तद् द्व्यन्तरं द्व्यङ्गुलं भवेत्  २१

हिक्कामध्यं तु सूत्रान्तं द्व्यन्तरं तु षडङ्गुलम्
तत्सूत्राद्धृदयान्तं च द्व्यन्तरं चार्धमात्रकम्  २२

तत्सूत्रान्नाभिसीमान्तं द्व्यन्तरं तु शिवाङ्गुलम्
तत्सूत्रान्मेढ्रमूलान्तं द्व्यन्तरं तु गुणाङ्गुलम्  २३

स्थानके चासने वापि स्थानकेषु विशेषतः
पार्श्वसूत्रद्वयं काये द्व्यन्तरं तदिहोच्यते  २४

तत्सूत्रादूरुमूलान्तं द्व्यन्तरं तद् द्विमात्रकम्
सूत्रं च जानुमध्यं तत्सार्धवेदाङ्गुलान्तरम्  २५

तत्सूत्राज्जङ्घयोर्मध्यं द्व्यन्तरं तु षडङ्गुलम्
सूत्रान्तं नलकान्तं स्यात्सार्धसप्ताङ्गुलं भवेत्  २६

समाङ्घ्रि स्थानकं कुर्यात् कायमृज्वायतं भवेत्
पादाङ्गुष्ठद्वयोर्मध्ये द्व्यन्तरं चाष्टमात्रकम्  २७

तलमध्यद्वयोर्मध्ये द्व्यन्तरं तु षडङ्गुलम्
तत्पार्ष्णि द्वयोर्मध्ये द्व्यन्तरं वेदमात्रकम्  २८

नलकान्तं द्वयोर्मध्ये द्व्यन्तरं तु रसाङ्गुलम्
जङ्घामध्यं द्वयोर्मध्ये द्वन्तरं तु शराङ्गुलम्  २९

जानुमध्यद्वयोर्मध्ये द्व्यन्तरं वेदमात्रकम्
ऊरुमध्यं द्व्ययोर्मध्ये द्व्यङ्गुलं चान्तरं भवेत्  ३०

ऊरुमूलद्वयोर्मध्ये शिवमात्रान्तरं भवेत्
हस्तौ च लम्बनं कुर्यात्तदन्तरमिहोच्यते ३१

श्रोराया कूर्परं पार्श्वं च द्व्यन्तरं तु षडङ्गुलम्
प्रकोष्ठात्कटयन्तरं द्व्यन्तरं च त्र्यङ्गुलम् ३२

अथवा द्व्यङ्गुलं वापि मणिबन्ध दशाङ्गुलम्
मध्याङ्गुलं च पार्श्वं च द्व्यन्तरं दशमात्रकम् ३३

एवं तु देवदेवीनां स्थानके चासनेऽपि वा
ऊर्ध्वकायसमं कुर्यात् पद्मासनविशालकम् ३४

जान्वर्ध्वात्केशपर्यन्तं तत्समं त्रिभुजाविति
मानयेज्ञानुबाह्ये तु बाहुबाह्यं तु तत्समम् ३५

बाहुजानुद्वयं चैव सव्यापसव्यं मानयेत्
मेढ्रान्तं गुल्फस्याद्यान्तं द्व्यन्तरं तु षडङ्गुलम् ३६

श्रोणिकूर्परपार्श्वे तु चान्तरं तु षडङ्गुलम्
प्रकोष्ठाग्रतलं चैव पञ्चांसौ परि विन्यस्येत् ३७

अर्धान्तस्यासनं चेत्तु एपादं प्रलम्बयेत्
तज्ञानुपार्श्वके तस्य द्व्यत्र्यङ्गुलोनमेव च ३८

तत्सूत्राल्लम्बपादादौ द्व्यन्तरं द्वादशाङ्गुलम्
सर्वेषां देवदेवीनामेवं प्रोक्तं तदासनम् ३९

पूर्वे च मध्यसूत्रं तु पृष्ठसूत्रं प्रलम्बयेत्
तदेव मौल्यग्रमध्ये मौलिमूलस्य मध्यमे ४०

तत्कृत्वाथ ककुन्मध्ये वंशमध्ये तु लम्बयेत्

जघनस्य द्वयोर्मध्ये ऊरुद्वयोश्च मध्यमे ४१

पृष्ठजानुद्वयोर्मध्ये पाणियोर्मध्ये लम्बयेत्
एवं तु वरसूत्रं स्यात्पार्श्वसूत्रमिहोच्यते ४२

कर्णयोः सुषिरमध्ये पार्श्वकायस्य मध्यमे
गुल्फस्य मध्यमे चैव पार्श्वसूत्रं प्रलम्बयेत् ४३

पिप्पलीबाह्यदेशे तु स्तनचूचुकमध्यमे
ऊरुजानु यथादेशे तर्जन्यङ्गुलमध्यमे ४४

कक्षसूत्रात्कटिपार्श्वेऽपरे साङ्गुलाष्टकम्
शक्तीनां कटिदेशे तु लम्बयेत्तु कनिष्ठके ४५

बाह्यके मध्यमे वापि कटी च पुटपार्श्वके
एवं तु कार्यसूत्रं स्याल्लम्बयेच्छिल्पिवित्तमः ४६

परहस्तपार्श्वयोः सूत्रं मानयेज्ञानुपार्श्वकम्
सर्वाङ्गं च ऋजुं कुर्यात्पूर्वापर योजयेत् ४७

ऋज्वाङ्गकभावं सामान्यमिति विद्यते
सर्वेषां देवदेवीनां भङ्गमानमिहोच्यते ४८

आभङ्गं समभङ्गं च अतिभङ्गं त्रिधा भवेत्
त्रिचतुष्पञ्चमात्रं स्यात्तुङ्गमानमिति क्रमात् ४९

उष्णीषमध्यमे चैव ललाटं चैव मध्यमे
नासिकाग्रस्य मध्ये तु हिक्का यथोक्तपार्श्वके ५०

यथोक्तचूचुकस्यान्तं नाभिपार्श्वे यथोक्तवत्
यथोक्तश्चोरुगुल्फस्य पार्श्वसूत्रं प्रलम्बयेत् ५१

एवमाभङ्गसूत्रं स्यात् समभङ्गमिहोच्यते
उष्णीषात् तु यथापार्श्वे ललाटस्य तु पार्श्वके ५२

यत्तत्पुटपार्श्वे तु स्तनचूचुकमध्यमे
नाभिश्चोरुस्तथा जङ्घा यथोक्तं गुल्फपार्श्वके ५३

एवं तु लम्बयेत्सूत्रं समभङ्गमिति स्मृतम्
उष्णीषात् पूर्वपर्श्वे तु यथोक्तं नेत्रमध्यमे ५४

स्तनपार्श्वे चोरुमध्ये जानुजङ्घा मध्यतः
तद् गुल्फात्तयोर्द्वयोर्मध्ये द्व्यन्तरं तु गुणाङ्गुलम् ५५

जानुद्वयोरन्तरं चाष्टमात्रं युक्त्या प्रयोजयेत्
ऊरुमूलद्वयोर्मध्ये द्व्यन्तरं द्व्यर्धमात्रकम् ५६

अङ्गुष्ठाग्रं द्वयोर्मध्यं द्व्यन्तरं द्वादशाङ्गुलम्
आभङ्गान्तरं प्रोक्तं समभङ्गमिहोच्यते ५७

तत्पादाङ्गुष्ठद्वयोर्मध्ये द्व्यन्तरं षोडशाङ्गुलम्
पाष्ण्यर्न्तरं चतुर्मात्रं दशाङ्गुलं जानुकान्तकम् ५८

ऊरुमूलद्वयोर्मध्ये द्व्यन्तरं त्वङ्गुलं भवेत्
एवं तु समभङ्गं स्यादतिभङ्गमिहोच्यते ५९

पाष्ण्यर्न्तरं शराङ्गुल्यं तत्पादाङ्गुष्ठयोरग्रके
तद्द्वयोर्मध्यमे विंशदङ्गुल्यं द्व्यन्तरं भवेत् ६०

तज्जानुद्वयोर्मध्ये द्व्यन्तरं द्वादशाङ्गुलम्
ऊरुमूलद्वयोर्मध्ये सार्धद्व्यङ्गुलकान्तकम् ६१

एवमतिभङ्गं स्यादेतानि युक्तितो न्यसेत्

एवं त्रिभङ्गसूत्रं तु द्व्यन्तरं मानमुच्यते ६२

सूत्रात्तु तल्ललाटान्तं द्व्यन्तरं च द्विमात्रकम्
तत्सूत्राज्ज्ञानुकान्तं च द्व्यन्तरं तु षडङ्गुलम् ६३

तत्सूत्रात् हृदयान्तं च द्व्यन्तरं चाङ्गुलं भवेत्
तत्सूत्रान्नाभिसीमान्तमध्यर्धाङ्गुलकान्तकम् ६४

तत्सूत्रान्मेढ्रसीमान्तं द्व्यन्तरं तु गुणांशकम्
तत्सूत्रादूरुमध्ये तु द्व्यन्तरं च द्विमात्रकम् ६५

तत्सूत्राज्ज्ञानुकान्तं स्याद् रसमात्रान्तरं भवेत्
तत्सूत्रं नलकान्तं स्याद् द्व्यन्तरं चाष्टमात्रकम् ६६

स्थितपादान्तरे चैव कुर्यात्तु वर्धकिस्तथा
नासाग्रे कुक्षिदेशे सूत्रं तु स्पर्शनं भवेत् ६७

शक्तीनां कुक्षिदेशे तु एकाङ्गुलान्तरं तु वा
शक्तीनां पुष्पहस्तं तु स्तनान्तं कटकाग्रकम् ६८

तदङ्गुष्ठावसनान्तं च द्व्यन्तरं चतुरङ्गुलम्
तच्छ्रोण्या कूर्परान्तं तु द्व्यन्तरं षडङ्गुलम् ६९

अंसादालम्बनं हस्तं द्व्यन्तरं पूर्ववद् भवेत्
तत्तद् विचिह्नवर्णादिभूषणाद्यैरलङ्कृतम् ७०

सर्वेषां वास्तुवस्तूनि प्रतिमादि यथोक्तवत्
कारयेत्सर्वसम्पत्त्यै भुक्तिमुक्तिफलप्रदम् ७१

अज्ञानाद् वास्तुवस्त्वादि विपरीतं चेद् विपत्करम्
तस्मात्परिहरेद् विद्वान्यथा पूर्वोक्तं सर्वतः ७२

एवं प्रोक्तं वास्तुवास्त्वादि हर्म्यैः
प्राकाराद्यैर्मण्डपाद्यैश्च शाला
भूपालाङ्गं भूपतीनां च लिङ्गैर्देवादीनां कारयेत्संपदार्थम्  ७३
इति मानसारे वास्तुशास्त्रे प्रतिमाधिकारे प्रलम्बलक्षणविधानं नाम
सप्तषष्टितमोऽध्यायः

## मधूच्छिष्टविधानम्

बिम्बानां तु मधूच्छिष्टं क्रियां सम्यग् वक्ष्यतेऽधुना
शैवं पाशुपतं चैव कालामुखं महाव्रतम्  १

वामं च भैरभं चैव तन्त्रवत् ज्योतिः षट्क्रमात्
अगस्त्यः काश्यपश्चैव भृगुगौतमभार्गवाः  २

गालव इति ऋषयः प्रोक्ताः कर्षणाद्यर्चनार्थकम्
तत्तत्तन्त्रवशात्सर्वं कुर्यात् षट् सम्पदास्पदम्  ३

तत्तत्तन्त्रविपरीतं चेद् विपत्यं नित्यमावहेत्
अनुक्तं तत्र तन्त्रैस्तु ग्राह्यं दोषो न विद्यते  ४

विश्वकर्मा च विश्वेच विश्वसारं प्रबोधकः
वृतश्चैव मयश्चैव त्वष्टा चैव मनुर्नलः  ५

मानविन्मानकल्पश्च मानसारो बहुश्रुतः
प्रष्टा च मानबोधश्च विश्वबोधो नायश्च तथा  ६

आदिसारो विशालश्च विश्वकाश्यप एव च
वास्तुवोधो महातन्त्रो वास्तुविद्यापतिस्तथा  ७

पाराशरीयकश्चैव कालयूपो महाऋषिः
चैत्याख्यः चित्रकः आवर्यः साधकसारसंहितः  ८

भानुश्चेन्द्रश्च लोकज्ञः सौराख्यः शिल्पिवित्तमः
तदेव ऋषयः प्रोक्ता द्वात्रिंशतिः संख्यया ९

तान् गोत्रवशाज्ज्ञात्वा शिल्पि सर्वत्रयोग्यकम्
शुक्लपक्षेऽथवा कृष्णे सर्वमासेषु कारयेत् १०

शुभयोगे सुनक्षत्रे सुमुहूर्ते सुलग्नके
मन्त्रवत्कारयेद् गर्धं स्थपतिस्थापकावुभौ ११

मधूच्छिष्टं योजयेच्छिल्पी शास्त्रं कारयेत्क्रमात्
यथारूपं तथा ध्यात्वा स्थपत्याद्यैश्च वर्धकी १२

यन्मधूच्छिष्टबिम्बस्य पञ्चवर्णैरलङ्कृतम्
क्षणिकाबेरमेवोक्तं चलं चाप्यचलं तथा १३

तस्मात्सर्वप्रयत्नेन तत्रदोषो न विद्यते
अक्षैः स्फटिकसंयुक्तं लूतभाजनमेव च १४

हस्तेन सर्वविम्बानां ताम्रपत्रेण योजयेत्
अथवा पक्षकानां तु पक्षमूलेन विन्यसेत् १५

नखास्सर्वेषु पादौ च संयुक्तं तु मृगेण च
अथवा शिखशल्यं स्याद् भूषणं च विशेषतः १६

स्फटिकैः रत्नसंयुक्तं जीनपात्रेण विन्यसेत्
अमूकद्रुमसर्वेषां युक्त्या वर्णं समाश्रितम् १७

दारुकीलैश्च बिम्बानां यत्फलार्थं तु योजयेत्
आद्रवद्रव्यस्माद् दोषमेवं न विद्यते १८

सर्वालङ्कारसंयुक्तं बेरं ग्रामप्रदक्षिणम्

यजमानादि संवेक्ष्य सेव्यं तत्रार्चनं भवेत् १९

तस्माद् देवतार्थं संग्राह्य चान्यग्रामे विलासयेत्
पश्चात्तु शिल्पिशालाश्च बेरमेवं प्रशस्यते २०

मानोन्मानप्रमाणेन शोभयेच्छिल्पिवित्तमः
द्वित्र्यङ्गुलाधिकं वाथ मधूच्छिष्टेन लेपयेत् २१

तदूर्ध्वे मृत्तिकां लेप्य शोषयेत्तद् विचक्षणैः
तत् पिण्डमुत्तापयेद्वा मधूच्छिष्टोद्भवैः पुनः २२

कर्तुरिच्छा यथा लोहैर्घृतः एतत्प्रविश्यति
पूर्णयेज्जलं संप्रोक्ष्य त्यक्त्वा तदर्धमृत्तिकः २३

बिम्बं सर्वाङ्गं संशोध्य श्वेतगन्धानुलेपयेत्
तत्पीठोपरि संस्थाप्य पुष्पमालैरलङ्कृतम् २४

ग्रामं प्रदक्षिणं कुर्यात्सर्वमङ्गलघोषणैः
शिल्पिशालां प्रविश्य कारयेदुक्तवत्क्रमात् २५

तस्योपाङ्गविहीनं चेत्पुनः सन्तानकं भवेत्
शिरो वा मध्यकाये वा हीनं चेद् विसृजेत्पुनः २६

कर्तृशिल्प्यचलं चित्तं कारयेत्पूर्ववद् भवेत्
चलं चित्तं न कुर्याच्चेत्स्थाननाशं धनक्षयम् २७

अनेकजन्मकृतं पुण्यं क्षिप्रमेवं विनश्यति
तस्मात्सर्वप्रयत्नेन पुतश्च कारयेत्सुधीः २८

इति मानसारे वास्तुशास्त्रे मधूच्छिष्टविधानं नाम अष्टषष्टितमोऽध्यायः

## अङ्गदूषणविधानम्

आलयाद्यङ्गसर्वेषु हीनाधिक्यं भवेद्यदि
राजराष्ट्रादिकर्तॄणां दोषप्राप्तिरिहोच्यते १

विस्तारे च समुत्सेधे उपाने च मसूरके
पादे च प्रस्तरे चैव वेदिकायां गले तथा २

शिखरे स्तूपिकायाश्च नासिकापञ्जरादिभिः
द्वारे च भद्रदेशे च मृणालादिषु देशके ३

गर्भगेहे तले सर्वे सोपानादिषु सालके
गोपुरैः मण्डपाद्यैः च चान्तराले त्वलिन्द्रके ४

प्रच्छादने प्रपाङ्गे च उपप्रान्ते तथोत्तरे
भित्तिदेशे च भागे च सर्वाङ्गे च न दोषयुक् ५

तस्मात्तु दोषसंप्राप्तिः शिल्पिदृष्टानि वारयेत्
विस्तारे न्यूनं तत्मात्तु कर्तृदारिद्र्यमावहेत् ६

तद्धूयोधिकमानं चेद् दारानाशो भवेद् ध्रुवम्
आदितुङ्गविहीनं चेत्कर्तृव्याधिमतो विदुः ७

तदेवाधिकमानं चेच्छत्रुवृद्धिर्न संशयः
अन्तर्जन्म बहिर्जन्म निम्नमुन्नतया स्थितम् ८

निर्वंशमेव तत्सर्वं कर्तृवंशं भवेद् ध्रुवम्
तज्जन्मदेशमार्गे च निम्नोन्नतमथापि ते ९

निर्गमोद्गमने वापि पुत्रनाशमवाप्नुयात्
अधिष्ठानोत्तुङ्गहीनं स्यात्स्थाननाशं धनक्षयम् १०

वप्रादिवर्गसर्वेषु तन्मार्गे निम्नमुन्नतम्

कर्तृणां क्षयरोगः स्यात्तुङ्गेन करणेन च ११

पादतुङ्गाधिकं हीनं गोत्रनाशं कुलक्षयम्
प्रस्तरोत्तुङ्गहीनं चेद् विनश्योत्तत्क्षणादेव १२

तदेवाधिकं मानं चेत् प्रमाणं कर्तृनाशनम्
वेदिकायां विहीनं चेत् कर्तुर्दृष्टिर्दीनं व्रजेत् १३

तत्कर्णेऽधिकहीनं चेद् भोजनेन विनाशनम्
शिखराङ्गाधिकं हीनं कर्तुः स्यात्स्फोटनं शिरः १४

स्तूपिकमधिकं हीनं चेज्जनानां तु दरिद्रकम्
नासिकाङ्गमधिकं हीनं चेत् कर्तृरोगं भविष्यति १५

पञ्जराद्यङ्गं हीनं चेदधिकं श्रीविनाशनम्
द्वारे च भद्रदेशे च मानहीनाधिकं तु चेत् १६

महारोगं भवेत्कर्तू राजाराष्ट्रं विनश्यति
मृणाल्यधिकहीनं चेत् कुक्षिरोगो भवेद् ध्रुवम् १७

जालकाधिकहीनं स्यात् श्रीहीनमर्थनाशनम्
शुद्धगर्भगृहमाधिक्यं हीनं चेद् ग्रामनाशनम् १८

हर्म्यजन्म समारभ्य सालजन्म प्रदेशकम्
उत्तमं मानयेन्मानं जालस्योन्नतनिम्नकम् १९

समन्ततो निम्नत्वमुन्नतत्वं प्रकारयेत्
कृतमज्ञानतो वस्तु सर्वसंपद्विनाशनम् २०

प्राकारान्तप्रदेशं स्यात्परिवारालयादिकम्
सालजन्मसमं चैव धाम्नोजन्मसमं तु वा २१

अथवा विपरीतं चेज्जनानां संपदं हरेत्
सोपानमधिकं हीनं कर्ता पङ्गुर्भवेद् ध्रुवम् २२

सालाङ्गमधिकं हीनं चेच्चौरैरर्थं विनश्यति
गोपुराङ्गमधिकं हीनं सर्वनाशं न संशयः २३

मण्डपादि सभाशाला तत्तन्नयूनाधिकं तु चेत्
सर्वसंपद्विनाशाय राजा राष्ट्रं विनश्यति २४

अन्तर त्वलिन्द्रं वा हीनाधिक्यं प्रमाणकम्
कर्तृणां परिवारादि पुत्रपौत्रविनाशनम् २५

ऊर्ध्वतालस्य चाङ्गेषु मानं हीनाधिकं तु चेत्
लोके भवेत्त्वनावृष्टिः स्वयं वृष्ट्या विनश्यति २६

प्रपाङ्गमधिकहीनं चेल्लोके दारिद्रमावहेत्
लुपमानमधिकं हीनं सज्जनेन च प्रविनश्यति २७

अन्तश्चैव बहिश्चैव विपरीतोत्तरं तु चेत्
विद्यावृद्धिविनाशं स्याद् बन्धुनाशं भवेत् ध्रुवम् २८

कुड्याङ्गमधिकहीनं चेद् विस्तारे चोदयेऽपिवा
द्विजातिसर्ववर्णानां सर्वनाशकरं भवेत् २९

भित्तिश्रोण्यधिकं हीनं स्थाननाशं धनक्षयम्
तत्रहीनाधिकं चेत्पादस्थानाङ्घ्रिकाश्रयम् ३०

सर्वेषां भित्तिमानेषु तत्र दोषो न विद्यते
पादस्थानं विना भित्तिं सर्वदोषसमुद्भवम् ३१

यत्तद्वास्तु यथा कुर्यात्तत्तदंशाधिकाङ्घ्रिकान्

तथाङ्घ्रियोरन्यथा स्यात्तु पुत्रपौत्रविनाशनम् ३२

उक्तवत्स्यादङ्घ्रिकांशं च कुर्यात्तच्छुभदं सदा
ऊहापोहादिकीर्तिभ्यां शास्त्रोक्ते तु यदा तथा ३३

उहि हीना चोक्तहीनात्मधि कर्तृ विनश्यति
तस्मात्तु शिल्पिविद्बद्भिः परिग्रहोक्तवत्कुरु ३४

अङ्गहीनाधिकं दोषमेवमुक्तं पुरातनैः ३५

प्रासाद मराडप तथावरुणादिदेशे
साङ्गे च गोपुरपदे त्वपरेषु सर्वे
दोषाधिकं यदि भवेत्त्वथवा गुणाधिकम्
तन्मर्त्यदेवनृपतिष्वपि तत्फलं स्यात् ३६

इति मानसारे वास्तुशास्त्रे अङ्गदूषणविधानं नाम ऊनसप्ततितमोऽध्यायः

## नयनोन्मीलनलक्षणम्

देवानामपि देवीनां भक्तानां नेत्रमोक्षणम्
लिङ्गानां लक्षणोद्धारं वस्त्वादीनां यथाक्रमम् १

स्थपतिः प्रकृतिः प्रोक्तः स्थापको जीवमिष्यते
तस्मात्क्रियारम्भतः सह कुर्यात्तु संसदा २

एवं विधाय चान्येन वस्त्वादय कृतान्यपि
वस्तोवास्तोस्तु हानिः कर्तृनाशं भवेद् ध्रुवम् ३

किं सृजेन्नयनोन्मेषमन्धकारानुपत्तये
उदिते तु सहस्रांशौ यथा गच्छति समन्ततः ४

तथैवमस्तमानादि लोचनस्य जनस्य च
अन्तर्बहिश्च रागश्च अर्थनाशं न संशयः ५

अकृत्वा नयनोन्मोक्षं चक्षूरोगो भवेद् ध्रुवम्
तस्मात्तु नयनोन्मोक्षलक्षणं वक्ष्यतेऽधुना ६

हर्म्ये वा मण्डपे वापि स्थपतिस्थापकावुभौ
स्थापनात्पूर्वके कुर्यादुक्तवदङ्कुरार्पणम् ७

पश्चात्तु सुमुहूर्ते च कुर्यान्नयनमोक्षणम्
प्रासादाभिमुखे चैव चोत्तरे वाथ दक्षिणे ८

नयनोन्मीलनं यागमण्डपं कल्पयेत्सुधीः
नवहस्तं सप्तहस्तं पञ्चहस्तमथापि वा ९

चतुरश्रसमाकारं षोडशस्तम्भमेव च
द्वादशस्तम्भमेवं वा कूटं वाथ प्रपाङ्गकम् १०

चतुर्दिक्षु चतुर्द्वारं चतुस्तोरणसंयुतम्
तन्मण्डपस्य मध्ये तु वेदिं कुर्यात्तु चोक्तवत् ११

तदग्रे चाग्निकुण्डं स्याद् गोमयालेपनं भवेत्
विधानध्वजसंयुक्तं नानावस्त्रेण संयुतम् १२

पादानां समलङ्कृत्य कदली फलैर्युतम्
परितश्चोर्ध्वदेशे तु रम्भामाल्यैरलङ्कृतम् १३

पुष्पमाल्यैरलङ्कृत्य रत्नैःसर्वैरलङ्कृतम्
पश्चात्तु शिल्पिभिः प्राज्ञाः कुर्यात् नयनमोक्षणम् १४

वेदिकापश्चिमे वाथ दक्षिणे वाथ नैर्ऋते
कल्पयेत्स्थण्डिलं वाथ दारु पीठमथापि वा १५

तदूर्ध्वे स्थापयेद् बिम्बं सकूर्चाद्यैरलङ्कृतम्

तत्पूर्वे शुद्धमाल्येन स्थरिडलं मराडलं न्यसेत् १६

तदूर्ध्वे स्थापयेद्धेमपात्रे नैर्ऋृत्य पूरितम्
न्नौमेणाच्छादनं कुर्यादन्तः कूर्चैरलङ्कृतम् १७

वेदिकोपरि शाल्येन कुर्यान्मराडलं बुधः
पञ्चविंशत्पदं वाथ कल्पयेत्पीठमेव वा १८

दर्भैरास्तीर्य पश्चात्तु शुद्धतराडुलरेखया
नानापुष्पैश्च लाजैश्च प्रोन्नयेच्छोभनार्थकम् १९

नवकुम्भे नवैर्वापि पञ्चविंशतिरेव वा
विधिवत्न्नालयेत्सर्वसूत्रैरावेष्टनं भवेत् २०

शुद्धतोयेन संपूर्य वेदिकोपरि विन्यसेत्
मध्ये प्रधानकुम्भः स्यादन्ये क्रमात्समन्ततः २१

सर्ववस्त्रैश्च सम्वेष्ट्य सकूर्चाद्यप्रपल्लवान्
सविधानफलं चैव पुष्पमाल्यैरलङ्कृतम् २२

उपवेद्युपरि स्थाप्य चोक्तवञ्चाष्टमङ्गलम्
पश्चात्तु शिल्पिभिः प्राज्ञैः पादप्रन्नालनं कुरु २३

विध्युक्ताचमनं कुर्यात्सकलीकरणं क्रमात्
पुरायाहं वाचयित्वा तु प्रोन्नयेत्प्रतिमादिकम् २४

ब्राह्मादीनां च देवानां तत्तत्स्वनाममन्त्रकैः
प्रणवादिनमोऽन्तेन क्रमादाराधयेत्पुनः २५

धूपदीपं ददेत्प्राज्ञो मध्यकुम्भस्य मध्यमे
आराध्य गन्धपुष्पैश्च भुवनादिपतिं जपेत् २६

घृतगुलशस्यदधि क्षीरान्नं वा निवेदयेत्
धूपदीपम् ददेत्ताम्बुलादि निवेदयेत्  २७

दर्शयेद्धेनुमुद्रादीन् गीतादीन् नृत्तघोषणैः
तदग्रे स्थपतिः प्राज्ञो होमं कुर्यात्ततः क्रमात्  २८

समिदाज्यचरुं लाजप्रत्येकमष्टोत्तरशताहुतिः
शुद्धतोयेन सङ्ख्याया पञ्चविंशतिरेव वा  २९

हृल्लेखं बीजम्मुच्चार्य स्वाहान्तं प्रणवान्तकम्
बिम्बं गायत्रिमन्त्रेण पूर्णाहुतिं च कारयेत्  ३०

अग्निकार्यावसाने तु विधिवद् बिम्बमाश्रयेत्
पुण्याहं वाचयित्वा तु ब्राह्मणैः सह घोषणैः  ३१

रत्नशुद्धिं ततः कुर्याद् गन्धपुष्पैरवार्चयेत्
स्थपतिः प्रोक्षयेद् बिम्बं सर्वमङ्गलघोषणैः  ३२

धूपदीपं दधेत् पश्चाद् बिम्बं गायत्रीमन्त्रतः
आराध्य गन्धपुष्पैश्च धेनुमुद्रां प्रदर्शयेत्  ३३

नववस्त्रेण गोप्याङ्गं बिम्बस्य नेत्रमालिखेत्
सर्वान्दक्षिणशास्त्रेण स्पर्शयेत्त्वेकचित्तवत्  ३४

अक्षिरेखां समालिख्य सव्येऽक्षि कृष्णमण्डलम्
ज्योतिर्मण्डलकं ध्यात्वा सौरमन्त्रं समुच्चरेत्  ३५

पश्चात्तु वामनेत्रे तु शशिमन्त्रं समुच्चरेत्
ललाटे लोचनं लेख्य अग्निबीजं समुच्चरेत्  ३६

पश्चात्तु स्वर्णलिप्येन पयसाज्येन लेपयेत्

ततः प्रच्छादनं कुर्याद् वत्साङ्ककनकैः सह ३७

पायसं धनधान्यादिराशिं दर्शयेत्पुनः
स्थपतिर्वरवेषाढ्यः प्राप्तपञ्चाङ्गभूषणः ३८

श्वेतानुलेपनं लिप्य नववस्त्रोत्तरीयवान्
स्वर्णयज्ञोपवीतश्च शितपुष्पशिवा शुचिः ३९

स्वमूर्तिसव्यं चास्ये व मूलकुम्भं तथोत्तरे
अन्यकुम्भानि सर्वाणि धारयेत् परिचारकैः ४०

छत्रचामरसंयुक्तं सर्वमङ्गलघोषणैः
हर्म्यप्रदक्षिणं कुर्यात्स्वाध्यायघोषणैः सह ४१

तद्बिम्बं च समाश्रित्य सजलेनाभिषेचयेत्
अन्येन सर्वकुम्भानां जलेनोपाङ्गादि पूजयेत् ४२

एवं कुम्भान्परिक्षिप्य तत्तत्सूत्रं समुच्चरेत्
नानावस्त्रेण संयुक्तं नानापुष्पैरलङ्कृतम् ४३

गन्धानुलेपनालिप्य सर्वाभरणभूषितम्
धूपदीपं ददेत् पश्चान्नृत्तगीतादिघोषणैः ४४

मूर्धादिप्राणपर्यन्तं मातृकाक्षरं न्यसेत्
पादादि मूर्धपर्यन्तं पर्यायादि साक्षरं न्यसेत् ४५

अष्टत्रिंशत्कलाः सर्वे तत्तदङ्गानि विन्यसेत्
अङ्गपादैः करैर्वक्त्रं करणानि च विन्यसेत् ४६

पश्चात्तु मूलमन्त्रेण समध्यानपरायणम्
आराध्य गन्धपुष्पैश्च धूपदीपं दधेत्पुनः ४७

पश्चात्तु ताम्बुलादीनि नैवेद्यानिं निवेदयेत्
ब्राह्मणैश्चाक्षतैः प्रोक्ष्य कुर्यात्तु स्वस्तिघोषणैः ४८

नृत्तगीतादिमुद्रैश्च दर्शयेच्छिल्पिवित्तमः
नयनोन्मीलनं प्रोक्तं पश्चाद् ग्रामप्रदक्षिणम् ४९

लक्षणोद्धारमेवोक्तमुक्तवद् रेखया लिखेत्
प्रतिमां लोहजं प्रोक्तं तथा रत्नं तु विन्यसेत् ५०

शिलालिङ्गं तु बिम्बानां यत्तत्कर्मावसानके
स्थापनात्पूर्वके रत्नं विन्यासं कारयेद् बुधः ५१

पीठं तस्य च मध्ये तु नवकोष्ठं प्रकल्पयेत्
पद्मरागं तु तन्मध्ये वज्रं चेन्द्रवद् न्यसेत् ५२

प्रवालं चाग्निकोष्ठे तु महानीलं यमे तथा
वैदूर्यं न्यसेन्नैर्ऋत्ये मरतकं पश्चिमे तथा ५३

वायव्ये पुष्परागं च मौक्तिकं तु कुबेरके
इन्द्रनीलं तु ईशे तु विन्यसेत् विधिवित्तमः ५४

स्थपतिः स्थापकश्चोभौ स्थापयेद् बिम्बलिङ्गकम्
एवं तु रत्नविन्यासं शेषमङ्गं यथोक्तवत् ५५

हृदयकमलमध्ये दीपवत्तत्परं स्यात्
कमलजहरिहरादिदेवतानां च सर्वम् ५६

विधिमिह सकलरूपं च चक्षुरुन्मीलनं च
कृतिमिति रखिलमुक्तं मानसारं पुराणैः ५७

पितामहेन्द्रप्रमुखैः समस्तैः

देवैरिदं शास्त्रवरं पुरोदितम्
तस्मात्समुद्धृत्य हि मानसारम्
शास्त्रं कृतम् लोकहितार्थमेतत् ५८

इति मानसारे वास्तुशास्त्रे नयनोन्मीलनलक्षणविधानं नाम सप्ततितमोऽध्यायः

मानसारं संपूर्णम्

Reference:
Prasanna Kumar Acharya, *Manasara on Architecture and Sculpture*, (Delhi: Low Price Publications, 1995) originally published in 1934.